| छन्दः | गायत्री | | उष्णिग् | अनुष्टुब् | बृहती | पङ्क्तिः | त्रिष्टुब् | जगती |
|---|---|---|---|---|---|---|---|---|
| आर्षी | = | =२४ | =२८ | =३२ | =३६ | =४० | =४४ | =४८ |
| दैवी | ३ | १ | २ | ३ | ४ | ५ | ६ | ७ |
| आसुरी | २ | १५ | १४ | १३ | १२ | ११ | १० | ९ |
| प्राजापत्या | १ | ८ | १२ | १६ | २० | २४ | २८ | ३२ |
| याजुषी | १ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| साम्नी | २ | १२ | १४ | १६ | १८ | २० | २२ | २४ |
| आर्ची | ३ | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ |
| ब्राह्मी | = | =३६ | =४२ | =४८ | =५४ | =६० | =६६ | =७२ |

**।। इति भट्टहलायुधकृतायां छन्दोवृत्तौ द्वितीयोऽध्यायः ।।**

---

(१५) आसुरी ०
(१६) आसुरी भुरिक्, आर्ची विराट्
(१७) आसुरी स्वराट्, निचृत्
(१८) आर्ची ०
(१९) आर्ची भुरिक्
(२०) आर्ची स्वराट्
(२१) पादनिचृत् ०
(२२) आर्षी विराट्
(२३) आर्षी निचृत्
(२४) आर्षी ०
(२५) आर्षी भुरिक्
(२६) आर्षी स्वराट्
(३४) ब्राह्मी विराट्
(३५) ब्राह्मी निचृत्
(३६) ब्राह्मी ०
(३७) ब्राह्मी भुरिक्
(३८) ब्राह्मी स्वराट्

उष्णिगादिच्छन्दसामप्यनया रीत्याक्षरसंख्योहनीया। एवमेवाथर्ववेदोक्तमन्त्रेष्वपि छन्दःसमाधानमूह्यम्।

**शिवप्रसादिनी**—यहाँ ''तिस्रस्तिस्रः'' की अनुवृत्ति होती है। प्राजापत्या गायत्री, आसुरी गायत्री एवं दैवी गायत्री इन तीनों को परस्पर मिला देने पर (२४) अक्षरों वाला एक आर्षी गायत्री छन्द होता है। प्राजापत्या उष्णिक्, आसुरी उष्णिक् एवं दैवी उष्णिक् इन तीनों को आपस में मिलाने पर अठाईस अक्षरों वाला (२८) आर्षी उष्णिक् छन्द होता है। इसी प्रकार अनुष्टुप् आदि स्थलों में भी समझना चाहिए। इसका विस्तारपूर्वक कथन तो इस प्रकार है—

प्राजापत्या, आसुरी और दैवी गायत्री मिलकर २४ अक्षरों वाला एक ''आर्षी गायत्री'' बनती है। प्राजापत्या आसुरी और दैवी उष्णिक् परस्पर मिलकर २८ अक्षरों वाली एक ''आर्षी' उष्णिक्'' का निर्माण करती है। इसी प्रकार प्राजापत्या, आसुरी एवं दैवी अनुष्टुप् को परस्पर मिलाने से ३२ अक्षरों वाला एक ''आर्षी अनुष्टुप्'' प्राप्त होता है। प्राजापत्या, आसुरी तथा दैवी बृहती तीनों को मिलाने पर ३६ अक्षरों वाला एक ''आर्षी बृहती'' बनता है।

प्राजपत्या, आसुरी और दैवी पंक्ति को आपस में मिलाने पर ४० अक्षरों वाले ४० अक्षरों की ''आर्षी पंक्ति'' बनती है। प्राजापत्या, आसुरी एवं दैवी त्रिष्टुप् का संयोग ४४ अक्षरों वाले एक ''आर्षी त्रिष्टुप्'' का निर्माण करता है और प्राजापत्या आसुरी एवं दैवी जगती एकत्रित होकर ४८ अक्षरों वाले एक ''आर्षी जगती'' का उद्भव करती है।

उस मंडल की प्रथम पंक्ति के प्रथम कोष्ठक में ''आर्षी'' यह नाम लिखकर द्वितीय कोष्ठक में (२४), तृतीय में (२८), चतुर्थ में (३२), पञ्चम में (३६), षष्ठ में (४०), तथा अष्टम में (४८) अंक स्थापन करना चाहिए। सुस्पष्टाऽर्थ नीचे का तालिका देखें—

| छन्दः | गायत्री | उष्णिग् | अनुष्टुप् | बृहती | पङ्क्तिः | त्रिष्टुप् | जगती |
|---|---|---|---|---|---|---|---|
| आर्षी | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ |

इससे सम्बन्धित बृहद् तालिका वृत्तिकार द्वारा प्रदर्शित प्रकृत सूत्र की वृत्तिग्रन्थ के अन्त में दी गयी है, कृपया उसको ध्यान से देखने का प्रयास करें ।।१६।।

।। इति सांख्य-योग-न्याय-वैशेषिक-पद-वाक्य-पारावारीणेन मैथिलपण्डित-चित्तनारायणपाठकाऽऽह्वयेन कृतायां पिङ्गलछन्दः शास्त्रीय-शिवप्रसादिनीव्याख्यायां द्वितीयोऽध्यायः ।।

## तृतीयोऽध्यायः

(इससे पूर्व द्वितीय अध्याय में आर्षी-दैवी आदि भेद से आठ प्रकार के गायत्री आदि छन्दों के अक्षरों को कह करके, इस तृतीयाऽध्याय के आरम्भ में पुनः उन्हीं गायत्री आदि छन्दों के पादव्यवस्था को प्रकाशित करने के लिए भूमिका रची जा रही है—)

### पादः ।३।१।।

**मृतसञ्जीवनी**—अधिकारोऽयमाध्यायपरिसमाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यामस्तत् 'पादः' इत्यधिकृतं वेदितव्यम् । वक्ष्यति च—'गायत्र्या वसवः' (पि०सू० ३।३) इति ।।

**शिवप्रसादिनी**—यहाँ से आरम्भ होकर तृतीयाऽध्याय की समाप्तिपर्यन्त "पादः" इस सूत्र का अधिकार चलेगा । अर्थात् यहाँ से आगे प्रकृत अध्याय की समाप्ति तक जितने भी कार्य विधायक सूत्र होगें, उन सभी में विहित संख्या विधान स्वरूप कार्य, वह गायत्री आदि छन्दों के पाद में ही हो । यथा—अभी-अभी आने वाला "गायत्र्या वसवः" (पि०सू० ३।३) यह सूत्र है । यहाँ पर "पादः" पद की अनुवृत्ति होगी, और अनुवृत्त पादशब्द "गायत्र्याः" के आगे उपस्थित होगा, जिससे सूत्राऽर्थ का स्वरूप होगा—गायत्री छन्द का पाद, वसवः = आठ प्रकार के गुरु-लघु सञ्ज्ञक अक्षरों वाला होता है ।।१।।

(प्रत्येक पाद में होने वाली अक्षर संख्या की न्यूनता में उसकी पूर्ति के लिए नियम विशेषाऽऽत्मक परिभाषा को अग्रिम सूत्र में प्रकाशित की जा रही है—)

### इयादिपूरणः ।३।२।।

**मृतसञ्जीवनी**—'पादः' इत्यनुवर्तते । इयादिः पूरणो यस्य स इयादिपूरणः । आदि-करणेन [१]उवादयोऽपि गृह्यन्ते । तत्रायमर्थः—यत्र गायत्र्यादिच्छन्दसि पादस्याक्षरसंख्या न

---

(१) 'उवादयः' इत्यादिशब्देन यण्संयोगसवर्णदीर्घगुणवृद्धिव्यूहादयो गृह्यन्ते । तथा च **शौनकः**—'व्यूहेदेकाक्षरीभावान् पादेषूनेषु सम्पदे । क्षैप्रवर्णांश्च संयोगान् व्येवयात्सदृशैः स्वरैः ।।' (ऋ०प्रा० १७।३६।३७) इति । सर्वानुक्रमणिकाकारोऽपि (१।३)—'पादपूरणार्थं तु क्षैप्रसंयोगैकाक्षरीभावान् व्यूहेत्' । अत्रैतद्भाष्यकारश्च 'क्षैप्रसंयोगो यकारवकारसंयोगः, यण्संयोग इत्यन्ये, कुत एतत्? यण् हि क्षिप्रं भवति इति क्षैप्रः । दध्यत्रेत्यादावेकमात्रामर्धमात्रां करोतीति । 'एकः पूर्वपरयोः' (पा०सू० ६।१।८४) इत्यधिकारसंपन्नः संधिरेकाक्षरीभावः (तत्र द्वे अक्षरे एकाक्षरीक्रियेते इति । तत्र यणव्यूहो यथा—**'दिवस्पृथिव्याः पर्योज उद्धृतं'** (ऋ.सं. ४।७।३५।२) **'नि नो होता**

पूर्यते, तत्रेयादिभिः पूरयितव्या । तथा—'**तत्सवितुर्वरेणियम्**' (ऋ० सं० ३।४।१०।५) '**दिवं गच्छ सुवः पत**' (यजु० १२।४) इत्यादयः ॥

**शिवप्रसादिनी**—यहाँ पाद की अनुवृत्ति आती है । इय् आदि पूर्ण होता है, जिस-जिस गायत्री आदि के पाद की, वह "इयादिपूरणः" शब्द से कहा जाता है । इयादि में आदिपद से उव्, यण्, संयोग, सवर्ण दीर्घ, गुण, वृद्धि, व्यूह (= विग्रह) आदि का ग्रहण किया जाता है । इस प्रकार सूत्राऽर्थक परिष्कृत स्वरूप होगा–जहाँ पर गायत्री आदि छन्दों में पाद की अक्षर संख्या पूर्ण नहीं होती है, वहाँ पर अक्षर संख्या की पूर्ति के लिए इय्, उव् आदि का अध्याहार किया जाना चाहिए । यथा—"तत्सवितुर्वरेण्यम्" (ऋ०सं० ३।४।१०।५) यहाँ पर गायत्री छन्द के पाद में अष्ट अक्षर के स्थान में केवल सप्त अक्षर ही उपलब्ध हो रहा है, अतः यहाँ की संख्या पूर्ति के लिए "इय्" का अध्याहार करके "ततसवितुर्वरेणियम्" इस प्रकार से पाद के स्वरूप का निर्धारण किया जाना चाहिए ॥२॥

("गायत्री का पाद" इस प्रकार कहे जाने पर वहाँ सामान्य रूप से गायत्री की अक्षर संख्या ही कही जाती है । इसी आशय से आगे का सूत्र कहा जा रहा है—

## गायत्र्या वसवः ।३।३।।

**मृतसञ्जीवनी**—'पादः' इत्यनुवर्तते, परिभाषेयम् । गायत्र्याः पादो वसवोऽष्टाक्षराणि भवन्ति । यत्र गायत्र्याः पादोऽभिधास्यते तत्राष्टाक्षरो ग्राह्यः ॥

**शिवप्रसादिनी**—यहाँ पर अधिकार लभ्य "पाद" की अनुवृत्ति होती है । यह भी परिभाषा सूत्र है । सूत्राऽर्थ का स्वरूप होगा—गायत्री का पाद, वसवः = आठ संख्या वाले होते हैं । अर्थात् जहाँ पर गायत्री के पाद का कथन होता है वहाँ पर आठ अक्षर को ग्रहण करना चाहिए । आशय यह है कि जहाँ-जहाँ पर गायत्री पाद ग्रथित होगा वहाँ-वहाँ सर्वत्र अष्टाऽक्षर करने होंगे ।।३।।

---

**वरैण्यः**'(ऋ.सं. २।५।२८।६) इत्यादौ वकारम् । '**एवा त्वामिन्द्र वज्रिन्नत्र**' (ऋ.सं. ३।६।१।१) इत्यादौ रेफम् । तथा—'**उपैन्द्र तव वीर्ये**' (ऋ.सं.५।१।१।१) इत्यादौ गुणम् । '**प्र ब्रह्मैतु सदनादृतस्य**' (ऋ.सं. ५।४।१।१) इत्यादौ वृद्धिम् । '**इन्द्र वाजेषु नोऽव**' (ऋ.सं. १।१।१३।४) इत्यादौ पूर्वरूपम् । **अद्याद्याश्वश्व** (ऋ.सं. ६।४।३९।२) इत्यादौ सवर्णदीर्घम् इति । अत्र 'उपेन्द्र' इत्यादीन्येकाक्षरीभावस्योदाहरणानि ।

छन्दोमात्रविषयकमिदम् लौकिके तु 'पादश्चतुर्भवाः' (पि०सू० ४।१०) इति विशेषोऽग्रेवक्ष्यते । 'छन्द एकादिपादकम् ।' (३३०।२) **इत्याग्नेये** । 'पञ्च पङ्क्ते षट् सप्तेत्यतिच्छान्दसाम्' इति **साङ्ख्यायनश्रौतसूत्रे** । (७।२७)

(अब जगती छन्द के पाद की अक्षर संख्या को कहने के लिए आगे का सूत्र कहा जा रहा है)—

## जगत्या आदित्या: ।३।४।।

**मृतसञ्जीवनी**—'पाद:' इत्यानुवर्तते । जगत्या: पादो द्वादशाक्षरो भवति । यत्र क्वचिज्जागत: पादस्तत्र द्वादशाक्षरो गृह्यते ।।

**शिवप्रसादिनी**—यहाँ पर भी पाद का अधिकार आता है । तदनुसार सूत्रार्थ का स्वरूप होता है कि—जगती छन्द का पाद द्वादश (बारह) अक्षरों वाला होता है । अर्थात् यहाँ कहीं भी जगती छन्द का पाद होगा, जहाँ पर वह पाद बारह अक्षरों वाले के रूप में ही गृहीत होता है ।। ३ । ४ ।।

(अब विराज या वैराज छन्द की अक्षर संख्या कही जा रही है—)

## विराजो दिश: ।३।५।।

**मृतसञ्जीवनी**—पाद इत्यनुवर्तते । यत्र क्वचिद्वैराज: पाद इत्युच्यते, तत्र दशाक्षर: प्रत्येतव्य: ।।

**शिवप्रसादिनी**—अधिकार से पाद का लाभ होता है । तदनुसार सूत्राऽर्थ होगा—जहाँ-कहीं भी ''वैराज छन्द् का पाद है'' ऐसा कहा जाता है वहाँ पर दश संख्या वाले अक्षरों को समझना चाहिए । अर्थात् जहाँ पर वैराज पाद कहा जाएगा, वहाँ पर दश अक्षरों को ग्रहण करने होगें ।।५।।

(त्रैष्टुभ् छन्द के पाद की संख्या प्रकाशित की जा रही है—)

## त्रिष्टुभो रुद्रा: ।३।६।।

**मृतसञ्जीवनी**—त्रैष्टुभ: 'पाद:' इत्युक्ते सर्वत्रैकादशाक्षरो गृह्यते । अस्मिन्नेवाध्याये परिभाषा एताश्चतस्र: ।।

**शिवप्रसादिनी**—''त्रैष्टुभ् छन्द का पाद है'' ऐसा कहे जाने पर सर्वत्र उन स्थलों में एकादशाऽक्षर का ग्रहण होता है । इसी अध्याय सूत्र ३।३ से लेकर सूत्र ३।६ तक चार परिभाषा सूत्र कहा गया है ।।६।।

(अब गायत्री-जगती-विराट्-त्रिष्टुप्-इन चार छन्दों की पादव्यवस्था को प्रदर्शित किया जा रहा है —)

## एकद्वित्रिचतुष्पादुक्तपादम् ।३।७।।

**मृतसञ्जीवनी**—एभिश्चतुर्भिर्लक्षणैरुक्त: पादो यस्य तत् 'उक्तपादं' छन्द: । यस्य च्छन्दसो यादृश: पाद: परिभाषितस्तच्छन्दस्तेनैव पादेन क्वचिदेकपात्, क्वचिद्द्विपात्,

क्वचित्त्रिपात्, क्वचिच्चतुष्पाद् भवति । गायत्री च त्रिपदैव[१] । चतुर्भिष्टाक्षरैः पादैरनुष्टुबेव स्यात् ॥

**शिवप्रसादिनी**—गायत्र्या वसवः ॥३।३॥ सूत्र से लेकर त्रिष्टुभो रूद्राः ॥३।६॥ इन चार लक्षणाऽऽत्मक सूत्रों से कहा गया है पाद जिस छन्द का, वह उक्त पाद छन्द नाम से कहा गया है । इस प्रकार पूर्वोक्त गायत्री आदि छन्दों में जहाँ जितनी संख्या के अक्षरों का पाद कहा गया है वह छन्द उसी पाद से किसी स्थल में एक पाद से कहीं दो पाद, कहीं तीन पाद एवं कहीं चार पाद से सम्बलित होता है । गायत्री छन्द में तो पुनः तीन पाद ही हुआ करता है । यतः आठ-आठ अक्षरों वाले चार पादों का तो अनुष्टुप् छन्द हो जाता है भावाऽर्थ यह है कि उपर्युक्त पादाऽनुयायी गायत्री आदि छन्द कहीं पर एक पाद कहीं दो पाद कहीं तीन पाद एवं कहीं पर चार पाद भी हुआ करता है । किन्तु गायत्री छन्द त्रिपाद से भिन्न नहीं हुआ करता है । इसका कारण यह है कि आठ अक्षरों वाला चार पाद एकत्रित होने की अवस्था में वह गायत्री न बनकर अनुष्टुप् छन्द हो जाता है ॥७॥

(''गायत्र्या वसवः'' (३।३) इस सूत्र से गायत्री छन्द के पाद की अष्टाऽक्षर संख्या को कहकर पुनः छः अक्षर वाले पाद चतुष्टय से उपलक्षित चौबीस अक्षर वाली गायत्री का लक्षण अग्रिम सूत्र से किया जा रहा है—)

## [१]आद्यं चतुष्पादृतुभिः ।३।८।।

'ऋतु' शब्देन लक्षणया षडक्षरः पादोऽभिधीयते । तैः पादैश्चतुष्पादं गायत्रं छन्दो भवति । एवं चतुर्विंशत्यक्षराणि संपद्यन्ते । यथा—

**('दोषो गाय बृहद् (१) गाय द्युमद्धेहि (२) ।**
**आथर्वण स्तुहि (३) देवं सवितारम् (४) ॥')**

(अथ०सं० कां० ६ सू० १ मं० १)

सूत्र में उल्लिखित ''ऋतु'' शब्द से लक्षणावृत्ति द्वारा छः अक्षरों वाले पाद अर्थ

---

(१) आद्यमस्मिन्नध्यायेऽनुक्रान्तेषु प्रथमम्, सकलच्छन्दसामादिभूतं च । 'गायत्री प्रथमा छन्दसाम्' इति **शतपथ**श्रुतेः । गीतासु च स्वयं साक्षाद्भगवता 'गायत्री छन्दसामहम्' (१०।३५) इत्युक्तत्वात् प्रधानभूतं चेति **षड्गुरुशिष्यः** ॥

ईदृशस्य गायत्रीछन्दसः प्रायो वेदेष्वदर्शनात्, उत्तरत्र लक्षितस्य सप्ताक्षर-पादत्रयोपेतस्य दाशतय्यादौ बहुलमुपलम्भात्, गायत्र्यास्त्रिपात्त्वस्यैव सर्वत्र प्रसिद्धेश्चात्र 'आद्यं चतुष्पादृतुभिः क्वचित्' इति सूत्रविभाग एव युक्तः । 'लक्ष्यानुसारि हि लक्षणम्' इति न्यायात् ।

का कथन हुआ है । छ: अक्षरों वाले चार पादों का आर्षी गायत्री छन्द हुआ करता है, इन चारों पादों की अक्षर संख्या को मिलाने पर आर्षी गायत्री में चौबीस अक्षर पर्यवसित होते हैं ।

**शिवप्रसादिनी**—इसका उदाहरण वृत्तिग्रन्थ में दिया गया है जिसको देखने से इस छन्द का स्वरूप सुस्पष्ट हो जाता है ॥८॥

(कहीं गायत्री छन्द इक्कीस (२१) अक्षरों वाला भी होता है, इसी को लक्ष्य करके सूत्र कहते हैं—)

## क्वचित्रिपादृषिभिः ।३।९।।

**मृतसञ्जीवनी**—क्वचिद्वेदे सप्ताक्षरोपलक्षितैः पादैस्त्रिभिर्गायत्र्येव भवति । एवमेकविंशत्यक्षराणि जायन्ते । यथा—

**'युवाकु हि शचीनां (१) युवाकु सुमतीनाम् (२) ।**
**भूयाम वाजदाव्नाम् (३) ॥'**

(ऋग्वेदे-अ० १ अ० १ व० ३२ मं० ४)

**शिवप्रसादिनी**—ऋग्वेदादिकों में कहीं पर सात-सात अक्षरों के तीन पादों को मिलाकर इक्कीस (२१) अक्षरों में भी गायत्री छन्द सम्पन्न हुआ करता है । उदाहरण इस सूत्र के वृत्ति ग्रन्थ में अवलोकनीय है ॥९॥

(सात अक्षर वाले पाद से घटित गायत्री छन्द के सञ्ज्ञा विशेष को कहा जा रहा है—)

## सा पादनिचृत् ।३।१०।।

**मृतसञ्जीवनी**—सैव गायत्री 'पदनिचृत्' इति संज्ञां लभते । प्रयोक्तुरदृष्टाभ्युदय-सम्बन्धज्ञापनार्थमियं संज्ञा वेदस्यानादित्वान्महत्त्वेऽपि च न दुष्टेति ॥

**शिवप्रसादिनी**—सा = पूर्व सूत्र में कही गयी सात अक्षरों वाली गायत्री ही ''पाद निचृत्'' सञ्ज्ञा वाली होती है । वह पुन: छन्द: प्रयोक्ता के धर्मविशेषाऽऽत्मक अदृष्ट के साथ अभिव्यक्त सम्बन्ध को प्रकाशित करने के लिए की जाने वाली यह सञ्ज्ञा, वेद के अनादि होने के कारण महिमाशाली होने पर भी दुष्ट नहीं हुआ करती । अर्थात् छन्द: प्रयोक्ता के शुभाऽदृष्ट को प्रकाशित करने के लिए ही यह सञ्ज्ञा कही गयी है ॥१०॥

(अब ''अतिपादनिचृद्'' गायत्री का लक्षण करते हैं—)

## षट्कसप्तकयोर्मध्येऽष्टावतिपादनिचृत् ।३।११।।

**मृतसञ्जीवनी**—प्रथमः षडक्षरः, द्वितीयोऽष्टाक्षरः, तृतीयः सप्ताक्षरः । एवं त्रिभि:

पादैर्या गायत्री सा 'अतिपादनिचृत्' इति संज्ञां लभते। 'त्रिपात्' इत्यनुवर्तनीयम्। यथा—

**('प्रेष्ठं वो अतिथिं (१) स्तुषे मित्रमिव प्रियम् (२)।**

**अग्निं रथं वेद्यम् (३)॥'**

(ऋग्वेदे-अ० ६ अ० ६ व० ५ मं० १)।

**शिवप्रसादिनी**—यहाँ पर "त्रिपाद" (३।९) की अनुवृत्ति होती है। इस प्रकार सूत्राऽर्थ होगा–जिस गायत्री छन्द में प्रथम पाद छः अक्षर वाला, द्वितीय पाद आठ अक्षर वाला तथा तृतीय पाद में लघु-गुरू सञ्ज्ञक सात अक्षर विद्यमान हो, उन तीनों पादों को एकत्र समाहार किये जाने की स्थिति में त्रिपादगायत्री छन्द "अतिपादनिचृत्" इसके नाम से कहा जाता है॥ उदाहरण के लिए प्रकृत सूत्र का वृत्तिग्रन्थ अवलोकनीय है॥११॥

(अग्रिम सूत्र से नागी गायत्री के लक्षण को कहा जा रहा है—)

## द्वौ नवकौ षट्कश्च नागी।३।१२।।

**मृतसञ्जीवनी**—द्वौ नवाक्षरौ पादौ, षडक्षरस्तृतीयः। एवं त्रिभिः पादैः 'नागी' नाम गायत्री भवति। यथा—

**[१]('अग्ने तमद्याश्वं न स्तोमैः (१) क्रतुं न भद्रं हृदिस्पृशम् (२)।**

**ऋध्यामा त ओहैः (३)॥'**

**(ऋग्वेदे-अ० ३ अ० ५ व० १० मं० १)।**

**शिवप्रसादिनी**—जिस तीन पाद वाली गायत्री छन्द के प्रथम दो पादों में नौ-नौ संख्या वाले अक्षर हों, तथा तृतीय पाद में छः संख्या वाले अक्षर विराजमान हों, उस त्रिपाद गायत्री को "नागी" गायत्री कहते हैं॥ उदाहरण का स्वरूप वृत्ति में स्पष्ट है॥१२॥

(वाराही गायत्री का लक्षण कहा जा रहा है—)

## विपरीता वाराही।३।१३।।

**मृतसञ्जीवनी**—इयमेव नागी गायत्री विपरीता यदा भवति तदा 'वाराही' नाम भवति। प्रथमः षडक्षरः पादो, द्वितीयतृतीयौ नवाक्षरौ। यथा—

**('वीतं स्तुके स्तुके (१) युवमस्मासु नियच्छतम् (२)।**

(१) **शौनककात्यायन**मते त्वियं पदपङ्क्तिः। पादाश्च पञ्च, आदितस्त्रयः पञ्चाक्षराः, चतुर्थश्चतुरक्षरः, अन्त्यः षडक्षर इति।

**प्र[1] प्रं युज्ञपतिं तिर ( ३ ) ॥'**

(तै० आ० प्रपा० ३ अ० ११ मं० २०)

**शिवप्रसादिनी**—पूर्व सूत्रोक्त लक्षण के विपरीत जिस गायत्री के प्रथमपाद में छ: अक्षर हों, एवं द्वितीय तथा तृतीय पाद में नौ-नौ अक्षर हों वह गायत्री "वाराही" नाम वाली होती है। उदाहरण वृत्ति में देखें ॥१३॥

(वर्द्धमाना गायत्री के लक्षण को कहते हैं—)

**[2]षट्कसप्तकाष्टकैर्वर्धमाना ।३।१४।।**

**मृतसञ्जीवनी**—षडक्षर: प्रथम: पाद:, द्वितीय: सप्ताक्षर:, तृतीयोऽष्टाक्षर: । एवं त्रिभि: पादै: 'वर्धमाना' गायत्री भवति । यथा—

**'त्वमंग्ने युज्ञानां ( १ ) होता विश्वेषां हितः ( २ ) ।**

**देवेभिर्मानुंषे जनें ( ३ ) ॥'**

(ऋग्वेदे अ० ४ अ० ५ व० २१ मं० १)

**शिवप्रसादिनी**—जिस गायत्री के प्रथम पाद में छ: अक्षर, द्वितीयपाद में सप्त अक्षर एवं तृतीयपाद में अष्ट अक्षर विद्यमान हों, उस गायत्री छन्द को वर्धमाना गायत्री कहते हैं। वृत्ति ग्रन्थ में उदाहरण देखें ॥१४॥

(प्रतिष्ठागायत्री का लक्षण कहा जा रहा है—)

**विपरीता प्रतिष्ठा ।३।१५।।**

**मृतसञ्जीवनी**—सैव वर्धमाना गायत्री विपरीता यदा भवति तदा 'प्रतिष्ठा' नाम गायत्री भवति । अष्टाक्षर: प्रथम: पाद:, द्वितीय: सप्ताक्षर:, षडक्षरस्तृतीय: । यथा—

**'आपंः पृणीत भेषजं ( १ ) वरूथं तुन्वे मम ( २ ) ।**

**ज्योक्च सूर्यं दृशे ( ३ ) ॥'**

(ऋग्वेदे-अ० १ अ० २ व० १२ मं० १)

---

(१) 'पर' इति व्यूहान्नवाक्षरत्वम् । उदाहरणान्तरं मृग्यम् ।

(२) **प्रातिशाख्ये** वर्धमानाया भेदान्तरमपि दृश्यते—'अष्टकौ मध्यम: षट्क एकेषामुपदिश्यते ।' (१६।२२) इति । उदाहरणं तु—

**'निषंसाद धृतव्रतो ( १ ) वरुणः पुस्त्याः३ स्वा ( २ ) ।**

**साम्राज्याय सुक्रतुः ( २ ) ॥'** (ऋ०सं० अ० १ अ० २ व० १७ मं० ५)

तृतीयो व्यूहेनाष्टाक्षर: ।

**शिवप्रसादिनी**—वही वर्धमाना गायत्री जब विपरीत हो जाती है तब ''प्रतिष्ठा'' कहलाती है। तदनुसार आठ अक्षर वाला प्रथम पाद, सात अक्षरवाला द्वितीय पाद, एवं छ: अक्षरों से युक्त तृतीय पाद इस छन्द में होता है। उदाहरण का प्रदर्शन वृत्ति ग्रन्थ में है ॥१५॥

(विराट् गायत्री छन्द का लक्षण कहते हैं—)

## तृतीयं द्विपाज्जागतगायत्राभ्याम्[1] ।३।१६।।

**मृतसञ्जीवनी**—तृतीयशब्देनैतदध्यायस्थसूत्रपाठक्रमापेक्षया विराजमाह। तथा चोक्तम्—'विराजो दिश:' (पि०सू० ३।५) इति। यदा द्वादशाक्षरोऽष्टाक्षरश्च पाद: स्यात्, ततस्ताभ्यां 'द्विपाद् विराड्' नाम गायत्री भवति। यथा—

**'नृभिर्येमानो हर्यतो विचक्षणो (१) राजा देव: समुद्रिय: (२) ॥'**

(ऋग्वेदे-अ० ७ अ० ५ व० १५ मं० १)

**शिवप्रसादिनी**—यहाँ पर ''तृतीय'' पद से इस अध्याय में स्थित सूत्र पाठकृत क्रम की अपेक्षा से विराट् नामक गायत्री छन्द विवक्षित है। अर्थात् ''गायत्र्या वसव:'' (३।३) जगत्या आदित्या: (३।४)–इन दोनों सूत्र की अपेक्षा जो तृतीय सूत्र ''विराजो दिश:'' (३।५) प्रकृत में तृतीय पद से इसी ''विराट्'' छन्द का ग्रहण अभीष्ट है। जब बारह अक्षर वाला जगती छन्द का एक पाद एवम् अष्ट अक्षर वाला गायत्री छन्द का दूसरा पाद एक स्थान में उपस्थित होता है, अर्थात् उपर्युक्त दो पाद एकत्रित होता है तब वह ''द्विपाद विराट्'' नामक गायत्री छन्द कहलाता है। उदाहरण के लिए वृत्ति ग्रन्थ दे रखना चाहिए ॥१६॥

(एकादश अक्षरों वाले त्रिपादात्मिका विराट्गायत्री का लक्षणसूत्रकार कहते हैं—)

## त्रिपात्त्रैष्टुभै: ।३।१७।।

**मृतसञ्जीवनी**—'तृतीयम्' इत्यनुवर्तते। एकादशाक्षरै: पादै: 'त्रिपाद् विराड्' नाम

---

(१) अत्र क्रमोऽविवक्षित:। जागतग्रहणं च त्रैष्टुभस्याप्युपलक्षकम्। तेन—

**'वसुरग्निर्वसुश्रवा (१) अच्छानक्षि द्युमत्तमं रयिं दा: (२) ॥'**

(ऋ०सं० अ० ४ अ० १ व० १६ मं० २)

इत्यादीनामपि सङ्ग्रह:। यद्यपि भूम्ना विराडाख्यं स्वतन्त्रमेव छन्द: श्रूयते, तथापि लाघवार्थमस्य भेदानां तत्र तत्रान्तर्भाव: सप्तच्छन्दोवादावष्टम्भेन विहित इति बोध्यम्।

गायत्री[1] भवति । यथा—

**'दुहीयन्मित्रधितये युवाकु ( १ ) राये च नो मिमीतं वाजवत्यै ( २ ) ।**
**इषे च नो मिमीतं धेनुमत्यै ( ३ ) ॥'**

(ऋग्वेदे-अ० १ अ० ८ व० २३ मं० ४)

**इति [2]गायत्र्यधिकारः ।**

---

(१) **शौनककात्यायनाभ्यां** त्विदमनुष्टुब्भेदेषु परिगणितम् ।

(२) गायतां त्राणात् गायत्री । 'गायत्री गायतेः स्तुतिकर्मणः । त्रिगमना वा विपरीता गायतो मुखादुदपतदिति च ब्राह्मणम् ।' (नि.अ. ७ खं. १२) इति **यास्कः** ।

भगवता **कात्यायनेन** तु गायत्र्या नव भेदाः प्रदर्शिताः—**'प्रथमं छन्दस्त्रिपदा गायत्री** (१) **पञ्चकाश्चत्वारः षट्कश्चैकः, चतुर्थश्चतुष्को वा पदपङ्क्तिः** (२) **षट्सप्तैकादशा उष्णिग्गर्भा** (३) **त्रयः सप्तकाः पादनिचृत्** (४) **मध्यमः षट्कश्चेदतिनिचृत्** (५) **दशकश्चेद्यवमध्या** (६) **यस्यास्तु षट्सप्तकाष्टकाः सा वर्धमाना** (७) **विपरीता प्रतिष्ठा** (८) **द्वौ षट्कौ सप्तकश्च ह्रसीयसी** (९)' इति । (ऋ०सर्वा० ४ शु० य० सर्वा० ५।२)

(१) तत्र **त्रिपदा गायत्री** यथा—

'अग्निमीळे पुरोहितं ( १ ) यज्ञस्य देवमृत्विजम् ( २ ) ।
होतारं रत्नधातमम् ( ३ ) ॥' (ऋ० सं० १।१।१।१)

(२) **पदपङ्क्तिः** पङ्क्त्यधिकारे दर्शयिष्यते ।

(३) **उष्णिग्गर्भा**—

'ता मे अश्व्यानां ( १ ) हरीणां नितोशना ( २ ) ।
उतो नु कृत्व्यानां नृवाहसा ( ३ ) ॥' (ऋ० सं० ६।२।२५।३)

प्रथमतृतीयपादयोः संयोगव्यूहेनाक्षरसङ्ख्यापूर्तिः ।

(४) **पादनिचृदुदाहृतैव** (३।९) ।

(५) **अतिनिचृत्**—

'पुरूतमं पुरूणां ( १ ) स्तोतॄणां विवाचि ( २ ) ।
वाजेभिर्वाजयताम् ( ३ ) ॥' (ऋ० सं० ४।७।२६।४)

(६) **यवमध्या** दर्शयिष्यते (३।५८)

(७) **वर्धमाना** (८) **प्रतिष्ठा** चोदाहृते (३।१४, १५) यथास्थानम् ।

**शिवप्रसादिनी**—यहाँ पूर्वसूत्र से ''तृतीयम्'' इसकी अनुवृत्ति आ रही है। ग्यारह अक्षर वाले तीन पादों से युक्त छन्द को ''त्रिपाद विराट्'' गायत्री छन्द कहा जाता है ॥१७॥

(इति गायत्र्याधिकार विहित कार्य का समापन हुआ। अथ उष्णिगधिकारः में विहित कार्य का आरम्भ किया जाता है। इस समय उष्णिग् छन्दोऽधिकार का आरम्भ सूचित किया जा रहा है—)

### उष्णिग्गायत्रौ जागतश्च ।३।१८।।

**मृतसञ्जीवनी**—यत्र गायत्रावष्टाक्षरौ पादौ, जागतश्च द्वादशाक्षरः, एवं त्रिभिः 'उष्णिग्' नाम छन्दो भवति। अत्र च क्रमो न विवक्षितः। पादसंख्यामात्रं विधीयते ॥

**शिवप्रसादिनी**—जहाँ पर अर्थात् जिस छन्द में अष्टाऽक्षर युक्त गायत्री का दो पाद तथा द्वादशाक्षर से युक्त जगती का एक पाद हो, उन तीनों पादों के परस्पर मिलने से ''उष्णिक्'' नामक छन्द होता है। (उपर्युक्त छन्द में पादक्रम के नियम सन्निवेश की कोई व्यवस्था नहीं है, किन्तु अष्टाऽक्षर वाले गायत्री के दो पाद, तथा द्वादशाक्षर युक्त जगती के एक पाद की संख्या अवश्य होनी चाहिए, अर्थात् यहाँ पर पादक्रम में नियम न होकर पाद संख्या का नियम आवश्यक है ॥१८॥

---

(९) **ह्रसीयसी**—आर्चीत्वेनोदाहृतैव (ऋ०सं० ६।७।१४।५) अत्राप्यनुसन्धेया। लक्षणे क्रमस्याविवक्षितत्वात्—

**'इन्द्रः सहस्रदाव्नां (१) वरुणः शंस्यानाम् (२)।**

**क्रतुर्भवत्युक्थ्यः (३) ॥'** (ऋ० सं० १।१।३२।५) इत्यादीनामपि संग्रहः ॥

**प्रातिशाख्ये**ऽन्यदपि भेदद्वयं दृश्यते—**'अष्टको दशकः सप्तको विद्वांसाविति सा भुरिक्।' 'स नो वाजेषु पादौ द्वौ जागतौ द्विपदोच्यते।'** (पटलः १६ सू० १७,२३) इति। आद्या यथा—

**'विद्वांसा विदुरः पृच्छे (१) दविद्वानित्थापरो अचेताः (२)।**

**नूचिन्नु मर्ते अक्रौ (३) ॥'** (ऋ० सं० १।८।२२।२)

**कात्यायन**स्त्विमां **ककुभ**मुक्तवान्। **द्वितीया** यथा—

**'स नो वाजेष्ववितां पुरूवसुः (१) पुरस्थाता मघवा वृत्रहा भुवत् (२) ॥'**

(ऋ०सं० ६।४।३।३)

क्वचिदष्टाक्षरपादद्वयवत्यपि **द्विपदा गायीत्री** दृश्यते। यथा—

**'ते सुतासो मदिन्तमाः (१) शुक्रा वायुमसृक्षत'**। (ऋ०सं० ६।२।१६।३)

एवं **शङ्कुमती-ककुद्मत्याद**योऽन्येऽपि गायत्रीभेदास्तत्र तत्र वक्ष्यमाणा इहानुसन्धेयाः। **दैव्याद**यस्तूक्ता एवेति दिक्।

(अब उष्णिक् छन्द के भेद को कहा जा रहा है—)

**ककुम्मध्ये चेदन्त्यः ।३।१९।।**

**मृतसञ्जीवनी**—गायत्रयोः पादयोर्मध्ये जागतश्चेत्पादो भवति, तदेयम् उष्णिक् 'ककुप्' संज्ञां लभते । यथा—

**'युष्माकँ स्मा रथाँ अनु (१) मुदे दधे मरुतो जीरदानवः (२) ।**

**वृष्टीद्यावो यतीरिव (३) ॥'**

(ऋग्वेदे-अ० ४ अ० ३ व० ११ मं० ५)

**शिवप्रसादिनी**—जिस छन्द का प्रथम एवम् अन्तिम पाद (गायत्री सम्बन्धी) आठ-आठ अक्षरों वाला हो, तथा मध्य पाद (जगती सम्बन्धी) बारह मात्राओं वाला हो, इस प्रकार के उष्णिक् छन्द की ''ककुप्'' सञ्ज्ञा होती है ॥१९॥

(पुर उष्णिक् छन्द का लक्षण कहा जा रहा है—)

**पुरउष्णिक्पुरः ।३।२०।।**

स एव पादो जागतश्चेत् प्रथमो भवति, गायत्रो च परतः, तदा 'पुरउष्णिक्' नाम भवति । यथा—

**[१]'अप्स्वर्न्तरमृतमप्सु भेषज (१) मपामुत प्रशस्तये (२) ।**

**देवा भवत वाजिनः (३) ॥'**

(ऋग्वेदे-अ० १ अ० २ व० ११ मं० ४)

**शिवप्रसादिनी**—जिस छन्द का प्रथम पाद जागत हो अर्थात् बारह मात्रा वाला हो, और शेष अन्त्य तथा मध्य का गायत्र दो पाद हों = आठ-आठ अक्षरों वाला हों, वह छन्द ''पर उष्णिक्'' छन्द कहलाता है ॥२०॥

(परोष्णिक् छन्द का लक्षण कहते हैं—)

**परोष्णिक्परः ।३।२१।।**

**मृतसञ्जीवनी**—एवं जागतः पादः परतश्चेद्भवति, पूर्वौ च गायत्रौ, तदा 'परोष्णिक्' नाम च्छन्दो भवति ।

'उष्णिग्गायत्रौ जागतश्च' (पि०सू० ३।१८) इत्यनेन गतार्थमेतत् विशेषसंज्ञाभिधानार्थं पुनरुच्यते । प्रथमसूत्रे (पि०सू० ३।२०) उष्णिग्ग्रहणमधिकारार्थम् ॥ यथा—

---

(१) अप्सु अन्तः इति व्यूहात् पादपूर्तिः ।

'अ॒ग्ने॒ वाज॑स्य॒ गोम॑त॒ु ( १ ) ईशा॑नः सहसो यहो ( २ ) ।
अ॒स्मे धे॑हि जातवेदो॒ महि॒ श्रव॑ः ( ३ ) ॥'

(ऋग्वेदे-अ० १ अ० ५ व० २७ मं० ४)

**शिवप्रसादिनी**—जिस छन्द में अन्तिम पाद बारह अक्षरों वाला, तथा आदि में विद्यमान शेष दो पाद आठ अक्षरों वाला हो, उस छन्द को "परोष्णिक्" कहते हैं ॥२१॥

(कहीं-कहीं पर सात-सात अक्षरों वाले चार पाद के होने पर भी उष्णिक् छन्द होता है, इसको दिखाने के लिए अग्रिम सूत्र अवतरित होता है—)

## चतुष्पादृषिभिः ।३।२२।।

**मृतसञ्जीवनी**—सप्ताक्षरैश्चतुर्भिः पादैः 'उष्णिक्' एव भवति । यथा—

न॒दं व॒ ओद॑तीनां ( १ ) न॒दं यो यु॑वती॒नाम् ( २ ) ।
पतिं॑ वो॒ [१]'अघ्न्या॑नां ( ३ ) धे॒नूना॑मिषुध्यसि ( ४ ) ॥'

(ऋग्वेदे-अ० ६ अ० ५ व्र० ५ मं० २)

[२]इत्युष्णिगधिकारः ।

---

(१) 'अघ्नीयानाम्' इतीयशब्देन पूर्ति ।

(२) 'चतुरुत्तरवृद्ध्यारम्भादूर्ध्वं स्निह्यतीत्युष्णिक् । उष्णिगुत्स्नातां भवति । स्निह्यतेर्वा स्यात् कान्तिकर्मणः । उष्णीषिणी वेत्यौपमिकम्' इति **यास्कः** (नि.अ.७ खं. १२)। अयमेव शब्द आकारान्तोऽपि यथा—'**उ॒ष्णिहा॒ छन्द॑ इन्द्रि॒यम्**', (यजुर्वेदे-अ० २१ मं० १३) '**बृ॒ह॒त्यु॒ष्णिहा॑ क॒कुप्सू॒चीभि॑ः शम्यन्तु त्वा**' (यजुर्वेदे-अ० २३ मं० ३३) '**शृ॒णातु ग्री॒वाः प्र॒शृणा॑तू॒ष्णिहा॑ वृ॒त्रस्ये॑व॒ शची॒पतिः॑**' (अथर्ववेदे-कां० ६ अ० १३४ सू० १)। भगवता **कात्यायनेन** तूष्णिहोऽष्टौ भेदा उक्ताः, यथा—'**द्वितीयमुष्णिक्त्रिपदान्त्यौ द्वादशकः** (१) **आद्यश्चेत्पुरउष्णिक्** (२) **मध्यममेश्चेत्ककुप्** (३) **त्रैष्टुभजागतचतुष्काः ककुब् न्यङ्कुशिराः** (४) **एकादशिनोः परः षट्कस्तनुशिरा** (५) **मध्यश्चेत्पिपीलिकमध्या** (६) **आद्यः पञ्चकस्त्रयोऽष्टका अनुष्टुब्गर्भा** (७) **चतुःसप्तकोष्णिगेव** (८) इति' (सर्वा. खं. ५)

एषु (१) **उष्णिक्**—परोष्णिगेव (३।२१)। सा च दर्शिता ।

(२-३) **पुरउष्णिक्-ककुप्**-चोदाहृते (३।२०,१९)

(४) **ककुब्न्यङ्कुशिराः**—

'द॒दी रेक्ण॑स्त॒न्वे॑ द॒दिर्वसु॑ ( १ ) द॒दिर्वाजे॑षु पुरुहूत वा॒जिन॑म् ( २ ) ।
नू॒नमथ॑ ( ३ ) ॥' (ऋ० सं० ६।४।३।५)

प्रथमपादे व्यूहात्पूरणम् ।

(५) तनुशिराः—

'प्र या घोषे भृगवाणे न शोभे (१) यया वाचा यजति पज्रियो वाम् (२)।
प्रैषयुर्न विद्वान् (३)॥' (ऋ० सं० १।८।२२।५)

(६) पिपीलिकमध्या—

'हरी यस्य सुयुजा विव्रता वे (१) रर्वन्तानुशेषा (२)।
उभा रजी न केशिना पतिर्दन् (३)॥' (ऋ० सं० ८।५।२६।२)

(७) अनुष्टुब्गर्भा—

'पितुं न स्तोषं (१) महो धर्माणं तविषीम् (२)।
यस्य त्रितो व्योजसा (३) वृत्रं वि पर्वमर्दयत् (४)॥' (ऋ० सं० २।५।६।१)
तृतीयपादे 'विओ' इति विकर्षणेन पूर्तिः।

(८) चतुष्पादुदाहृता (३।२२)

प्राग्दर्शिता दैव्यादिभेदा (२।३-८,१५) अप्यत्राऽनुसन्धेयाः। तदुदाहरणानि तु—

(१) दैवी—'भुवः' (तै०आ० प्र० १० अ० २७)

(२) आसुरी—'नमस्ते अस्तु पश्यत पश्य मा पश्यत।'
(अथ० सं० कां० १३ सू० ४ सं० ५५)

(३) प्राजापत्या—'निर्दग्धꣳ रक्षो निर्दग्धा अरातयः।'
(तै०सं० कां० १ प्र० १ अ० ७)

(४) याजुषी—'यज्ञस्य घोषदसि।' (तै०सं० कां० १ प्र० १ अ० २ मं० १)

(५) साम्नी—'शुन्धध्वं दैव्याय कर्मणे देवयज्यायै।' (तै०सं० १।१।३।१)

(६) आर्ची—'तदग्निराह तदु सोम आह पूषा मा धात्सुकृतस्य लोके। (अथ० सं० १६।९।२)

(७) ब्राह्मी—'होता यक्षदिडाभिरिन्द्रमीडितमाजुह्वानममर्त्यम्।
देवो देवैः सवीर्यो वज्रहस्तः पुरंदरो वेत्वाज्यस्य होतर्यज।'
(शु०य०वा०सं० अ० २८ मं० ३) इति।

यानि तूक्तेभ्य ईषत् विलक्षणानि—

'ऊर्ध्वा अस्य समिधो भव (१) न्त्यूर्ध्वा शुक्रा शोचीꣳष्यग्नेः (२)।
द्युमत्तमा सुप्रतीकस्य सूनोः (३)॥'
'तनूनपादसुरो विश्ववेदा (१) देवो देवेषु देवः (२)।
पथ आनक्ति मध्वा घृतेन (३)॥'
'मध्वा यज्ञं नक्षसे (१) प्रीणानो नराशꣳसो अग्ने (२)।
सुकृद्देवः सविता विश्ववारः (३)॥' (तै० सं० ४।१।४।१-३)

इत्यादीनि छन्दांसि वेदेषूपलक्ष्यन्ते, तेषां निचृदादिविशेषणवत्त्वकल्पनयोक्तेष्वेवान्तर्भाव ऊह्य इति दिक्।

**शिवप्रसादिनी**—सात अक्षर के चार पादों से युक्त छन्द को भी ''उष्णिक्'' छन्द कहा जाता है ॥२२॥

यहाँ तक के ग्रन्थ से उष्णिक् छन्द से सम्बन्धित विचार समाप्त हुआ।

(अनुष्टुप् छन्द के कार्य से सम्बन्धित सूत्र आरम्भ किया जा रहा है—)

**अनुष्टुब्गायत्रैः ।३।२३।।**

**मृतसञ्जीवनी**—'चतुष्पाद्' इत्यनुवर्तते। गायत्रैरष्टाक्षरैः पादैश्चतुष्पाच्छन्दः 'अनुष्टुप्' संज्ञं भवति। यथा—

**सहस्रशीर्षा पुरुषः (१) सहस्राक्षः सहस्रपात् (२)।**
**स भूमिं विश्वतो वृत्वा (३) त्यतिष्ठद्दशाङ्गुलम् (४) ॥'**

(ऋग्वेदे-अ० ८ अ० ४ व० १७ मं० १)

**शिवप्रसादिनी**—यहाँ पूर्व सूत्र से ''चतुष्पाद'' की अनुवृत्ति आती है—गायत्र आठ अक्षरों से बने चारपादों वाले छन्द की ''अनुष्टुप्'' सञ्ज्ञा होती है ॥२३॥

(अनुष्टुप् छन्द के भेद विशेष को आगे के सूत्र से कहते हैं—)

**त्रिपात् क्वचिज्जागताभ्यां च ।३।२४।।**

**मृतसञ्जीवनी**—'अनुष्टुब्' इत्यनुवर्तते। चकाराद्गायत्रग्रहणं च। गायत्रेणैकेन ततो द्वाभ्यां जागताभ्यां क्वचित् 'त्रिपादनुष्टुब्' भवति ॥

**शिवप्रसादिनी**—पूर्व सूत्र से यहाँ पर ''अनुष्टुप्'' की अनुवृत्ति होती है। सूत्र में ''च'' ग्रहण से तृतीया एकवचनाऽन्त में विपरिणमित करके ''गायत्रेण'' इसकी भी अनुवृत्ति होती है। तदनुसार सूत्राऽर्थ का स्वरूप होगा—गायत्री छन्द के पाद के साथ-साथ उत्तरवर्ती जगती छन्द के दो पाद का जिस छन्द में सन्निवेश हो, वह ''त्रिपादनुष्टुप्'' छन्द कहा जाता है। इसका आशय यह है कि जिस छन्द में गायत्री छन्द के अष्ट अक्षर वाला प्रथम पाद, तथा बारह अक्षर वाला जगती छन्द का दो पाद विद्यमान हों, वह ''त्रिपादनुष्टुप्'' छन्द नाम से कहा जाता है ॥२४॥

(त्रिपादनुष्टुप्छन्द के भेद विशेष को आगे के सूत्र से कहते हैं—)

**मध्येऽन्ते च ।३।२५।।**

**मृतसञ्जीवनी**—जागतयोः पादयोर्मध्येऽन्ते च यदा गायत्रः पादो भवति, तदाप्य-नुष्टुवेव स्यात्। यथा—

**'पर्यूषु [1]प्रधन्व वाजसातये (१) परिवृत्राणि सक्षणिः (२)।**

(१) 'प्रधनुव', 'अधिया', इत्युवियशब्देन पादपूर्तिः,

**द्विषस्तुर॒ध्या॑ ऋणया न ईयसे ( ३ ) ॥'**

(ऋग्वेदे-अ० ७ अ० ५ व० २२ मं० १)

अन्तपक्ष उदाहरणम्—

**'मा कस्मैं धातम॒भ्य॑मित्रिणे नो ( १ ) माकुत्रा नो गृहेभ्यो**

**धेनवों गुः ( २ ) । स्तनाभुजो॒ अशिश्वीः ( ३ ) ॥'**

(ऋग्वेदे-अ० १ अ० ८ व० २३ मं० ३)

**इत्यनुष्टुबधिकारः[४] ।**

---

(१-२) 'प्रधनुव', 'अधिया', इत्युवियशब्देन पादपूर्तिः,

(३-४) 'अभिय', 'अशिशुवी' इति पादपूर्तिः ।

(५) 'अनुष्टुबनुष्टोभनात् । गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभतीति च ब्राह्मणम् ।' इति **यास्कः** (निरु. ७।१२।९)।

क्वचिदयं शब्दो हान्तोऽपि दृश्यते । यथा—'द्वात्रिंशदक्षरानुष्टुक् ।' (तै०सं० ७।४।४) 'सा वा एषर्गनुष्टुग्वागनुष्टुक्; (तै०सं० ६।१।२) अनुष्टुक्प्रथमा भवति । अनुष्टुगुत्तमा । वाग्वा अनुष्टुक् ।' (तै०ब्रा० १।८।८) इत्यादौ ।

सर्वानुक्रमणिकायां **कात्यायनेन** तु—**'तृतीयमनुष्टुप्, चत्वारोऽष्टकाः** (१) **पञ्च पञ्चकाः षट्कश्चैको महापदपङ्क्तिः** (२) **जागतावष्टकश्च कृतिः** (३) **मध्ये चेदष्टकः पिपीलिकमध्या** (४) **नवकयोर्मध्ये जागतः काविराट्** (५) **नववैराजत्रयोदशैर्नष्टरूपी** (६) **दशकास्त्रयो विराट्** (७) **एकादशका वा** (८) (ऋ० सर्वा० ६) इत्यष्टावनुष्टुभो भेदा उक्ताः । तत्र—

(१) **अनुष्टुप्** उदाहृता (३।२३)।

(२) **महापदपङ्क्तिः**—

**'तव स्वादिष्ठा ( १ ) ऽग्ने संदृष्टि ( २ ) रिदा चिदह्न ( ३ ) इदा चिदुक्तोः ( ४ ) । श्रिये रुक्मो न ( ५ ) रोचत उपाके ( ६ ) ॥'** (ऋ० सं० ३।५।१०।५)

(३) **कृतिः**—

**'मा कस्मै० ।'** (ऋ० सं० १।८।२३।३) इत्युदाहृता ।

(४) **पिपीलिकमध्या**—

**'पर्यूषु प्र० ।'** (ऋ० सं० ७।५।२२।१)

(५) **काविराट्**—

**'ता विद्वांसा हवामहे वां ( १ ) ता नो विद्वांसा मन्म वोचेतमद्य ( २ ) । प्रार्चद्दयमानो युवाकुः ( ३ ) ॥'** (ऋ० सं० १।८।२२।३)

**शिवप्रसादिनी**—जब बारह अक्षराऽऽत्मक जगती छन्द के पादों के मध्य अष्ट अक्षराऽऽत्मक गायत्री छन्द का एक पाद विराजमान हो, तो भी वह अनुष्टुप् छन्द ही होता है । तात्पर्य यह है कि-जिस छन्द में प्रथमपाद और अन्तिम पाद बारह अक्षरों वाला जगती छन्द के पाद हों, तथा मध्य में अष्टाऽक्षरों वाला गायत्री छन्द का एक पाद हो। अथवा प्रथम दोपाद ही बारह अक्षरों वाले हों तथा अन्तिम पाद अष्टाऽक्षर वाले हो तो उभय प्रकार के छन्दों को अनुष्टुप् छन्द ही कहा जाता है । उदाहरण वृत्तिग्रन्थ में द्रष्टव्य है ॥२५॥

इस प्रकार अनुष्टुप् छन्द से सम्बन्धित विचार समाप्त हुआ ॥ अब आगे बृहती छन्द से सम्बन्धित विचारों का आरम्भ समझना चाहिए ।

(आगे के सूत्र से बृहती छन्द का सामान्य लक्षण कहा जा रहा है—)

## बृहती जागतस्त्रयश्च गायत्राः ।३।२६।।

---

(६) **नष्टरूपी**—

**'वि पृच्छामि पाक्यं न देवान् ( १ ) वषट्कृतस्याद्भुतस्य दस्रा ( २ ) ।**

**पातं च सह्यसो युवं च रभ्यसो नः ( ३ ) ॥'** (ऋ० सं० १।८।२२।४)

(७) **विराट्**—

**'श्रुधी हवं विपिपानस्याद्रे ( १ ) बोधा विप्रस्यार्चतो मनीषाम् ( २ ) ।**

**कृष्वा दुवांस्यन्तमा सचेमा ( ३ ) ॥'**(ऋ०सं० ५।३।५।४)

(८) **विराट्**—(३।१७) इत्यत्रोक्तैव ।

दैव्यादिप्रागुक्तभेदानामुदाहरणानि तु—

(१) **दैवी**—**'मखोऽसि ।'** (तै०आ० ४।२)

(२) **आसुरी**—**'भृगूणामङ्गिरसां तपसा तप्यध्वम् ।'** (तै०सं० १।१।७।१०)

(३) **प्राजापत्या**—**'वृश्च प्र वृश्च सं वृश्च दह प्र दह सं दह ।'** (अथ०सं० १२।५।६२)

(४) **याजुषी**—**'विश्वे देवा विश्वे देवाः ।'** (तै० सं० ४।१।११)

(५) **साम्नी**—**'रात्रिः केतुना जुषता ँ सुज्योतिर्ज्योतिषा स्वाहा ।'**

(शु०य० वा०सं० ३७।२१)

(६) **आर्ची**—**'देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः ।'**

(तै०सं० १।१।५।१)

(७) **ब्राह्मी**—**'अयं लोकः प्रियतमो देवानामपराजितः ।**

**यस्मै त्वमिह मृत्यवे दिष्टः पुरुष जज्ञिषे ।**

**स च त्वानु ह्वयामसि मा पुरा जरसो मृथाः ॥'** (अथ०सं० ५।३०।१७)

**मृतसञ्जीवनी**—एको जागतः पादः, त्रयश्च गायत्राः, तदा 'बृहती' नाम छन्दो भवति ॥ यथा—

**'मत्स्वा सुशिप्र हरिवस्तदीमहे ( १ ) त्वे आ भूषन्ति वेधसः ( २ ) ।**

**तव श्रवांस्युपमान्युक्थ्या ( ३ ) सुतेष्विन्द्र गिर्वणः ( ४ ) ॥'**

(ऋग्वेदे-अ० ६ अ० ७ व० ३ मं० २)

**शिवप्रसादिनी**—जिस छन्द में जगती छन्द से सम्बन्धित बारह अक्षराऽऽत्मक प्रथम पाद हो, शेष आठ-आठ अक्षरों वाले गायत्री छन्द के तीन हों, तो वह छन्द बृहती नाम से कहा जाता है। वृत्ति ग्रन्थ में उदाहरण देखें ॥२६॥

(अधुना बृहती छन्द के विशेष वा भेद विशेष पथ्याबृहती का लक्षण किया जा रहा है—

## पथ्या पूर्वश्चेत्तृतीयः ।३।२७।।

'बृहती' इत्यनुवर्तते। [१]पूर्वः पादो जागतो यदि तृतीयो भवति, अन्ये गायत्राः, तदासौ बृहती 'पथ्या' नाम छन्दो भवति। यथा—

**'मा चिदन्यद्विशंसत ( १ ) सखायो मा रिषण्यत ( २ ) ।**

**इन्द्रमित्स्तोता वृषणं सचा सुते ( ३ ) मुहुरुक्था च शंसत ( ४ ) ॥'**

(ऋग्वेदे-अ० ५ अ० ७ व० १० मं० १)

**शिवप्रसादिनी**—यहाँ पूर्व सूत्र से ''बृहती'' पद की अनुवृत्ति आ रही है। तदनुसार सूत्रार्थ का स्वरूप होगा—जिस छन्द का तृतीय पाद जागत हो (= बारह अक्षरों वाला हो) तथा शेष तीन पाद क्रमशः प्रथम-द्वितीय एवं चतुर्थ गायत्र (= आठ-आठ अक्षरों वाले) पाद हों, तो वह बृहती छन्द ''बृहती पथ्या'' कहलाती है ॥२७॥

(बृहती विशेष न्यङ्कुसारिणी का लक्षण कहते हैं—)

## न्यङ्कुसारिणी द्वितीयः ।३।२८।।

**मृतसञ्जीवनी**—'पूर्वश्चेद्' इत्यनुवर्तते। पूर्वश्चेज्जागतः पादो द्वितीयो भवति, शेषाश्च गायत्राः, तदा न्यङ्कुसारिणी नाम्नी बृहती भवति। यथा—

**'मत्स्यपायि ते महः ( १ ) पात्रस्येव हरिवो मत्सरो मदः ( २ ) ।**

**वृषा ते [२]वृष्ण इन्दु ( ३ ) वाजी सहस्रसातमः ( ४ ) ॥'**

(ऋग्वेदे-अ० २ अ० ४ व० १८ मं० १)

---

(१) पूर्वसूत्रपठितः। प्रथम इत्यर्थः ॥

(२) 'मत्सीय' 'वृषण' इति पूर्त्या विराट्त्वाद्वा न दोषः।

**शिवप्रसादिनी**—''पूर्वश्चेद्'' इतने की पूर्वसूत्र से अनुवृत्ति होती है। उससे सम्बद्ध सूत्राऽर्थक शरीर होगा—जिस छन्द में द्वितीयपाद बारह अक्षरों वाला, तथा अन्य तीन पाद आठ अक्षर के हों, उस छन्द विशेष को ''न्यङ्कुसारिणी बृहती'' कहते हैं ॥२८॥

(''स्कन्धो ग्रीवी क्रौष्टके:'' (३।२९) एवम् ''उरो बृहती यास्कस्य'' (३।३०) इन दोनों सूत्र के द्वारा न्यङ्कु बृहती छन्द का ही अन्य आचार्य के मताऽनुसार दूसरा-दूसरा नाम कहा जा रहा है—)

## स्कन्धोग्रीवी क्रौष्टके: ।३।२९।।

**मृतसञ्जीवनी**—इयमेव 'न्यङ्कुसारिणी' क्रौष्टुकेराचार्यस्य मतेन 'स्कन्धोग्रीवी' नाम छन्दो भवति। आचार्यग्रहणं पूजार्थम् ॥

**शिवप्रसादिनी**—न्यङ्कुसारिणी छन्द ही क्रौष्टुकि आचार्य के मत से ''स्कन्धोग्रीवी'' नाम से कहा जाता है यद्यपि आचार्य नामोल्लेख के विना भी, नामान्तर मात्र से सूत्रकार के द्वारा इस तथ्य को सुकरता के साथ प्रकट किया जा सकता था, तथाऽपि आचार्य नाम का उच्चारण पुन: यह सिद्ध करता है, कि अमुक आचार्य भी इस नामाऽन्तर का समर्थन करते हैं। इस प्रकार आचार्य के सम्मानाऽर्थ इस विषय में उनके नाम का ग्रहण किया गया है ॥२९॥

## उरोबृहती यास्कस्य ।३।३०।।

**मृतसञ्जीवनी**—इयमेव न्यङ्कुसारिणी यास्कस्याचार्यस्य मतेन 'उरोबृहती' नाम्नी भवति ॥

**शिवप्रसादिनी**—यही ''न्यङ्कुसारिणी'' बृहती छन्द ''निरुक्त'' ग्रन्थ के रचयिता यास्काऽऽचार्य के द्वारा ''उरोबृहती'' नाम से कहा गया है ॥३०॥

(अब बृहती के भेद विशेष ''उपरिष्टाद्बृहती'' का लक्षण करते हैं—)

## उपरिष्टाद्बृहत्यन्ते ।३।३१।।

**मृतसञ्जीवनी**—यदा जागत: पादोऽन्ते भवति, तदा 'उपरिष्टाद्बृहती' नाम भवति। यथा—

'न तमंहो न दुरितं (१) देवासो अष्ट [1]मर्त्यम् (२)।
सजोषसो यमर्यमा (३) मित्रो नयन्ति वरुणो अतिद्विष: (४) ॥'

(ऋग्वेदे-अ० ८ अ० ७ व० १३ मं० १)

---

१. 'मर्तीयम्' इति पूर्ति:।

**शिवप्रसादिनी**—जिस छन्द का अन्तिमपाद (चतुर्थपाद) बारह अक्षरों वाला हो, एवं शेष प्रथम-द्वितीय-तथा तृतीय पाद पुनः आठ-आठ अक्षरों वाले हों, तो वह छन्द ''उपरिष्टाद्बृहती'' नाम से कहा जाता है ॥३१॥

(पुनः बृहती विशेष ''पुरस्ताद्बृहती'' का लक्षण प्रकाशित करते हैं—)

## पुरस्ताद्बृहती पुरः ।३।३२।।

**मृतसञ्जीवनी**—स[1] एव जागतः पादः पूर्वश्चेद् भवति, शेषाश्च गायत्राः, तदा 'पुरस्ताद्बृहती' नाम भवति । यथा—

**'म॒हो यस्पति॒ः शर्वसो॒ [2]असा॒भ्या (१) म॒हो नृम्णस्य॑ तूतु॒जिः (२) ।**

**भ॒र्ता वज्र॑स्य धृष्णोः (३) पि॒ता पु॒त्रमि॑व प्रि॒यम् (४) ॥'**

(ऋग्वेदे-अ० ७ अ० ७ व० ६ मं० ३)

**मृतसञ्जीवनी**—'बृहती जागतस्त्रयश्च गायत्राः' (पि०सू० ३।२६) इत्यनेनैव गतार्थमेतत् । संज्ञाविशेषप्रदर्शनार्थं पुनरुच्यते ॥

**शिवप्रसादिनी**—जिस बृहती छन्द में बारहमात्राओं वाला प्रथम पाद हो, और शेष बचे द्वितीय-तृतीय एवं चतुर्थ पाद आठ मात्राओं वाले हों, तो उस बृहती छन्द को ''पुरस्ताद् बृहती'' के नाम से शास्त्र में कहा जाता है ॥३२॥

(नौ-नौ अक्षर वाले चतुष्पाद बृहती विशेष को कहा जा रहा है—)

## [3]क्वचिन्नवकाश्चत्वारः ।३।३३।।

**मृतसञ्जीवनी**—क्वचिद्वेदे नवाक्षराश्चत्वारः पादा दृश्यन्ते, सापि बृहत्येव । यथा—

**'[4]चक्षु॑षो हेते॒ मन॑सो हेते (१) वाचो॑ हेते॒ ब्रह्म॑णो हेते (२) ।**

**यो मा॑घा॒युर॑भि॒दास॑ति (३) तम॑ग्ने मे॒न्या मे॒निं कृ॑णु (४) ॥'**

(यजुर्वेदे तै०ब्रा० कां० २ प्र० ४ अ० २ मं० १)

**शिवप्रसादिनी**—वेद के किसी-किसी मन्त्र में नौ-नौ अक्षर वाले चार पाद होते हैं, वह भी ''बृहती छन्द'' ही कहलाता है ॥३३॥

(अन्य प्रकार के बृहती छन्द को कहते हैं—)

---

(१) 'यदि जागतः पादः पुरो भवति, अन्ते च त्रयो' इति लिखितपुस्तकयोः ।

(२) 'असामिया' इति पूरणात्पादपूर्तिः ।

(३) क्वचिदिति हि प्रयोगाल्पत्वं सूच्यते इति **षड्गुरुशिष्यः** ।

(४) प्रथमपादेऽक्षराधिक्याद्भुरिग्रूपा ।

## वैराजौ गायत्रौ च ।३।३४।।

**मृतसञ्जीवनी**—यत्र वैराजौ पादौ पूर्वौ दशाक्षरौ भवतः, ततो गायत्रौ च, सापि बृहती । यथा—

**'कां सोस्मितां हिरण्यप्राकारा ( १ ) माद्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्[१] ( २ ) ।**
**पद्मेस्थितां पद्मवर्णां ( ३ ) तामिहोपह्वये श्रियम् ( ४ ) ॥**

(ऋग्वेदे-अ० ४ अ० ४ परि० मं० ४)

**शिवप्रसादिनी**—जिस बृहती का प्रथम दो पाद दश-दश अक्षरों वाले (दो विराट् छन्द के) पाद हों, तथा उत्तर भाग का दो पाद अष्टाक्षर युक्त गायत्री छन्द के हों, तो भी उसे बृहती ही कहते हैं ॥३४॥

(आगे के सूत्र से बृहती विशेष ''महाबृहती'' को कहा जा रहा है—)

## त्रिभिर्जागतैर्महाबृहती ।३।३५।।

**मृतसञ्जीवनी**—त्रिभिर्जागतैः पादैश्छन्दो 'महाबृहती' नाम । यथा—

**'अजीजनो अमृत मर्त्येष्वाँ ( १ ) ऋतस्य धर्मन्नमृतस्य चारुणः ( २ ) ।**
**सदासरो वाजमच्छा स निष्यदत् ( ३ ) ॥'**

(ऋग्वेदे-अ० ७ अ० ५ व० २२ म० ४)

**शिवप्रसादिनी**—बारह अक्षर वाले जगती छन्द के तीन पादों को जिस छन्द में एकत्रित किया जाता हो, वह छन्द ''महाबृहती'' नाम वाला होता है ॥३५॥

(महाबृहती के नामाऽन्तर को दर्शाने वाला सूत्र कहा जा रहा है—)

## सतोबृहती ताण्डिनः ।३।३६।।

**मृतसञ्जीवनी**—इयमेव महाबृहती ताण्डिन आचार्यस्य मतेन 'सतोबृहती' नाम भवति ॥

**इति [२]बृहत्यधिकारः ।**

---

(२) द्वितीयेऽक्षराधिक्यादियमपि भुरिक् ।

(३) 'बृहती परिबर्हणात् ।' (नि० ७।१२।१०) इति **यास्कः । सर्वानुक्रमणिकायां तु- 'चतुर्थे बृहती तृतीयो द्वादश** (१) **आद्यश्चेत्पुरस्ताद्बृहती** (२) **द्वितीयश्चे-न्न्यङ्कुसारिणी, उरोबृहती, स्कन्धोग्रीवा वा** (३) **अन्त्यश्चेदुपरिष्टाद्बृहती** (४) **अष्टिनोर्मध्ये दशकौ विष्टारबृहती** (५) **त्रिजागतोर्ध्वबृहती** (६) **त्रयोदशि-नोर्मध्येऽष्टकः पिपीलिकमध्या** (७) **नवकाष्टयैकादशयष्टिनो विषमपदा** (८) **चतुर्नवका बृहत्येव** (९)' (ऋ.सर्वा.७) इति नवविधा बृहत्य उक्ताः ।

तत्र (१-४) **बृहती**—पथ्या (३।२७) **पुरस्ताद्बृहती** (३।३२) **उरोबृहती** (३।२८-३०) **उपरिष्टाद्बृहत्य** (३।३१) उदाहृता एव।

(५) **विष्टारबृहती**—

'युवं ह्यास्तं महो रन् (१) युवं वा यन्निरततंसतम् (२)।
तानो वसू सुगोपा स्यातं (३) पातं नो वृकादघायोः (४)॥'

(ऋ०सं० १।८।२३।२)

प्रथमतृतीयपादयोः 'हिया' 'सिया' इति व्यूहादक्षरपूर्तिः।

(६) **ऊर्ध्वबृहती**—महाबृहत्या (३।३५) निरुक्ता।

(७) **पिपीलिकमध्या**—

'अभिवो वीरमन्धसो मदेषु गाय (१) गिरा महा विचेतसम् (२)।
इन्द्रं नाम श्रुत्यं शाकिनं वचो यथा (३)॥' (ऋ०सं० ६।४।३।४)

(८) **विषमपदा**—

'सनितः सुसनितरुग्र (१) चित्र चेतिष्ठ सूनृत (२)।
प्रासहा सम्राट् सहुरिं सहन्तं (३) भुज्युं वाजेषु पूर्व्यम् (४)॥'

(ऋ०सं० ६।४।४।५) चतुर्थपादे 'पूर्विय'मिति व्यूहेन पूर्तिः।

(९) **बृहती**—(३।३३) इत्यत्रोदाहृता। **शौनकस्तु**—

'तं त्वा वयं पितो वचोभि (१) र्गावो न हव्या सुषूदिम (२)।
देवेभ्यस्त्वा सधमाद (३) मस्मभ्यं त्वा सधमादम् (४)॥'

(ऋ०सं० २।५।७।६) इतीमामुदाजहार (प्रा०शा० १६।४७)

तत्रोत्तमयोः पादयोः 'देवेभिय' 'अस्मभियं' इति व्यूहेन पूरणम्।

दैव्यादयः प्रागुक्ता भेदा इहाप्यनुसन्धेयाः। तदुदाहरणानि तु—

(१) **दैवी**—'भूर्भुवः स्वः।' (तै०ब्रा० ३।१०।५।१)

(२) **आसुरी**—'महीनां पयोऽसि विहितं देवत्रा।' (तै०आ० ४।१२।१)

(३) **प्राजापत्या**—'स्वस्त्य१ द्योषसो दोषसश्च सर्वं आपः सर्वगणो अशीय।'

(अथ०सं० १६।४।६)

(४) **याजुषी**—'देवानां परिषूतमसि।' (तै०सं० १।१।२।५)

(५) **साम्नी**—'मरुतः पोत्रात् सुष्टुभः स्वर्कादृतुना सोमं पिबतु।' (अथ०सं० २०।२।१)

(६) **आर्ची**—'मध्वा यज्ञं नक्षति प्रैणानो नराशंसो अग्निः सुकृद्देवः सविता विश्ववारः।'

(अथ०सं० १५।२७।३)

(७) **ब्राह्मी**—'देवो अग्निः स्विष्टकृद्देवमिन्द्रं वयोधसम्। देवो देवमवर्द्धङ्ग्
अतिच्छन्दसा छन्दसेन्द्रियम्। क्षत्रमिन्द्रे वयो दधत्।
वसुवने वसुधेयस्य वेतु यज॥' (तै०ब्रा० ६।२०।१)

**शिवप्रसादिनी**—ऊपर के सूत्र से प्रतिपादित यही महाबृहती ताण्डी आचार्य के मत से ''सतो बृहती'' के नाम से कही जाती है ॥३६॥

इस प्रकार बृहती से सम्बन्धित प्रकरणाऽऽत्मक विचार का समापन होता है।

अब यहाँ से पंक्ति छन्द का विचार आरम्भ होता है।

(आगे के सूत्र से पंक्ति छन्द का लक्षण कहा जा रहा है—)

### पङ्क्तिर्जागतौ गायत्रौ च ।३।३७।।

**मृतसञ्जीवनी**—यदा द्वौ पादौ जागतौ भवतस्ततो गायत्रौ च, तदा [१]'पङ्क्तिः' नाम छन्दः ॥

**शिवप्रसादिनी**—छन्द में जब दो पाद जगती छन्द के और दो पाद गायत्री छन्द के उपलब्ध होते हों, तो वह छन्द ''पंक्ति'' नाम से अभिहित होता है। अर्थात् जब छन्द में बारह-बारह मात्राओं का दो पाद आरम्भ के हों, और आठ-आठ मात्राओं को दो पाद उत्तराऽर्द्ध भाग के हों, तब वह छन्द ''पंक्ति'' के नाम से कहा जाता है ॥३७॥

(''सतः पंक्ति'' नाम पंक्तिविशेष का लक्षण कहते हैं—)

### पूर्वौ चेदयुजौ सतः पङ्क्तिः ।३।३८।।

**मृतसञ्जीवनी**—यत्र पूर्वोद्दिष्टौ पादावयुजौ भवतः, प्रथमतृतीयौ पादौ जागतावित्यर्थः, द्वितीयचतुर्थौ च गायत्रौ तच्छन्दः 'सतः पङ्क्तिः' नाम भवति ॥ यथा—

**'अग्निना तुर्वशं यदुं परावत (१) उग्रादेवं हवामहे (२)।**
**अग्निर्नयन्नववास्त्वं बृहद्रथं (२) तुर्वीतिं दस्यवे सहः (४) ॥'**

([२]ऋग्वेदे-अ० १ अ० ३ व० ११ मं० ३)

**शिवप्रसादिनी**—जिस छन्द का प्रथम एवं तृतीय पाद बारह-बारह अक्षर वाले जगती छन्द के हों, तथा द्वितीय और चतुर्थ पाद पुनः आठ-आठ अक्षर वाले गायत्री छन्द के उपलब्ध हों, तो वह छन्द ''सतः पंक्ति'' कहलाती है ॥३८॥

(''विपरीत सतःपंक्ति'' का लक्षण करते हैं—)

### विपरीतौ च[३] ।३।३९।।

---

(१) उदाहरणमस्याः प्रस्तारपङ्क्तयां द्रष्टव्यम्।

(२) सायणभाष्ये तु सतोबृहती नाम।

(३) लाघवाय 'युजौ चे' ति वक्तव्ये गौरवाङ्गीकारो 'विपरीते'ति संज्ञापीति सूचनार्थः। तथा चोक्तं **शौनकेन**—'विपरीता विपर्यये।' (प्रा०शा० १६।५४) इति।

**मृतसञ्जीवनी**—यदा तावेव पादौ विपरीतौ भवतः; तदापि सतः पङ्क्तिरेव। अयमर्थः—प्रथमतृतीयौ पादौ गायत्रौ, द्वितीयचतुर्थौ (च) जागतौ तदापि सतः पङ्क्तिरेव भवति ॥ यथा—

**'य ऋ॒ष्वः श्रा॑व॒यत्स॑खा॒ (१) विश्वेत्स वेद॒ जनि॑मा पुरुष्टु॒तः (२)।**

**तं विश्वे॒ मानु॑षा यु॒गे(३)न्द्रं॑ हवन्ते तवि॒षं य॒तस्रु॑चः (४) ॥'**

([१]ऋग्वेदे-अ० ६ अ० ४ व० ३ मं० २)

**शिवप्रसादिनी**—जब छन्द में प्रथम तथा तृतीय पाद (अष्टाऽक्षराऽऽत्मक) गायत्री के हों, तथा द्वितीय एवं चतुर्थ पाद द्वादशाऽक्षराऽऽत्मक जगती छन्द के हों, तो वह छन्द "सतःपंक्ति" नाम वाला होता है। तात्पर्य यह है कि जिस छन्द के प्रथम और तृतीय पाद में आठ-आठ अक्षर हों, और द्वितीय तथा चतुर्थ पाद में बारह-बारह अक्षर हों, वह छन्द "सतःपंक्ति" कहलाता है ॥३९॥

(अब प्रस्तार पंक्ति छन्द का लक्षण कहते हैं—)

## [२]प्रस्तारपङ्क्तिः पुरतः ।३।४०।।

**मृतसञ्जीवनी**—यदा जागतौ पादौ पूर्वौ भवतः, गायत्रौ च परतः, तदा 'प्रस्तारपङ्क्तिः' नाम। यथा—

**'भ॒द्रमिद्भ॒द्रा कृ॑णव॒त्सर॑स्व॒त्य (१) कवारी चेतति वा॒जिनी॑वती (२)।**

**गृणा॒ना ज॑मदग्नि॒वत् (३) स्तु॑वा॒ना च॑ वसिष्ठ॒वत् (४) ॥'**

(ऋग्वेदे-अ० ५ अ० ६ व० २० मं० ३)

**मृतसञ्जीवनी**—'पङ्क्तिर्जागतौ गायत्रौ च' (पि०सू० ३।३७) इत्यनेन गतार्थमिदं संज्ञाविशेषज्ञापनार्थं पुनरुच्यते ॥

छन्द में जब बारह-बारह अक्षरों के दो पाद पूर्व में हों, और आठ-आठ अक्षरों के दो पाद उत्तर में हों, तब वह छन्द "प्रस्तार पंक्तिः" कहलाता है ॥४०॥

(आस्तारपंक्ति का लक्षण करते हैं—)

## आस्तारपङ्क्तिः परतः ।३।४१।।

**मृतसञ्जीवनी**—यदा जागतौ पादौ परौ भवतः, गायत्रौ च पूर्वौ, तदा 'आस्तार-पङ्क्तिः' नाम। यथा—

---

(१) सायणभाष्ये तु सतोबृहती नाम।

(२) कलिकातामुद्रितपुस्तके प्रथममास्तारपङ्क्तिः। तदयुक्तम्, 'प्रास्तारपङ्क्तिः पुरतः पश्चादास्तारपङ्क्तिका।' (३३०।१२) इत्यग्निपुराणविरोधात्, सर्वानुक्रमविरोधाच्च।

'भद्रं नो अपि वातय (१) मनो दक्षमुत क्रतुम् (२)।
अधा ते सख्ये अन्धसो वि वो मदे (३) रणन्
गावो न यवसे विवक्षसे (४)॥'

(ऋग्वेदे-अ० ७ अ० ७ व० ११ मं० १)

जिस छन्द में प्रथम और द्वितीय पाद लघुगुरूस्वरूप आठ-आठ अक्षरों के हों, और अवशिष्ट दो पाद बारह-बारह अक्षरों में उपलब्ध हों, वह छन्द ''आस्तारपंक्ति'' नाम वाला होता है ॥४१॥

(विस्तार या विष्टारपंक्ति छन्द का लक्षण कहते हैं—)

**विष्टारपङ्क्तिरन्तः ।३।४२।।**

**मृतसञ्जीवनी**—यदा जागतौ पादौ मध्ये भवतः आद्यन्तयोश्च गायत्रौ, तदा 'विष्टार-पङ्क्तिः' नाम यथा—

'अग्ने तव श्रवो वयो (१) महि भ्राजन्ते अर्चयो विभावसो (२)।
बृहद्भानो शवसा वाजमुक्थ्यं (३) दधासि दाशुषे कवे (४)॥'

(ऋग्वेदे-अ० ८ अ० ७ व० २८ मं० १)

**शिवप्रसादिनी**—जिस छन्द के प्रथम पाद और चतुर्थपाद आठ-आठ अक्षरों वाले हों, तथा द्वितीय और तृतीय पाद बारह-बारह अक्षरों वाले हों, वह छन्द ''विस्टार पंक्ति'' कहलाता है ॥४२॥

(संस्तारपंक्ति का लक्षण कहते हैं—)

**संस्तारपङ्क्तिर्बहिः ।३।४३।।**

**मृतसञ्जीवनी**—यदा तावेव जागतौ पादौ बहिर्भवतः, मध्ये च गायत्रौ, तदा 'संस्तारपङ्क्तिः' नाम छन्दः । यथा—

'पितुभृतो न तन्तुमित्सुदानवः (१) प्रति दध्मो यजामसि (२)।
उषा अप स्वसुस्तमः (३) संवर्तयति वर्तनिं सुजाततां (४)॥'

(ऋग्वेदे-अ० ८ अ० ८ व० ३० मं० ३,४)

**शिवप्रसादिनी**—जिस छन्द में बारह मात्रा वाले दो पाद हों, अर्थात् प्रथम और चतुर्थ पाद बारह मात्रा वाले के रूप में उपलब्ध हों, और आठ-आठ अक्षर वाले द्वितीय तथा तृतीय पाद हों, वह ''संस्तार पंक्ति'' नाम से कहा जाता है ॥४३॥

(''अक्षर पंक्ति'' छन्द का लक्षण करते हुए कहते हैं—)

## अक्षरपङ्क्तिः पञ्चकाश्चत्वारः ।३।४४।।

**मृतसञ्जीवनी**—पञ्चाक्षरैश्चतुर्भिः पादैः 'अक्षरपङ्क्तिः' नाम छन्दः । ननु चत्वारिंशदक्षरा पङ्क्तिश्छन्दः, तत्कथं 'पञ्चकाश्चत्वारः' इत्युच्यते ? तत्रोत्तरम्—'द्वावप्यल्पशः' (पि०सू० ३।४५) इत्यस्मात् सिंहावलोकितन्यायेनाल्पग्रहणमनुवर्तते । तेन पङ्क्तेरल्पत्वं विशेषात्प्रतिपादितं भवति । यथा—

[1]"प्रश्वा न तायुं (१) गुहा चर॑न्त॑ं (२)

नमौ युजानं (३) नमो वह॑न्तम् (४) ॥

(ऋग्वेदे-अ० १ अ० ५ व० ९ मं० १)

**शिवप्रसादिनी**—पाँच-पाँच अक्षरों वाले चार पादों को "अक्षरपंक्ति" छन्द कहते हैं ॥

("अल्पशः पंक्ति" छन्द का लक्षण किया जा रहा है—)

## द्वावप्यल्पशः ।३।४५।।

**मृतसञ्जीवनी**—पञ्चग्रहणमनुवर्तते । पञ्चाक्षराभ्यां पादाभ्यामल्पशः पङ्क्तिर्नाम छन्दो भवति, क्वचिदेव वेदे न सर्वत्र ॥ यथा—

'सदौ विश्वायुः (१) शर्म॑ सुप्रथाः ।'

(तै० आ० ४।११)

**शिवप्रसादिनी**—सूत्र में "पञ्चक" की अनुवृत्ति आती है । जिससे सूत्राऽर्थ का स्वरूप इस प्रकार होगा—पाँच-पाँच अक्षरों वाले दो-दो पादों से युक्त छन्द को "अल्पशः पंक्ति" छन्द कहा जाता है । अर्थात् जिस छन्द के प्रतिपाद में पाँच-पाँच लघु-गुरु अक्षर रहते हों, इस प्रकार के पञ्चाऽक्षर युक्त दो पादों वाले छन्द को "अल्पशः पंक्तिः" छन्द कहते हैं । वेद के किसी-किसी स्थल विशेष में ही इस छन्द की उपलब्धि होती है ।।४५।।

## पदपङ्क्तिः पञ्च ।३।४६।।

**मृतसञ्जीवनी**—'पञ्चकाः' इत्यनुवर्तते । यदा पञ्चाक्षराः पञ्च पादा भवन्ति, तदा 'पदपङ्क्तिः' नाम छन्दः । यथा—

---

(१) **कात्यायनमते** त्वियं दशाक्षरपादद्वयवती द्विपदा विराट् । **शौनकेन** पक्षद्वयमप्युक्तम्—'विराजो द्विपदाः केचित्सर्वा आहुश्चतुष्पदाः । कृत्वा पञ्चाक्षरान् पादांस्तांस्तथाक्षरपङ्क्तयः ॥' (ऋ०प्रा०शा० १७।५०) इति । साङ्ख्यायनोऽप्याह—'उत्तरस्या दशाक्षरौ, तामक्षरपङ्क्तिरित्यप्याचक्षते ।' (श्रौ०सू० ७।२७) इति ।

'[1]घृतं न पूतं ( १ ) तनूररेपाः ( २ ) शुचि हिरण्यम् ( ३ ) ।
तत्ते रुक्मो न ( ४ ) रोचत स्वधावः ( ५ ) ॥'

(ऋग्वेदे-अ० ३ अ० ५ व० १० मं० ६)

**शिवप्रसादिनी**—यहाँ पर व्यवहित पूर्वसूत्र से "पञ्चकः" इस पद की अनुवृत्ति होती है। जिस छन्द में पाँच-पाँच अक्षरों वाले पाँच पाद होते हैं, वह छन्द "पद पंक्ति" नाम वाला होता है ॥ ३ । ४६ ॥

(अब प्रकाराऽन्तर से पदपंक्ति छन्द का लक्षण करते हैं—)

## चतुष्कषट्कौ त्रयश्च । ३ । ४७ ॥

**मृतसञ्जीवनी**—चकारः 'पञ्चकाः' इत्यनुकर्षणार्थः । यदा [2]प्रथमश्चतुरक्षरः पादः द्वितीयः षडक्षरः, ततस्त्रयः पञ्चाक्षरास्तदा पञ्चपदा पदपङ्क्तिरेव । यथा—

'अधा ह्यग्ने ( १ ) क्रतोर्भद्रस्य ( २ ) दक्षस्य साधोः ( ३ ) ।
रथीर्ऋतस्य ( ४ ) बृहतो बभूथ ( ५ ) ॥'

(ऋग्वेदे-अ० ३ अ० ५ व० १० मं० २)

**शिवप्रसादिनी**—सूत्र में चकार का ग्रहण "पञ्चकाः" इसकी अनुवृत्ति के लिए

---

(१) भुरिग्रूपत्वादेकाक्षराधिक्यम् । कात्यायनेन तु 'पञ्चकाश्चत्वारः षट्कश्चैकः' (सर्वा० ४।२) इत्येव सूत्रितम् ।

(२) वस्तुतस्त्वत्र क्रमो न विवक्षितः । यथा कथञ्चित्पादत्रयं पञ्चाक्षरम्, एकश्चतुरक्षरः, एकश्च षडक्षर इत्यर्थः । अत एव 'द्वौ वा पादौ चतुष्कश्च षट्कश्चैकस्त्रिपञ्चकाः । (ऋ०प्रा०शा० १६।१५) इति शौनकीयलक्षणम् 'द्वौ पादौ एकश्चतुष्कः, एकः षट्कः, त्रयश्च पञ्चाऽक्षरा भवन्ती'ति क्रमनैरपेक्ष्येणैव व्याचख्यावुव्वटः । तत्राद्यचतुष्कान्त्यषट्कोदाहरणम्—

'अधा ह्यग्ने०'(ऋ०सं० ३।५।१०।२) इत्येव ।

तृतीयचतुष्कान्त्यषट्कोदाहरणम्—

'एभिर्नो अर्कै ( १ ) भवा नो अर्वाङ् ( २ ) स्वर्ण ज्योतिः ( ३ ) ।
अग्ने विश्वेभिः ( ४ ) सुमना अनीकैः ( ५ ) ॥' (ऋ०सं० ३।५।१०।३)

चतुर्थचतुष्कपञ्चमषट्कोदाहरणम्—

'अग्ने तमद्या ( १ ) श्वं न स्तोमैः ( २ ) क्रतुं न भद्रं ( ३ ) हृदिस्पृशम् ( ४ ) ।
ऋध्यामा त ओहैः ( ५ ) ॥' (ऋ०सं० ३।५।१०।१)

अन्यान्यप्युदाहरणानि शाखान्तरे मृग्याणीति दिक् ।

किया गया है। सूत्राऽर्थ होगा-जिस छन्द के प्रथम पाद में चार अक्षर हों, द्वितीय पाद में छः अक्षर तथा तृतीय-चतुर्थ और पञ्चम पादों में पाँच-पाँच अक्षर विद्यमान हों, वह छन्द ''पदपंक्ति'' कहलाता है ॥४७॥

(पथ्यपंक्ति का लक्षण किया जा रहा है—)

### पथ्या पञ्चभिर्गायत्रैः ।३।४८।।

**मृतसञ्जीवनी**—पञ्चभिरष्टाक्षरैः पादैः 'पथ्या' नाम पङ्क्तिर्भवति[1]। अस्योदाहरणम्—

**'यो अ॒र्यो मर्त॒भोजनं (१) परा॒ददाति दा॒शुषे॑ (२)।**
**इन्द्रो॑ अ॒स्मभ्यं॑ शिक्षतु॒ (३) विभ॑जा॒ भूरिं॑ ते॒ वसु॑ (४)**
**भक्षी॒य तव॒ राधसः (५) ॥'**

(ऋग्वेदे-अ० १ अ० ६ व० २ मं० १)

**शिवप्रसादिनी**—आठ-आठ अक्षरों के पाँच पादों से युक्त छन्द को ''पथ्या पंक्ति'' कहा जाता है ॥४८॥

(पाँच अक्षरों से युक्त पाँच पाद वाले पदपंक्ति छन्द के लक्षण को कहकर इस समय छः पाद वाले ''जागतीपंक्ति'' छन्द को कहने जा रहे हैं—)

### [2]जगती षड्भिः ।३।४९।।

**मृतसञ्जीवनी**—'गायत्रैः' इत्यनुवर्तते। गायत्रैः षड्भिः पादैः 'जगती' नाम पङ्क्तिर्भवति। यथा—

**'महिं वो मह॒तामवो॒ (१) वरु॑ण॒ मित्र॑ दा॒शुषे॑ (२)।**
**यमा॑दित्या अ॒भि द्रुहो (३) रक्ष॑था॒ नेम॒घं नंश (४)**
**दने॒हसो॑ व ऊ॒तयः (५) सुऊ॒तयो॑ व ऊ॒तयः (६) ॥'**

(ऋग्वेदे-अ० ६ अ० ४ व० ७ मं० १)

---

(१) यद्यप्यस्याः प्रथमेऽर्धे पादद्वयम्, उत्तरार्धे च त्रयमिति प्रायो दृश्यते; तथापि क्वचिद्वैपरीत्यस्यापि विद्यमानत्वात् न तथा नियमः। यथा—

**'नकि॑र्देवा मिनीमसि॒ (१) नकि॒रा यो॑पयामसि (२) मन्त्र॒श्रुत्यं॑ चरामसि (३)।**
**प॒क्षेभि॑रपि क॒क्षेभि॒ (४) रत्रा॒भि सं र॑भामहे (५) ॥'**

(ऋ० सं० ८।७।२२।७)

(२) 'महापङ्क्तिः षडष्टकाः' (प्रा० शा० १६।७१) इति **शौनकः**। कदाचिदत्रापि मूले 'महती' इति पाठः सम्भाव्यते।

## इति [१]पङ्क्त्यधिकारः ।

**शिवप्रसादिनी**—यहाँ पूर्व सूत्र से "गायत्रैः" इस पद की अनुवृत्ति होती है। तदनुसार सूत्राऽर्थ का स्वरूप होगा—जिस छन्द में आठ-आठ अक्षरों वाले छः पाद हों,

---

(१) 'पङ्क्तिः पञ्चपदे'ति यास्कः (निरु० ७।१२।११)। सर्वानुक्रमणिकायां **कात्यायनेन** तु पङ्क्तेरष्टौ भेदा उक्ताः—**'पञ्चमं पङ्क्तिः पञ्चपदा** (१) **अथ चतुष्पदा-विराड् दशकैः** (२) **अयुजौ जागतौ सतोबृहती** (३) **युजौ चेद्विपरीता** (४) **आद्यौ चेत्प्रस्तारपङ्क्तिः** (५) **अन्त्यौ चेदास्तारपङ्क्तिः** (६) **आद्यन्त्यौ चेत्संस्तारपङ्क्तिः** (७) **मध्यमौ चेद्विष्टारपङ्क्तिः** (८) (ऋ०सर्वा० ८) इति।

तत्र (१) **पङ्क्तिः**—(३।४८) इत्यत्रोदाहृता।

(२) **विराट्**—

**'ऋतस्य॑ पथि वे॒धा अ॑पायि (१) श्रि॒ये मनां॑सि दे॒वासौ॑ अक्रन् (२)।**
**दधा॑नो॒ नाम॑ म॒हो वचौ॑भि॒ (३) र्वपु॑र्दृशये॑ वे॒न्यो व्या॑वः (४)॥'**

(ऋ० सं० ४।७।१७।३)

चतुर्थपादे व्यूहेनाक्षरपूर्तिः ।

(३-८) सतोबृहती—सतः पङ्क्तिः (३।३८), विपरीता (३।३९), प्रस्तारपङ्क्तिः (३।४०), आस्तारपङ्क्तिः (३।४१), संस्तारपङ्क्तिः (३।४३), विष्टारपङ्क्तिः (३।४२) इति उदाहृता एव।

दैव्यादिभेदानामुदाहरणानि तु—

(१) **दैवी**—**'नम॑स्ता॒राय॑ ।'** (तै०सं० ४।५।८।८)

(२) **आसुरी**—**'अ॒रि॒प्रा आपो॒ अप॑ रि॒प्रम॒स्मत् ।'** (अथ०सं० १६।१।१०)

(३) **प्राजापत्या**—**'प्र व इन्द्राय वृत्रहन्तमाय विप्राय गाथं गायत यं जुजोषते ।'** (साम०सं०पू० ५।२।६।१०)

(४) **याजुषी**—**'इन्द्र॑स्य त्वा बा॒हुभ्या॒मुद्य॑च्छे ।'** (तै०सं० १।१।२)

(५) **साम्नी**—**'विश्वतो दावन् विश्वतो न आभर यं त्वा शविष्ठमीमहे ।'** (सा०सं० पू० ५।२।६।१)

(६) **आर्ची**—**'वसन्त इन्नु रन्त्यो ग्रीष्म इन्नु रन्त्यः ।**
**वर्षाण्यनु शरदो हेमन्तः शिशिर इन्नु रन्त्यः ॥'**

(सा०सं०पू० ६।३।१३।२)

(७) **ब्राह्मी**—**'प्राची॒ दिग॒ग्निरधि॑पतिरसि॒तो र॑क्षि॒तादि॒त्या इष॑वः । तेभ्यो॒ नमोऽधि॑पतिभ्यो॒ नमो॑ रक्षि॒तृभ्यो॒ नम॒ इषु॑भ्यो॒ नम॑ एभ्यो अस्तु । यो॒३॒॑ऽस्मान्द्वेष्टि॒ यं व॒यं द्वि॒ष्मस्तं वो॒ जम्भे॑ दध्मः ॥'** (अथ०सं० ३।२७।१)

रथं न दुर्गाद्वसवः सुदानवो (३) विश्वस्मान्नो अंहसो निष्पिपर्तन (४) ॥

(ऋग्वेदे-अ० १ अ० ७ व० २४ मं० १)

**शिवप्रसादिनी**—पूर्वोक्त दो स्वरूप में जिनके उच्चारण का विधान पूर्वसूत्र से हुआ है, वहाँ पर प्रत्येक प्रत्येक के द्वितीय उच्चारण का विषयीभूत जो "धृति-अष्टि" आदि शब्दों में द्वितीय धृति-अष्टि आदि शब्द हैं, वे अति शब्द पूर्वक ही प्रयुक्त होगें। अर्थात् द्वितीय धृति आदि शब्दों को, अति शब्द के आगे प्रयोग में लाना चाहिए।

जिसके परिणाम स्वरूप छिहत्तर (७६) अक्षरों वाला छन्द अतिधृति, तथा बहत्तर अक्षरों वाला छन्द धृति सञ्ज्ञक होगा, अड़सठ अक्षरों वाला अत्यष्टि, चौंसठ अक्षरों वाला अष्टि, साठ अक्षरों के छन्द का नाम अतिशक्वरी, छप्पन अक्षरों वाला छन्द शक्वरी, बावन (५२) अक्षरों से युक्त छन्द अतिजगती सञ्ज्ञक होगा, तथा अड़तालिस अक्षरों से युक्त छन्द जगती नाम वाला हुआ करती है ।।७।।

## अथ लौकिकम् ।४।८।।

**मृतसञ्जीवनी**—अधिकारोऽयमाशास्त्रपरिसमाप्तेः। पूर्वेषां छन्दसां वैदिकत्वमेव। इतः प्रभृत्यार्यादीनां चूलिकापर्यन्तानां लौकिकत्वमेव। [१]समान्यादीनामुत्कृतिपर्यन्तानां वैदिकत्वं लौकिकत्वं च। अत्र वैदिकच्छन्दसां प्रस्तावे प्रसङ्गाद्वेदवदनादिमुनिपारम्पर्यागतं स्मृतिपुराणेतिहासादिषु दृश्यमानमार्यादिदण्डकपर्यन्तं लौकिकच्छन्दोजातमधिक्रियते। तन्मूलत्वात्काव्यस्य। काव्यं च कीर्तिरूपत्वादानन्दहेतुत्वाच्च पुरुषार्थः ।।

**शिवप्रसादिनी**—यहाँ से प्रकृत शास्त्र की समाप्ति पर्यन्त "लौकिक" छन्द का अधिकार (उत्तरोत्तर सूत्र में अनुवृत्ति) जाएगा। इससे पूर्व में सूत्र द्वारा उपस्थापित छन्द केवल वैदिक ही हैं। यह बात यहाँ के लौकिकाऽधिकार से स्पष्ट होती है। जिसके परिणामस्वरूप इस लौकिक छन्दाऽधिकार में आए सूत्रों से विहित आर्या से लेकर चूलिका पर्यन्त तक के छन्द लौकिक ही होंगे। किन्तु "ग्लिति समानी" (पि०सू० ५।६) इत्यादि सूत्र विहित "समानी" आदि से लेकर उत्कृति पर्यन्त छन्दों तक लौकिकत्व के साथ-साथ वैदिकत्व भी रहता है। वैदिक छन्दों के प्रकाशक प्रकृत शास्त्र में लौकिक छन्दों के भी वर्णन करने का अभिप्राय यह है कि—वेद के समान अनादिमुनि परम्परा से प्राप्त स्मृति-पुराण-इतिहासाऽऽदि स्वरूप काव्य ग्रन्थों में, आर्या आदि से लेकर दण्डक पर्यन्त लौकिक छन्द समूह देखे जाते हैं। यतः काव्य छन्द मूलक ही हुआ करता है और कीर्ति तथा आनन्द का हेतु होने के कारण काव्य पुरुषाऽर्थ का साधन है तथा काव्य सृष्टि के माध्यम से छन्द भी पुरुषाऽर्थसाधक सिद्ध होता है ।।८।।

(वैदिक छन्द के समान लौकिक छन्द का भी ज्ञान करने के लिए अतिदेश सूत्र

(१) 'ग्लिति समानी' (पि०सू० ५।६) इति सूत्रबोधितं छन्दः

कहा जा रहा है—)

## आत्रैष्टुभाच्च यदार्षम्[१] ।४।९।।

**मृतसञ्जीवनी**—आङभिविधौ। त्रिष्टुबेव त्रैष्टुभम्। स्वार्थे तद्धितः। गायत्र्यादित्रिष्टुप्पर्यन्तं यदार्षं छन्दोजातं वैदिके व्याख्यातं, लौकिके च तत्तथैव द्रष्टव्यम्। किं तदार्षम्? चतुर्विंशत्यक्षरा गायत्री, अष्टाविंशत्यक्षरोष्णिक्, द्वात्रिंशदक्षरानुष्टुप्, षड्त्रिंशदक्षरा बृहती, चत्वारिंशदक्षरा पङ्क्तिः, चतुश्चत्वारिंशदक्षरा त्रिष्टुप्। चः समुच्चये।।

सूत्र में आ (ङ्) अभिविधि अर्थ में प्रयुक्त हुआ है। "तेनसहितम् = अभिविधिः", अर्थात् जहाँ से कहा जाय उस अवधि को लेकर अभिविधि होती है। त्रैष्टुभ-शब्द में स्वार्थिक तद्धित अण् प्रत्यय हुआ है, जिससे त्रैष्टुभ शब्द का त्रिष्टभ् (प्) छन्द ही अर्थ होगा। इस प्रकार सूत्र का तात्पर्याऽर्थ होगा—गायत्री से लेकर त्रिष्टुप्पर्यन्त जो वैदिक छन्द पूर्व में व्याख्यान के विषय बनाए गये हैं। उन सभी छन्दों को उसी प्रकार लौकिक छन्द के रूप में भी ग्रहण किया जाना चाहिए। गायत्री आदि वे वैदिक छन्द किस प्रकार हैं? इसका वृत्तिग्रन्थ में इस प्रकार समाधान प्रस्तुत हुआ है—वेद में चौबीस अक्षरों वाला गायत्री छन्द, अठांईश (२८) अक्षरों वाला उष्णिक्, बत्तीस अक्षरों का अनुष्टुप्, छत्तीस अक्षरों वाला बृहती छन्द, चालिस अक्षरों का पंक्ति, तथा चौवालिस अक्षरों का त्रिष्टुप् छन्द हुआ करता है। सूत्र में "च" शब्द सम्मुच्चयाऽर्थ में प्रयुक्त हुआ है। जिसके परिणामस्वरूप वेद के छन्द से नियमाऽनुसार लौकिक छन्दों की अक्षर संख्या भी होगी ।।९।।

(अब पाद का लक्षण कहते हैं—)

## पादश्चतुर्भागः[२] ।४।१०।।

---

(१) 'आर्षमा त्रैष्टुभात्स्मृतम्। त्रैष्टुप्पङ्क्तिश्च बृहती अनुष्टुबुष्णिगीरितम् ।। गायत्री स्यात्सुप्रतिष्ठा प्रतिष्ठा मध्यया सह। अत्युक्तोक्ता आदितश्च एकैकाक्षरवर्जितम् ।।' (३३१।३-४) **इत्याग्नेये**।

(२) इदं च लक्षणं प्रायिकत्वात्। आर्यासु अर्धसमविषमेषु च न्यूनाधिकाक्षरदर्शनात्। विपुलाचूलिकादिषु विपुलायां यतिमात्रं निषिद्धं त्रिषु गणेषु; 'चूलिकार्धमेकोनत्रिंशत्०' (छं०शा० ४।५२) इत्यर्धस्य लक्षणकथनेऽपि एकाक्षरन्यूनाधिकभावेन पादः कल्पनीयः इति **तरुणवाचस्पतिः**। पादलक्षणं **मन्दारमरन्दे**—'छन्दसा ग्रथितः शब्दः पाद इत्यभिधीयते।' (१।९) इति। इदमत्रावगन्तव्यम्–एकद्व्यादिवर्णघटितपादचतुष्टयात्मकवृत्ते वक्तुः श्रोतुर्वा पादत्वेन तात्पर्ये सति वृत्तमेव। एतदेकाक्षरमारभ्य चतुर्विंशतिवर्णपर्यन्तवर्णघटितवाक्य एव। पञ्चविंशतिषड्विंशतिवर्णात्मकवाक्ये पादत्वमेव। तत ऊर्ध्वं तु न पादत्वम् इति तद्व्याख्यायाम्।

**मृतसञ्जीवनी**—चतुर्भागश्चतुर्विंशत्यक्षराया गायत्र्याश्चतुर्थो भागः पादसंज्ञां लभते। गायत्र्याः षडक्षरपादः । एवमुष्णिगादिष्वपि द्रष्टव्यम् । समवृत्तविषयमेतत्[1] ॥

**शिवप्रसादिनी**—चौबीस अक्षरों वाले गायत्री आदि छन्दों के चौथे भाग पाद नाम से कहे जाते हैं । यथा–गायत्री छन्द में एक पाद छः अक्षरों का होगा । इसी प्रकार अनुष्टुप् आदि छन्दों के विषय में पाद का निर्णय किया जाना चाहिए । पाद का यह लक्षण प्रायिक है । अर्धसम, विषम वृत्त के छन्दों में न्यूनाऽधिक अक्षर देखे जाते हैं । यद्यपि "गायत्र्या वसवः" (पि०सू० ३।३।।) इससे गायत्री के प्रत्येक पाद में आठ अक्षर निर्धारित किये गये हैं, तथा यह तीन पादवाली ही होगी । तथाऽपि वह सूत्र वैदिक गायत्री छन्द के विषय में कहा गया है, किन्तु यहाँ लौकिक छन्दः प्रकरण को लेकर विचार चल रहा है । अतः लौकिक छन्दविषय में प्रकृत सूत्र के स्वरूप को समझना चाहिए । यह सूत्र समवृत्ति विषय में प्रवृत्त होता है । जहाँ पर सभी पाद समान अक्षर वाला हो वह समवृत्ति के छन्द कहलाता है और उसी को उद्देश्य करके पाद लक्षण किया गया है ।।१०।।

(विषम वृत्त छन्द को उद्देश्य करके पाद लक्षण किया जा रहा है—)

## यथावृत्तसंमाप्तिर्वा ।४।११।।

**मृतसञ्जीवनी**—यस्य वृत्तस्य यादृशैः पादैर्न्यूनाक्षरैरधिकाक्षरैर्वा समाप्तिर्दृश्यते, तस्य तादृशा एव पादा ग्रहीतव्याः । वाशब्दो व्यवस्थितविभाषा । उद्गतादिषु विषमवृत्तेषु चतुर्भागातिक्रमेणापि पादव्यवस्थादर्शनात् ।

आदौ तावद्गणच्छन्दो मात्राछन्दस्ततः परम् ।
तृतीयमक्षरच्छन्दश्छन्दस्त्रेधा तु लौकिकम् ।।
आर्याद्युद्गीतिपर्यन्तं गणच्छन्दः समीरितम् ।
वैताल्यादिचूलिकान्तं मात्राछन्दः प्रकीर्तितम् ।
समान्याद्युत्कृतिं यावदक्षरच्छन्द एव च ।।

तत्रादौ तावदार्यालक्षणसिध्यर्थ गणसंज्ञां करोति—

**शिवप्रसादिनी**—जिस छन्द की न्यून वा अधिक जितने अक्षरों से अथवा जिस तरह के पादों से समाप्ति (पूर्णता) देखी जाती है । वहाँ उतने ही अक्षरों से युक्त पाद का ग्रहण किया जाना चाहिए । "उद्गता" आदि विषमवृत्तों के छन्द में चार भाग के अन्तर्गत रहने वाले एक भाग में पाद की व्यवस्था न होकर, निर्दिष्ट अक्षरों से ही पादव्यवस्था समझनी चाहिए ।।११।।

(१) 'गायत्र्या वसवः' (पि०सू० ३।३) इति यत्तृतीयाध्याये दर्शितं, तद्वैदिकविषयमात्रम् । तेन लौकिकच्छन्दसां त्रिपञ्चषट्पदता निषिद्धा । यतो लौकिकविषमवृत्तेऽपि लौकिकविषम एव भविष्यति न तु वैदिकोक्तः, किं तु चतुष्पदत्वं तत्राप्यक्षतमेव ज्ञेयम् ।

## लः समुद्रा गणः ।४।१२।।

**मृतसञ्जीवनी**—ल इत्येकमात्रिकस्याक्षरस्य ग्रहणम् । समुद्र इति चतु:संख्योपलक्षणार्थम् । चतुर्णां लकाराणां 'गण:' इत्येषा संज्ञा विधीयते ।।

"ल:" इससे एक मात्रिक अक्षर का ग्रहण अभिप्रेत है । "समुद्रा:" यह शब्द चार संख्या वाले वर्णों का लक्षणा वृत्ति से बोधन के लिए प्रयुक्त हुआ है । इस प्रकार सूत्रार्थ का स्वरूप होगा—लघुवर्णों की गण संख्या होती है । उपर्यालक्षण अर्थात् गायत्री आदि छन्दों के स्वरूप की निष्पत्ति होना ही गण सञ्ज्ञा के विधान का प्रयोजन है ।।१२।।

## गौ गन्तमध्यादिर्न्लश्च ।४।१३।।

**मृतसञ्जीवनी**—अनेन गणस्य विन्यासभेदं दर्शयति । स हि गण: कदाचिद्गुरुद्वयेन (ऽऽ) भवति, कदाचिदन्तेनैकेन गुरुणा (।।ऽ), कदाचिन्मध्यमेन (।ऽ।), कदाचिदाद्येन (ऽ।।), कदाचिच्चतुर्भिर्लघुभि: (।। ।।) । षष्ठस्य भेदस्याभावाद् विस्पष्टार्थमिदं सूत्रम् । अन्तमध्यादिरिति प्रथमं द्वन्द्वसमासं कृत्वा पश्चाद्गकारेण बहुव्रीहि: । द्वन्द्वात् परो य: श्रूयते लभतेऽसौ प्रत्येकाभिसम्बन्धम् । द्वौ गकारौ चत्वारो लघवो भवन्ति, स एको (ऽऽ) गण: । गकारोऽन्ते यस्य स गन्तो द्वितीयो (।।ऽ) गण: । गकारो मध्ये यस्य स गमध्यस्तृतीयो (।ऽ।) गण: । गकार आदौ यस्यासौ गादिश्चतुर्थो (ऽ।।) गण: । नकारलकारौ मिलितौ चत्वारो लघवो भवन्ति, स पञ्चमो (।।।।) गण: ।।

एवं गणेषु सिद्धेष्विदानी[१]मार्यालक्षणं करोति—

**शिवप्रसादिनी**—इस सूत्र के माध्यम से गण के विन्यास भेदों को दिखाया जा रहा है । जिस कारण से वह गण कहीं पर आदि में दो गुरु (ऽऽ) अक्षरों से युक्त होता है, किसी जगह दो लघुवर्णों के अन्त में एक गुरु वर्ण (।।ऽ) से युक्त हुआ करता है ।

---

(१) आर्याया: प्रथमं लक्षणप्रयोजनमुक्तं **वृत्तमणिकोशे**—

'घटिकासहस्रयुग्भि: शिवो जगौ पञ्चभिर्मुखैरार्याम् ।
त्र्यब्दान् द्वादश दिवसान् षोडश घटिकाश्च निर्निद्र: ।।
आर्यादबोध: कठिनो ज्ञातुं व्यक्तानि वर्णवृत्तानि ।
आदौ सलक्षणममूं तानि च परत: सलक्षणं ब्रूम: ।।' (वि० ३ श्लो० १-२)

'पढमं बारहमत्ता बीए अट्ठादहेहिं संजुत्ता ।
जह पढमं तह तीअं दहपञ्चविहूसिआ गाहा ।।' इति प्रा०पि०सू० १।४९

'सब्बाए गाहाए सत्तावण्णइँ होन्ति मत्ताइं ।
पुब्बद्धम्मि अ तीसा सत्ताईसा परद्धम्मि ।।' इति प्रा०पि०सू० १।५१
'गाथा' इति नामान्तरमार्याया: प्राकृतपिङ्गले ।

एक जगह पुनः एक मध्य गुरुवर्ण तथा आदि अन्त के एक-एक लघु वर्णों वाले होते हैं। किसी स्थल में आदि गुरु वर्ण और अन्त के दो लघुवर्णों वाला होता है। किसी जगह चार लघु वर्णों से युक्त होते हैं। इस प्रकार से गण के गुरु वर्णों के विन्यास भेद के कारणों के सम्यग् ज्ञान के लिए प्रथमाऽध्याय के अन्तर्गत विद्यमान तेरहवाँ (१३) सूत्र अवलोकनीय है। सूत्रस्थ "अन्त मध्याऽऽदिः" शब्द में प्रथम द्वन्द्व समास हुआ "अन्तश्च मध्यश्च आदिश्च इति = अन्तमध्याऽऽदयः।" इस प्रकार से द्वन्द्व समास करके पुनः गुरुसञ्ज्ञक "ग" वर्ण के साथ बहुव्रीहिसमास गः (= गकाराः) "अन्तमध्याऽऽदयो यस्य सः = गन्तमध्याऽदिः" (= गणः) यहाँ पर "द्वन्द्वान्ते द्वन्द्व मध्ये द्वन्द्वौ च श्रूयमाणं पदं प्रत्येकमभिसम्बद्ध्यतो" अर्थात् "द्वन्द्वसमास" सञ्ज्ञा विषयीभूत समुदाय के अन्त में मध्य में अथवा आदि में श्रावणप्रत्यक्ष का विषयीभूत पद द्वन्द्वसमास घटक प्रत्येक पद के साथ सम्बद्ध होता है। इस शाब्दिकनियमाऽनुसार प्रकृत में द्वन्द्व घटक आदि, मध्य और अन्त इन तीनों पदों के साथ सम्बद्ध होकर इस प्रकार के अर्थ को अभिव्यक्त करेगा—आदि गुरु, मध्य गुरु और अन्त गुरु वाला गण होता है। ग् = गुरु सञ्ज्ञक वर्ण, दो गुरु सञ्ज्ञक के चार लघु अक्षर होते हैं। इस प्रकार दो गुरु वर्णों के एकगण होते हैं। एक गकार (गुरुसञ्ज्ञक = (ऽ) अन्त में हो जिसके, वह गन्त (।।ऽ)। गण कहलाता है, पुनः गकार मध्य (।ऽ।) वाला तृतीयगण होता है। इसी प्रकार गकार आदि वाला (ऽ।।) चतुर्थ गण सिद्ध होता है। एवं न कार ("न ह स न्" पि० सू० १।८।।) इस सूत्र से विहित न् = तीन लघु (।।।) अक्षरों के साथ एक ल = लघुवर्ण वाला गण, अर्थात् चार लघु वर्णों का पाँचवाँ गण होता है। इसी पञ्चम गण के बोधाऽभिप्राय से "न्लश्च" सूत्र का यह अन्तिम अंश कहा गया है। छठे प्रकार का गण भेद कोई अन्य होता ही नहीं है ।।१३।।

(इस प्रकार गणों के सिद्ध हो जाने पर अग्रिम सूत्र द्वारा इस समय आर्या (=छन्द) का लक्षण करते हैं—)

## स्वरा अर्धं चाऽऽर्याऽर्धम् ।४।१४।।

**मृतसञ्जीवनी**—गणग्रहणमनुवर्तते। स्वरा इति सप्तानां संज्ञा। यत्र प्रस्तारे गणाः सप्त भवन्ति, अर्धं च [१]गणस्य, तदार्यार्धं निष्पद्यते। द्वितीयमप्यर्धं तादृशमेव। समप्रविभागेऽर्धशब्दः। यद्येवमर्धशब्दस्य '[२]अर्धं नपुंसकम्' (पा०सू० २।२।२) इत्यनेनैकदेशि-

(१) गुरुरूपो द्विमात्र इत्यर्थः।

(२) इदं सूत्रं श्रीमता भगवता पतञ्जलिना प्रत्याख्यातम् "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" (पा०सू० २।४।२६) इति सूत्रे भाष्ये, तथा च भाष्यम्—'एकदेशिसमासो नारप्स्यते। कथमर्धपिप्पलीति? । समानाधिकरणसमासो भविष्यति, अर्धं च सा पिप्पली

समासे सति पूर्वनिपातः प्राप्नोति यथा—अर्धाढकम्, अर्धपलम्, अर्धखारीति । नैष दोषः; सत्यपि समप्रविभागत्वे सम्बन्धमात्रस्यात्र विवक्षितत्वात् । समप्रविभागस्याप्यर्धशब्दस्यैकदेशिसमासव्यभिचारदर्शनात् । यथा—तुलार्धेन गां क्रीणाति ।

पणार्धक्रीतताम्बूलचर्वणादगुर्वितानना: ।
अनभ्यासाद्गलल्लाला यान्त्येते वारयात्रिकाः ॥

तथात्रासमप्रविभागत्वेऽप्यर्धशब्दस्यैकदेशिसमासदर्शनाच्च ।

अर्धचन्द्रं दधन्मूर्ध्नि पातु वः पार्वतीपतिः ।
कालकूटविषं हन्तु सङ्गृहीतमिवामृतम् ॥

तथा च ।

तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनम् ।
अर्धराज्यहरं भृत्यं यो न हन्यात्स हन्यते ॥

अत्रार्धस्य लक्षणं कुर्वाण एवं ज्ञापयत्याचार्यो यदार्यायामवान्तरपादव्यवस्था नास्ति । तेन 'द्वीपादन्यस्मादपि' इत्यादौ गणत्रयस्यान्ते गुरुत्वं न स्यात् ।

१ २ ३ ४ ५ ६ ७
ऽ ऽ ऽ ऽ ऽ । । ऽ ऽ । । । । । ऽ । ऽ ऽ ऽ
द्वीपा—दन्य—स्मादपि मध्या—दपि जल—निधेर्दि—शोऽप्य—न्तात् ।

१ २ ३ ४ ५ ६ ७
ऽ ऽ । । । । । । । । । । । । । । । । । ऽ ऽ ऽ
आनी—य झटिति घटयति विधिरभि—मतमभि—मु—खीभू—तः ।

(रत्नावली-अं० १ श्लो० ६)

**शिवप्रसादिनी**—प्रकृत सूत्र में पूर्व से "गणः" की अनुवृत्ति होती है । स्वराः = लोक में संगीत के सात स्वर प्रसिद्ध हैं । अतः "स्वर" शब्द लक्षणा द्वारा सात संख्याओं के गणों के बोधक हैं । इस प्रकार सूत्राऽर्थ पर्यवसित होगा–जिस छन्द में सात गण के साथ ही साथ एक गण (।।।।-ऽऽ) का आधा (।।-ऽ) हो इस प्रकार के साढे सात गणों का आर्याऽर्ध (=आधाछन्द) होता है । "आर्याऽर्धम्" शब्द घटक अर्ध पन्द्रह गण वाले सम्पूर्ण छन्द का सम अर्ध, अर्थात् सूत्र में अर्ध शब्द समान-समान अर्ध भाग वाले अर्थ

---

चार्धपिप्पलीति । न सिध्यति, परत्वात्षष्ठीसमासः प्राप्नोति । अद्य पुनरयमेकदेशसमास आरभ्यमाणः षष्ठीसमासं बाधते । इष्यते च षष्ठीसमासोऽपि । तद्यथा—अपूपार्धं मया भक्षितम् । ग्रामार्धं मया लब्धमिति । एवं पिप्पल्यर्धमिति भवितव्यम् ।' इति अत एव 'प्रेम्णा शरीरार्धहराम् ।

का वाचक है। इस प्रकार यदि सम प्रविभागाऽर्थक अर्धशब्द का सूत्र में प्रयोग किया गया है तो ''आर्याऽर्ध'' घटक अर्ध के साथ आर्या शब्द का ''आर्याया: अर्धम्'' इस विग्रहाऽर्थ की विवक्षा में (''समांश वाची नपुंसक लिङ्ग में विद्यमान ''अर्धम्'' इस शब्द का षष्ठयन्त पद के साथ समास हो'' इत्यर्थक) ''अर्धं नपुंसकम्'' इस सूत्र से समास होगा और उस सूत्र में ''अर्धम्'' शब्द प्रथमान्त पद बोध्य होने के कारण उपसर्जन सञ्ज्ञा और ''उपसर्जनं पूर्वम्'' सूत्र से पूर्व प्रयोग आदेश होने पर जिस प्रकार अन्य स्थलों में ''अर्धाऽऽढकम्'' ढाई शेर का आधा सवाशेर, ''अर्द्ध पलम्'' (पल्ले का आधा भाग) ''अर्धखारी'' इत्यादि प्रयोग अर्धाऽऽदि घटित ही साधु रूप में सुने जाते हैं, उसी प्रकार प्रकृत में ''अर्धाऽऽर्या'' ही होना चाहिए ''आर्याऽर्धम्'' का प्रयोग व्याकरण-शास्त्राऽनुमोदित न होने से सूत्रकार के सूत्र में वैसा असाधु शब्द, प्रयोग में नहीं लाना चाहिए? उपर्युक्त प्रकार का दोष प्रकृत में नहीं है, क्योंकि सम्बन्ध मात्र की विवक्षा में ''षष्ठी'' सूत्र द्वारा ही उक्त विषय में समास का विधान होता है, और ऐसी स्थिति में ''आर्याया: अर्धम्'' इस विग्रहार्थ की विवक्षा में ''आर्याऽर्धम्'' शब्द की सुकरता के साथ निष्कण्टक रूप से निष्पत्ति हो जाती है। अत एव ''तुलाऽर्धेन गां क्रीणाति'' इत्यादि प्रयोग स्थल में समास के उत्तर भाग में अर्ध शब्द का स्थान न्यायोचित सिद्ध होता है। प्रकृत सूत्राऽर्थ का समन्वय वृत्ति ग्रन्थ में स्पष्टरीति से प्रदर्शित किया गया है। अत: भ्रम-संशयाऽऽदि की दशा को हटाने के लिए प्रकृत सूत्र का वृत्ति ग्रन्थ देखना चाहिए। इसके अतिरिक्त ''आर्याऽर्धम्'' शब्द के प्रयोग से सूत्रकार का यह भी अभिप्राय व्यक्त होता है कि आर्या छन्द में जिस प्रकार साढ़े सात गण का पूर्व में आधा छन्द हुआ करता है उसी प्रकार उत्तर भाग की आधी आर्या भी साढे-सात गणों का ही होगा। अत: आर्या छन्द में साढ़े सात गणों के भीतर भी पाद की व्यवस्था करना, या मानना सूत्रकार को स्वीकार नहीं है ॥१४॥

## अत्रायुङ् न ज् ।४।१५।।

**मृतसञ्जीवनी**—अत्रार्याच्छन्दसि, अयुग्गण:, प्रथमस्तृतीय: पञ्चम: सप्तमश्च, न जगणो (।ऽ।) मध्यगुरुर्न कर्तव्य: । शेषास्तु कामतो भवन्ति ॥

**शिवप्रसादिनी**—(अत्र) इस आर्याछन्द में, (अयुङ् =) अयुग्गण = अयुग्मगण के रूप में स्थित हुए-प्रथम, तृतीय, पञ्चम एवं सप्तमगण न ज् (गण:) = (।ऽ।) मध्य गुरु सञ्ज्ञक अक्षर नहीं किया जाना चाहिए। शेष द्वितीय, चतुर्थ, आदि गणों में तो अपनी इच्छाऽनुसार जगण (।ऽ।)=मध्य गुरुवर्णघटितगण अपनी इच्छाऽनुसार हुआ करते हैं, अर्थात् वहाँ पर जगण का प्रयोग किया जा सकता है ॥१५॥

## [1]षष्ठो ज् ।४।१६।।

**मृतसञ्जीवनी**—अत्रार्याच्छन्दसि षष्ठो जगणो (।ऽ।) मध्यगुरुरेव भवति । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७
ऽ । । । । ऽ ऽ ऽ ऽ ऽ । । ऽ । ऽ । । । । । ऽ
सा जय—ति जग—त्यार्या देवी दिवमु—त्पतिष्णु—रतिरुचि—रा ।

१ २ ३ ४ ५ ६ ७
ऽ ऽ । ऽ । । ।ऽ ऽ । । ऽ ऽ । ऽ । । ऽ
या दृ—श्यते ऽम्ब—रतले कंसव—धोत्पा—तविद्यु—दि—व ।।

**शिवप्रसादिनी**—इस आर्या छन्द में छठवाँ जगण (।ऽ।) = मध्य गुरु वाला ही होता है ।।१६।।

## [2]न्लौ वा ।४।१७।।

**मृतसञ्जीवनी**—'षष्ठः' इत्यनुवर्तते । आर्यायाः षष्ठो गणः (।। ।।) सर्वलघुर्वा भवति । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७
ऽ ऽ । ऽ । ऽ ऽ ऽ ऽ ऽ ऽ । । । । । । । । ऽ
रूपा—न्तरेण देवीं तामे—व स्तौ—मि सपदि किल महि—षः ।

१ २ ३ ४ ५ ६ ७
ऽ ऽ ऽ । । ऽ । । ऽ । । । । ऽ । ऽ ऽ ऽ
पाद—स्पर्शसु—खादिव मीलित—नयनो—ऽभ—वद्य—स्याः ।।

**शिवप्रसादिनी**—यहाँ पर पूर्व सूत्र से "षष्ठः" की अनुवृत्ति आती है । तदनुसार सूत्रार्थ होगा अथवा आर्या छन्द का छठवाँगण न्=(।।।) लघु, यथा ल्=एक लघु इन दोनों को मिलाकर चार लघु अक्षर होगें, अर्थात् षष्ठगण सम्पूर्ण लघु (।। ।।) अक्षरों वाला ही होगा ।।१७।।

## न्लौ चेत्पदं द्वितीयादि ।४।१८।।

---

(१-२) एतदर्थानुवादकं प्राकृतपिङ्गलसूत्रम्.
'सत्तगणा दीहंता जो णलहू छट्ठ णेह जो विसमे ।
तह गाहे विअअद्धे छट्ठं लहुअं विआणेहु ।।' (१।५०) इति ।

**मृतसञ्जीवनी**—षष्ठो (।। ।।) गणः सर्वलघुश्चेद्भवति, तदा द्वितीयाक्षरादारभ्य पदं प्रवर्तते । पूर्वमेवोदाहरणम् ॥

यहाँ पर भी ''षष्ठः शब्द की अनुवृत्ति होती है, जिससे सूत्राऽर्थ होगा—षष्ठः = सर्वलघु सञ्ज्ञक अक्षर (।।।।) वाला यदि छठवाँगण होगा, तो वहाँ पर द्वितीय लघु अक्षर से चतुर्थ लघ्वक्षर पर्यन्त, अर्थात् प्रथम लघ्वक्षर को छोड़कर शेष बचे उस गण का द्वितीय, तृतीय एवं चतुर्थ लघ्वक्षर मिलकर पद स्वरूप में पर्यवसित होता है, अर्थात् तीनों लघ्वक्षरों को पद होना चाहिए ॥१८॥

## सप्तमः प्रथमादि ।४।१९।।

**मृतसञ्जीवनी**—षष्ठे गणे मध्यगुरौ (।ऽ।) सर्वलघौ (।।।।) वा जाते सप्तमो गणः (।।।।) सर्वलघुश्चेद्भवति, तदा प्रथमाक्षरादारभ्य पदं प्रवर्तते । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७
ऽऽ ऽ।। ऽऽ ।ऽ। ऽऽ ।ऽ। ।।।। ऽ
ब्रह्म—क्षत्रकु—लीनः [१]समस्त—साम—न्तचक्र—नुतचर—णः ।

१ २ ३ ४ ५ ६ ७
।।।। ।ऽ। ऽऽ ऽ ऽ ऽऽ ।ऽ। । ऽ
सकलसु—कृतैक—पुञ्जः श्रीमान् **मुञ्ज**—श्चिरं ज—य—ति ॥

१ २ ३ ४ ५ ६ ७
।।।। ।ऽ। ऽऽ ऽऽ ।।।। ।।।। ।।।। ऽ
जयति भु—वनैक—वीरः सीरा—युधतुलि—तविपुल—बलविभ—वः ।

१ २ ३ ४ ५ ६ ७
।।।। ।ऽ। ।।।। ऽ।। ऽऽ । ऽ ऽ ऽ
अनवर—तवित्त—वितरण—निर्जित—चम्पा—धि—पो **मु—ञ्जः** ॥

**शिवप्रसादिनी**—षष्ठगण में मध्यगुरु (।ऽ।) अथवा सर्व लघुअक्षर (।।।।) होने पर सातवाँ गण भी यदि सर्वलघ्वक्षर (।।।।) होता है, तो वैसी स्थिति में सातवाँ गण के प्रथम अक्षर से आरम्भ करके साढे सात तक में पद हुआ करता है । इसका और इससे पूर्व सूत्र का उदाहरण वृत्ति ग्रन्थ में सरलता के साथ प्रस्तुत किया गया है, अतः सूत्राऽर्थ का स्पष्टीकरण पुनः उसी स्थल के अवलोकन से होगा ॥१९॥

## अन्त्ये पञ्चमः ।४।२०।।

---

(१) 'प्रलीनसामन्त' इति लिखितोदाहरणपुस्तके ।

**मृतसञ्जीवनी**—अन्त्ये भवमन्त्यम्। दिगादित्वाद्यत्। अन्त्ये द्वितीयार्धे पञ्चमश्चेद्गणः (।।।।) सर्वलघुर्भवति, तदा प्रथमादि पदं प्रवर्तते। तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७

।।।। ऽ।। ऽऽ ।।ऽ ।।ऽ ।ऽ। ऽ।। ऽ

स जयति–**वाक्पति–राजः** सकला–र्थिमनो–रथैक–कल्पत—रुः।

१ २ ३ ४ ५ ६ ७

ऽऽ ।ऽ। ऽ।। ऽऽ ।।।। ।ऽ। । ऽ

प्रत्य—र्भिभूत—पार्थिव—लक्ष्मी—हठहर—णदुर्ल—लि—तः॥

**शिवप्रसादिनी**—अन्त में होने (रहने) वाले को अन्त्य कहते हैं "अन्त" शब्द से "होने" अर्थ में यत् प्रत्यय होने पर अन्त्य शब्द निष्पन्न होता है। दिगादिगण पठित होने के कारण अन्त से यत् प्रत्यय का लाभ हुआ है ऐसा समझना चाहिए। सूत्रार्थ होगा—आर्याछन्द के आधे उत्तरवाले भाग में यदि पञ्चम गण सर्व लघु अक्षर (।।।।) होता है, तो वहाँ पर पञ्चमगण के प्रथमाक्षर से आरम्भ करके पद प्रवर्तित होता है॥२०॥

## [१]षष्ठश्च ल्।४।२१॥

**मृतसञ्जीवनी**—'अन्त्ये' इत्यनुवर्तते। अन्त्ये द्वितीयेऽर्धे मध्यगुरौ (।ऽ।) सर्वलघौ (।।।।) वा षष्ठे गणे प्राप्ते तदपवादो लकारो विधीयते। पूर्वमेवोदाहरणम्॥

**शिवप्रसादिनी**—यहाँ पर पूर्वसूत्र से "अन्त्ये" शब्द की अनुवृत्ति आती है। अन्त्ये = आर्या के द्वितीय अर्ध भाग के षष्ठगण में पि०सू० ४।१६-१७ सूत्र द्वारा मध्यगुरु (।ऽ।) अथवा सर्व लघु मात्रिक अक्षरों के प्राप्त होने पर प्रकृत सूत्र के द्वारा उन दोनों सूत्रों को बाँध करके ल् = एक मात्रिक अक्षर का विधान किया जा रहा है। तदनुसार सूत्रार्थ का स्वरूप तो इस प्रकार होगा–आर्या छन्द में द्वितीयाऽर्ध भाग के षष्ठ गण केवल एक लघ्वक्षर (१) का होगा। इस सूत्र के विषय में कुछ विचारकों का कथन यह है कि "षष्ठश्च ल्" (४।२१) यह सूत्र "लः समुद्रा गणः" (४।१२।।) इसका अपवाद है, जिसके कारण द्वितीयाऽर्धभाग का षष्ठगण एक लघ्वक्षर (१) मात्रा का होगा, ऐसा जानना चाहिए। वृत्तिग्रन्थ में इसका उदाहरण पुनः ४।१९, अथवा ४।२२ में दिये छन्द के उत्तराऽर्ध में स्थित षष्ठ गण है। अतः वहीं देखना चाहिए॥२१॥

## त्रिषु गणेषु पादः पथ्याद्ये च।४।२२॥

---

(१) इदं सूत्रं 'लः समुद्रा गणः' (पि०सू० ४।१२) इत्यस्यापवादभूतम्, तेन द्वितीयार्धे एकेनापि लघुना षष्ठो गणो भवतीति बोध्यम्।

**मृतसञ्जीवनी**—चकारोऽन्त्य इत्यनुकर्षणार्थः । यस्या आर्याया अन्त्येऽर्धे आद्ये च त्रिषु गणेषु पादः समाप्यते, सा आर्या 'पथ्या' नाम भवति । तद्यथा—

१　२　३　४　५　६　७

ऽ ऽ　ऽ ऽ　ऽ ऽ ऽ । ।　ऽ ऽ । ऽ । ऽ ऽ　ऽ

पथ्या—शी व्या—यामी स्त्रीषु जि—तात्मा नरो न रोगी स्यात् ।

१　२　३　४　५　६

। । । ।　ऽ । ।　ऽ ऽ　ऽ । । ऽ ऽ　। ऽ ऽ　ऽ

यदि वच—सा मन—सा वा—द्रुह्यति नित्यं न भूते—भ्यः ॥

पादग्रहणं यत्युपलक्षणार्थम् ॥

**शिवप्रसादिनी**—सूत्र में ''च'' का उपादान अन्त्य शब्द के अनुवर्त्तनार्थ प्रयुक्त हुआ है । जिस आर्या छन्द के प्रथम भाग में विद्यमान (१२ वारह मात्राओं वाले) तीन गणों में, तथा उसी प्रकार उत्तराऽर्ध भाग में भी चार-चार के क्रम से तीन गणों में (बारह मात्राओं वाला) पादपूर्ण होता हो, तो उस आर्या छन्द को ''पथ्या'' नाम से कहा जाता है । विशेष—(१) पथ्या (२) विपुला (३) चपला (४) मुखचपला (५) जघन चपला (६) गीति (७) उपगीति (८) उद्गीति एवम् (९) आर्या गीति के ये नौ भेद आर्याछन्द के स्वीकार किये गये हैं, उन नवों प्रकार के आर्या छन्द में जहाँ पर पूर्वाऽर्द्ध और उत्तराऽर्ध भाग के अन्तर्गत विद्यमान आरम्भिक दोनों पादों में चार-चार मात्रा वाले (१२ मात्राओं) तीन-तीन गणों के अनन्तर उच्चारण की विश्रान्ति होती हो, तो उस आर्या छन्द को ''पथ्या'' कहा जाता है ॥२२॥

विपुलाछन्द का लक्षण करते हैं—

## विपुलान्या ।४।२३।।

**मृतसञ्जीवनी**—यस्य आर्याया अन्त्येऽर्धे, आद्ये वोभयोर्वा त्रिषु गणेषु पादो न विश्राम्यति, सा आर्या 'विपुला' नाम । सा चाद्यन्तोभयपूर्वकत्वात्त्रिधा भवति । सामान्येन विधानमेतत् ॥ तत्रादिविपुला—

१　२　३　४　५　६　७

ऽ ऽ　ऽ ऽ　ऽ ऽ　। ऽ ।　ऽ ऽ　। । । ।　ऽ ऽ　ऽ

स्निग्ध—च्छाया लाव—ण्यलेपि—नी किं—चिदवन—तप्रा—णा ।

१　२　३　४　५　६　७

। । । ।　ऽ ऽ　ऽ ऽ　। । ऽ　ऽ ऽ　।　ऽ ऽ　ऽ

मुखविपु—ला सौ—भाग्यं लभते स्त्रीत्या—ह **माण्ड—व्यः** ॥

अन्त्यविपुला—

१ २ ३ ४ ५ ६ ७

ऽ ऽ । ऽ । । । ऽ ऽ । । ऽ ऽ । ऽ । ऽ ऽ ऽ

चित्तं हरन्ति हरिणी—दीर्घदृ—शः का—मिनां क—लाला—पैः ।

१ २ ३ ४ ५ ६ ७

ऽ ऽ । ऽ । ऽ ऽ । । । । । । ऽ । । । । । ऽ

नीवी—विमोच—नव्या—जकथित—जघना जघनवि—पु—लाः ॥

उभयविपुला—

१ २ ३ ४ ५ ६ ७

ऽ ऽ । । । । । । ऽ । ऽ । ऽ ऽ । ऽ । ऽ । । ऽ

या स्त्री कुचकल—शनित—म्बमण्ड—ले जा—यते म—हाविपु—ला ।

१ २ ३ ४ ५ ६ ७

ऽ ऽ । ऽ । । । ऽ । ऽ । ऽ । । । ऽ । । ऽ

गम्भी—रनाभि—रतिदी—पलोच—ना भव—ति सा सु—भ—गा ।

अत्रोच्यते—पथ्याविपुलालक्षणयोः सहानवस्थानलक्षणो विरोधः, तेन मिश्रीभावो नास्ति । य एवांशो विपुलयाभिस्पृष्टस्तेनैव पथ्यात्वं नष्टं भवति, उभयाश्रयत्वाच्च पथ्यालक्षणस्य विपुलायास्तत्रांशेनापि प्रवेशो दुर्लभः । ततश्च पथ्यालक्षणैकांशवैकल्येऽपि तदन्यमात्रविषयत्वाद्विपुला भवत्येव । पथ्याचपलोश्च विरोधाभावाद्बाध्यबाधकभावो नास्ति । तत्रायं संग्रहः—

> 'एकैव भवति पथ्या तिस्रो विपुलाश्चतस्र एवं ताः ।
> चपलाभेदैस्त्रिभिरपि भिन्ना इति षोडशार्याः स्युः ॥
> गीतिचतुष्टयमित्थं प्रत्येकं षोडशप्रकारं स्यात् ।
> साकल्येनार्याणामशीतिरेवं विकल्पाः स्युः[१] ॥'

तेषामनुक्तोदाहरणान्यूह्यानि ॥

---

(१) उक्ता आर्याभेदाः सुखावबोधमय क्रमेण प्रदर्श्यन्ते—

१ पथ्यार्या
२ आदिविपुला
३ अन्तविपुला
४ उभयविपुला
५ मुखचपला पथ्या
६ मुखचपलादिविपुला
७ मुखचपलान्तविपुला
८ मुखचपलोभयविपुला
९ जघनचपला पथ्या
१० जघनचपलादिविपुला

११ जघनचपलान्तविपुला
१२ जघनचपलोभयविपुला
१३ महाचपला पथ्या
१४ महाचपलादिविपुला
१५ महाचपलान्तविपुला
१६ महाचपलोभयविपुला
१७ गीतिपथ्या
१८ गीत्यादिविपुला
१९ गीत्यन्तविपुला
२० गीत्युभयविपुला
२१ मुखचपला गीतिपथ्या
२२ मुखचपला गीत्यादिविपुला
२३ मुखचपला गीत्यन्तविपुला
२४ मुखचपला गीत्युभयविपुला
२५ जघनचपला गीतिपथ्या
२६ जघनचपला गीत्यादिविपुला
२७ जघनचपला गीत्यन्तविपुला
२८ जघनचपला गीत्युभयविपुला
२९ महाचपला गीतिपथ्या
३० महाचपला गीत्यादिविपुला
३१ महाचपला गीत्यन्तविपुला
३२ महाचपला गीत्युभयविपुला
३३ उपगीति पथ्यार्या
३४ उपगीत्यादिविपुला
३५ उपगीत्यन्तविपुला
३६ उपगीत्युभयविपुला
३७ मुखचपलोपगीतिपथ्या
३८ मुखचपलोपगीत्यादिविपुला
३९ मुखचपलोपगीत्यन्तविपुला
४० मुखचपलोपगीत्युभयविपुला
४१ जघनचपलोपगीतिपथ्या
४२ जघनचपलोपगीत्यादिविपुला
४३ जघनचपलोपगीत्यन्तविपुला
४४ जघनचपलोपगीत्युभयविपुला
४५ महाचपलोपगीतिपथ्या
४६ महाचपलोपगीत्यादिविपुला
४७ महाचपलोपगीत्यन्तविपुला
४८ महाचपलोपगीत्युभयविपुला
४९ उद्गीतिपथ्या
५० उद्गीत्यादिविपुला
५१ उद्गीत्यन्तविपुला
५२ उद्गीत्युभयविपुला
५३ मुखचपलोद्गीतिपथ्या
५४ मुखचपलोद्गीत्यादिविपुला
५५ मुखचपलोद्गीत्यन्तविपुला
५६ मुखचपलोद्गीत्युभयविपुला
५७ जघनचपलोद्गीतिपथ्या
५८ जघनचपलोद्गीत्यादिविपुला
५९ जघनचपलोद्गीत्यन्तविपुला
६० जघनचपलोद्गीत्युभयविपुला
६१ महाचपलोद्गीतिपथ्या
६२ महाचपलोद्गीत्यादिविपुला
६३ महाचपलोद्गीत्यन्तविपुला
६४ महाचपलोद्गीत्युभयविपुला
६५ आर्यागीतिपथ्या
६६ आर्यागीत्यादिविपुला
६७ आर्यागीत्यन्तविपुला
६८ आर्यागीत्युभयविपुला
६९ मुखचपलार्यागीतिपथ्या
७० मुखचपलार्यागीत्यादिविपुला
७१ मुखचपलार्यागीत्यन्तविपुला
७२ मुखचपलार्यागीत्युभयविपुला
७३ जघनचपलार्यागीतिपथ्या
७४ जघनचपलार्यागीत्यादिविपुला
७५ जघनचपलार्यागीत्यन्तविपुला
७६ जघनचपलार्यागीत्युभयविपुला
७७ महाचपलार्यागीतिपथ्या
७८ महाचपलार्यागीत्यादिविपुला
७९ महाचपलार्यागीत्यन्तविपुला
८० महाचपलार्यागीत्युभयविपुला

**शिवप्रसादिनी**—जिस आर्या के पूर्वाऽर्ध भाग तथा उत्तराऽर्ध भाग के आदि में वर्त्तमान तीन गणों (बारह मात्राओं) के अंशों को छोड़कर शेष के मात्राओं द्वारा दो पादों का निर्माण होता हो, उसे "विपुला" कहते हैं। वैसे प्रकृत सूत्र का सीधा एवं सरल अर्थ है कि—जिस आर्या छन्द के उत्तराऽर्ध भाग में, अथवा पूर्वाऽर्धभाग में विद्यमान बारह मात्रा वाले तीन गणों में पाद का विश्राम नहीं हो, किन्तु दोनों आर्याऽर्धों के प्रथमांऽश बारह-बारह मात्राओं को छोड़कर ही पादव्यवस्था होती हो, वह छन्द विपुला कहलाती है। वह छन्द पुन: आदि विपुला, अन्त्य "विपुला" एवम् उभय विपुला के भेद से तीन प्रकार के होते हैं, इनके उदाहरण के लिए वृत्ति ग्रन्थ अवलोकनीय हैं ॥२३॥

इस समय आर्या के भेद विशेष चपला का लक्षण कहते हैं—

## चपला द्वितीयचतुर्थौ ग्मध्ये जौ ।४।२४।।

**मृतसञ्जीवनी**—अधिकारोऽयम्। द्वितीयचतुर्थौ गणौ मध्यगुरु (।ऽ।) भवत:। प्रथमश्चान्तगुरु (।।ऽ), तृतीयो द्विगुरु: (ऽऽ), पञ्चमश्चादिगुरु: (ऽ।।)। शेषं यथाप्राप्तम्। एवं गकारयोर्मध्ये द्वितीयचतुर्थौ जकारौ भवत:, सा आर्या 'चपला' नाम। उदाहरणमग्रत: ॥

**शिवप्रसादिनी**—यह अधिकार सूत्र है, अत: यहाँ से आगे के सूत्रों में इसकी अनुवृत्तिधारा चलेगी। जिस आर्या छन्द के दोनों भाग में विद्यमान द्वितीय चतुर्थौ = द्वितीयगण एवं चतुर्थ गण, ग् मध्ये = दो लघुवर्ण के मध्य गुरु मात्रा वाला हो (।ऽ।) उस आर्या को "चपला" कहते हैं। इसका सरल अभिप्राय इस प्रकार है—जिस आर्या छन्द के पूर्वाऽर्ध भाग, एवम् उत्तराऽर्ध भाग के प्रथम चार मात्रा के अनन्तर द्वितीय और तृतीय गण गुरुमध्य वाले जगण (।ऽ।) हों, उस छन्द को चपला कहते हैं ॥२४॥

मुखचपला छन्द का लक्षण किया जा रहा है—

## पूर्वे मुखपूर्वा ।४।२५।।

**मृतसञ्जीवनी**—पूर्वेऽर्धे चपलालक्षणं चेद्भवति, तदासौ 'मुखचपला' आर्या। पथ्यापूर्वकं मुखचपलोदाहरणम्—

१   २   ३   ४   ५   ६   ७

।।ऽ   ।ऽ।   ऽऽ   ।ऽ।   ऽऽ   ।ऽ।   ऽ।।   ऽ

अतिदा—रुणा द्वि—जिह्वा परस्य [1]रन्ध्रा—नुचारि—णी कुटि—ला।

१   २   ३   ४   ५   ६   ७

ऽऽ   ।।।।   ऽऽ   ऽऽ   ऽऽ   ।।।।   ।   ऽ

दूरा—त्परिहर—णीया नारी नागी—व मुखच—प—ला ॥

(१) 'मर्मानुसारिणी' इति लिखितोदाहरणपुस्तके।

आदिविपुलापूर्वकं मुखचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७

ऽ ऽ। ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ

[1]यस्या विलोच—ने पि—ङ्गले भ्रु—वौ सं—गते मु—खं दी—र्घम्।

१ २ ३ ४ ५ ६ ७

। । ऽ । ऽ । ऽ ऽ ऽ ऽ ऽ । । । । । । । ऽ

विपुलो—न्नताश्च दन्ताः कान्ता—सौ भव—ति मुखच—प—ला ॥

[2]अन्त्यविपुलापूर्वकं मुखचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ

विपुला—भिजात—वंशो—द्भवापि रूपा—तिरेक—रम्या—पि।

१ २ ३ ४ ५ ६ ७

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ । । । । । । । ऽ

[3]निर्वा—स्यते गृ—हाद्व—ल्लभापि चेद्भव—ति मुखच—प—ला ॥

**शिवप्रसादिनी**—जिसके पूर्वे = पूर्वोऽर्ध में "चपला" का लक्षण हो और उत्तराऽर्ध में सामान्यरूप से आर्या का लक्षण घटता हो, उसे "मुख चपला आर्याछन्द" कहते हैं। उदाहरण के लिए वृत्तिग्रन्थ द्रष्टव्य है ॥२५॥

जघनचपला का लक्षण कहा जाता है—

## जघनपूर्वेतरत्र ।४।२६।।

**मृतसञ्जीवनी**—द्वितीयेऽर्धे चपलालक्षणं चेद्भवति, सार्या 'जघनचपला' नाम। तत्र पथ्यापूर्वकं जघनचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७

ऽ ऽ ऽ । । ऽ ऽ ऽ । । । । ऽ । ऽ । ऽ ऽ ऽ

यत्पा—दस्य क—निष्ठा न स्पृश—ति मही—मनामि—का वा—पि।

---

(१) 'यस्याश्च' इत्यपि तत्रैव।

(२) 'उभयविपुलापूर्व' इति क० मु० पुस्तके।

(३) 'निःसार्यते' इत्यपि च तत्रैव।

१ २ ३ ४ ५ ६ ७

ऽ ऽ ।ऽ। ऽ ऽ ।ऽ। ऽ ऽ ।।।। । ऽ

सा स—र्वधूर्त—भोग्या भवेद—वश्यं जघनच—प—ला ॥

अन्त्यविपुलापूर्वकं जघनचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७

ऽ ऽ ऽ ऽ ऽ ऽ । ऽ । ऽ ऽ ।ऽ। ऽ ऽ ऽ

यस्याः पादा—ङ्गुष्ठं व्यतीत्य याति प्रदेशि—नी दी—र्घा ।

१ २ ३ ४ ५ ६ ७

।।ऽ।ऽ। ऽ ऽ । ऽ । ऽ।। । ।।ऽ ऽ

विपुले कुले प्र—सूता—पि सा ध्रु—वं जघ—न—चपला स्यात् ॥

महाविपुलापूर्वकं जघनचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७

।।ऽ ।।ऽ ।।ऽ । ऽ । ऽ।। ।ऽ। ऽऽ ऽ

मकर—ध्वजस—द्मनि दृ—श्यते स्फु—टं तिल—कलाञ्छ—नं य—स्याः ।

१ २ ३ ४ ५ ६ ७

।।ऽ ।ऽ। ऽ ऽ । ऽ । ऽ ।। । । । ऽ ऽ ऽ

विपुला—न्वयप्र—जाता—पि जाय—ते जघ—न—च—पला—सौ ॥

**शिवप्रसादिनी**—जिस छन्द के पूर्वाऽर्द्ध में आर्याछन्द का सामान्य लक्षण हो, और उत्तराऽर्ध में चपला का लक्षण हो, तो वह आर्या "जघन चपला" नाम से कहा जाता है ॥२६॥

महाचपला का लक्षण—

## उभयोर्महाचपला ।४।२७।।

**मृतसञ्जीवनी**—यस्या उभयोरर्धयोश्चपलालक्षणं भवति, सार्या 'महाचपला' नाम । तत्र पथ्यापूर्वकं महाचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७

।।ऽ ।ऽ। ऽ ऽ ।ऽ। ऽ ऽ ।ऽ। ऽऽ ऽ

हृदयं हरन्ति नार्यो मुनेर—पि भ्रू—कटाक्ष—विक्षे—पैः ।

१ २ ३ ४ ५ ६ ७

ऽऽ ।ऽ। ऽऽ ऽ। ऽऽ ।ऽ। । ऽ

दोर्मू—लनाभि—देशं निदर्श—यन्त्यो महाच—प—लाः ॥

विपुलापूर्वकं महाचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७

।।ऽ ।ऽ। ऽऽ ।ऽ। ऽऽ ।ऽ। ।ऽऽ ऽ

चिबुके कपोल—देशे—ऽपि कूपि—का दृ—श्यते स्मि—ते य—स्याः ।

१ २ ३ ४ ५ ६ ७

।।ऽ ।ऽ। ऽऽ ।ऽ। ऽऽ ।ऽ। । ऽ

विपुला—न्वयप्र—जाता—पि जाय—ते सा महाच—प—ला ॥

**शिवप्रसादिनी**—जिस आर्या छन्द के पूर्वाऽर्ध एवम् उत्तराऽर्ध भाग में (पि०सू० ४।२४॥) सूत्र निर्दिष्ट चपला आर्या का लक्षण घटित (लक्षित) होता हो, वह आर्या छन्द ''महाचपला'' कहलाता है ॥२७॥

(गीति = छन्द का लक्षण—)

## आद्यर्धसमा गीतिः ।४।२८।।

**मृतसञ्जीवनी**—आद्यर्धेन सममन्त्यमर्ध यस्याः साद्यर्धसमा 'गीतिः' नाम । अन्त्यपदलोपी समासः । एतदुक्तं भवति—द्वितीयेऽप्यर्धे षष्ठो गणो (।ऽ।) जकारो न्लौ (।। ।।) वा कर्तव्यः ॥

तत्र पथ्यागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७

।।ऽ ऽऽ ।।ऽ ऽ।। ।।ऽ ।ऽ। ऽऽ ऽ

मधुरं वीणा—रणितं पञ्चम—सुभग—श्च कोकि—लाला—पः ।

१ २ ३ ४ ५ ६ ७

ऽऽ ऽ।। ऽऽ ऽऽ ।।ऽ ।ऽ। ऽ।। ऽ

गीतिः पौरव—धूनां सुप्तं कुसुमा—युधं प्र—बोधय—ति ॥

आदिविपुलागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७

।।।। ऽ।। ऽऽ ।ऽ। ऽऽ ।ऽ। ।।ऽ ऽ

इयमप—रा विपु—ला गी—तिरुच्य—ते स—र्वलोक—हितहे—तोः ।

१ २ ३ ४ ५ ६ ७

। । ऽ । ऽ । ऽ ऽ । ऽ । । । ऽ । ऽ । ऽ ऽ ऽ

यदनि—ष्टमात्म—नस्त—त्परेषु भवता—पि मा क्व—चित्का—रि ॥

पथ्यामहाचपलागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । । । ऽ ऽ

कामं चकास्ति—गीति—र्मृगीदृ—शां सी—धुपान—चपला—नाम् ।

१ २ ३ ४ ५ ६ ७

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । । । । । । ऽ ऽ

सुरतं—च मुक्त—लज्जं निरर्ग—लोल्ला—पमणित—रमणी—यम् ॥

महाविपुलामहाचपलागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । । । । । । । । ऽ

पञ्चे—षुवल्ल—भः प—ञ्चमध्व—निस्त—त्र भवति—यदि विपु—लः ।

१ २ ३ ४ ५ ६ ७

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ

चपलं—करोति कामा—कुलं म—नः का—मिनाम—सौ गी—तिः ॥

**शिवप्रसादिनी**—जिस आर्या (छन्द) का उत्तराऽर्ध भाग प्रथमाऽर्धभाग के समानमात्रा वाला हो, उस आर्या को ''गीति'' कहा जाता है। भाव यह है कि जिस आर्या छन्द के उत्तराऽर्ध भाग प्रथमाऽर्ध भाग के समान षष्ठ (छः) गण, मध्य गुरु, अथवा सर्वगुरु वाला हो, उस आर्या को ''गीति'' कहते हैं ॥२८॥

(उपगीतिछन्द का लक्षण—)

## अन्त्येनोपगीतिः ।४।२९।।

**मृतसञ्जीवनी**—'समा' इत्यनुवर्तते। अन्त्येनार्धेन सममाद्यमर्धं यस्याः, सार्या 'उपगीतिः' नाम। तत्र पथ्योपगीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७

ऽ ऽ ऽ । । ऽ । । ऽ ऽ ऽ ऽ । ऽ । । ऽ

गान्ध—र्वं मक—रध्वज—देव—स्यास्त्रं जगद्वि—ज—यि ।

१ २ ३ ४ ५ ६ ७
। ।।। ऽ । । ऽ।। ।।ऽ ऽ ऽ । ऽऽ ऽ
इति सम—वेक्ष्य मु—मुक्षुभि—रुपगी—तिस्त्य—ज्य—ते दे—शः ॥

महाविपुलोपगीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७
।। ऽ ।ऽ।ऽऽ ।।।। ऽ।। । ऽऽ ऽ
विपुलो—पगीति झङ्का—रमुखरि—ते भ्रम—र—माला—नाम् ।

१ २ ३ ४ ५ ६ ७
ऽ।। ऽ।। ऽ ऽ ।ऽ। ।।ऽ। ऽ ऽ ऽ
रैवत—कोपव—ने व—स्तुमस्तु सततं म—म प्री—तिः ॥

पथ्यामहाचपलोपगीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७
।। ऽ ।ऽ। ऽऽ।ऽ।ऽऽ।ऽ। । ऽ
विषया—मिषाभि—लाषं करोति चित्तं सदा च—प—लम् ।

१ २ ३ ४ ५ ६ ७
ऽऽ ।ऽ। ऽऽ ।ऽ। ऽ ऽ। ऽ ऽ ऽ
वैरा—ग्यभाव—नानां तथोप—गीत्या भ—वेत्स्व—स्थम् ॥

महाविपुलामहाचपलोपगीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७
।। ऽ ।ऽ।ऽऽ । ऽ । ऽ ऽ । ऽ ऽ ऽ
विपुलो—पगीति संत्य—ज्यतामि—दं स्था—न—कं भि—क्षो ।

१ २ ३ ४ ५ ६ ७
।। ऽ । ऽ। ऽऽ । ऽ । ऽ ऽ । ऽ ऽ ऽ
विषया—भिलाष—दोषे—ण बाध्य—ते च—ञ्च—लं चि—त्तम् ॥

**शिवप्रसादिनी**—प्रकृत सूत्र में पूर्व से "समा" की अनुवृत्ति आ रही है। उत्तराऽर्धभाग के समान पूर्वाऽर्ध भाग हो जिस पद्य का, वह पद्य (आर्या छन्द) "उपगीति" नाम से कही जाती है ॥२९॥

(उद्‌गीतिछन्द का लक्षण—)

**[१]उत्क्रमेणोद्‌गीतिः ।४।३०।।**

---

(१) व्युत्क्रमेणेति क्वचित्पाठः ।

**मृतसञ्जीवनी**—पूर्वोक्तात्क्रमाद्विपरीतः क्रम उत्क्रमः। अयमर्थः—आद्यमन्त्यं भवत्यर्धम्, अन्त्यमादौ, सा 'उद्गीतिः' नाम आर्या। तत्र पथ्योद्गीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७
ऽ।। ऽऽ ।।ऽ ।।ऽ ऽऽ ।ऽ। । ऽ

व्याध इ—वोद्गी—तिरवैः प्रथमं ताव—न्मनो ह—र—सि।

१ २ ३ ४ ५ ६ ७
ऽ।। ।।ऽ ऽ।। ऽऽ ऽऽ ।ऽ। ऽऽ ऽ

दुर्नय—कर वि—श्राम्यसि पश्चा—त्ताणे—षु विप्रि—यैः श—ल्यैः॥

महाविपुलोद्गीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७
ऽऽ ।ऽ। ऽऽ ।ऽ। ।।ऽ ।ऽ। । ऽ

एषा तवाप—रोद्गी[1]—तिरत्र विपुला परिभ्र—म—ति।

१ २ ३ ४ ५ ६ ७
ऽऽ ।ऽ। ऽऽ ।।।। ऽऽ ।ऽ। ।।ऽ ऽ

त्वद्व—ल्लभापि यत्की—र्तिरखिल—दिक्पा—लपार्श्व—मुपया—ति॥

पथ्यामहाचपलोद्गीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७
ऽऽ ।ऽ। ऽऽ ।ऽ। ऽऽ । ।।ऽ ऽ

उद्गी—तिरत्र नित्यं प्रवर्त—ते का—म—चपला—नाम्।

१ २ ३ ४ ५ ६ ७
ऽऽ ।ऽ। ऽऽ ।ऽ। ऽऽ ।ऽ। ऽऽ ऽ

तस्मा—न्मुने वि—मुञ्च प्रदेश—मेतं समेत—मेता—भिः॥

महाविपुलामहाचपलोद्गीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७
।।ऽ ।ऽ। ऽऽ ।ऽ। ऽऽ ।ऽ। । ऽ

विपुला पयोध—रश्रो—णिमण्ड—ले च—क्षुषोश्च—प—ला।

१ २ ३ ४ ५ ६ ७
ऽऽ ।ऽ। ऽऽ ।ऽ। ऽऽ ।ऽ। ऽ।। ऽ

उद्गी—तिशालि—नी [2]का—मिनी च सा वा—णिनी म—नो हर—ति॥

---

(१) उद्गीतिर्विगीतिः, दुष्कीर्तिरिति यावत्। अत्र निन्दया स्तुतिव्यक्तिरूपो व्याजस्तुतिरलङ्कारः।

(२) 'मालिनी' इति लि० पु०।

**शिवप्रसादिनी**—पूर्व में कहे गये क्रम के विपरीत क्रम को ''उत्क्रम'' कहते हैं। आर्या छन्द में जहाँ पर दोनों भाग विपरीत हो जाते हैं, अर्थात् पूर्वाऽर्ध उत्तराऽर्ध के रूप में, तथा उत्तराऽर्ध भाग पूर्वाऽर्ध के रूप में परिणति अवस्था को प्राप्त हो जाता है तब वह पद्य (आर्या) ''उद्गीति'' नाम वाला होता है। भाव यह है कि जिस आर्या छन्द में उत्तराऽर्ध के समान पूर्वाऽर्ध या प्रथमाऽर्ध में षष्ठगण हों, तथा उसके अन्तर्गत एक लघु हों, वह आर्या ''उद्गीति'' सञ्ज्ञक होती है ॥३०॥

(आर्यागीति का लक्षण—)

## अर्धे वसुगण[1] आर्यागीतिः ।४।३१।।

**मृतसञ्जीवनी**—अष्ट गणाः प्रथमेऽर्धे यस्या भवन्ति सा 'आर्यागीतिः' नामार्या। अष्टमोऽपि गणश्चतुर्मात्रिको भवतीत्यर्थः। विशेषाभावात् द्वितीयमप्यर्धं तादृशमेव। अत्रापि षष्ठो मणो द्विविकल्प एव, न लकारः। अर्धे इति वर्तमान पुनरर्धग्रहणाद्गणग्रहणाच्च। इयमपि पथ्यादिलक्षणपूर्वकत्वात् तद्वदार्यागीतिः ॥ पथ्यार्यागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८

।।।। ।।।। ऽऽ ऽऽ ऽऽ ।ऽ। ऽऽ ।।।

अजमज—रममर—मेकं प्रत्य—क्चैत—न्यमीश्व—रं ब्र—ह्म परम्।

१ २ ३ ४ ५ ६ ७ ८

ऽऽ ऽऽ ।।ऽ ।।ऽ ऽऽ ।ऽ। ऽऽ ऽऽ

आत्मा—नं भा—वयतो भवमु—क्तिः स्या—दितीय—मार्या—[2]गीतिः ॥

महाविपुलार्यागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८

।।ऽ ।ऽ। ।।ऽ ।ऽ। ऽ।। ।।।। ।।।। ।।ऽ

विषयां[3]—भिलाष—मृगतृ—ष्णिका ध्रु—वं हर[4]—ति हरिण—मिव हत—हृदयम्।

१ २ ३ ४ ५ ६ ७ ८

।।ऽ ।ऽ। ।।ऽ ।ऽ। ऽऽ ।ऽ। ।।।। ऽऽ

विपुला—त्ममोक्ष—सुखका—ङ्क्षिभिस्त—तस्त्य—ज्यते वि—षयरस—सङ्गः ॥

पथ्याजघनचपलार्यागीत्युदाहरणम्—

(१) 'गणाः' इति पाठः ।

(२) 'आर्याणामासमन्ताद्गीतिः ।

(३) 'विपुलाभिलाष' इति लि० पु० ।

(४) 'हन्ति' इति लि० पु० ।

१ २ ३ ४ ५ ६ ७ ८
ऽ ऽ ।ऽ। ऽ ऽ ।।ऽ ऽऽ ।।।। ।।ऽ ।।ऽ
वाता—हतोर्मि—माला—चपलं संप्रे—क्ष्य विषय—सुखम—ल्पतरम् ।
१ २ ३ ४ ५ ६ ७ ८
ऽ ऽ ।ऽ। ऽऽ ।ऽ। ऽ ऽ ।ऽ। ऽऽ ।।ऽ
मुक्त्वा समस्त—सङ्गं तपोव—नान्या—श्रयन्ति तेना—त्मविद: ॥

महाविपुलामहाचपलार्यागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८
।।ऽ ।ऽ। ऽऽ । ऽ । ऽऽ ।ऽ। ।।।। ।।ऽ
चपला—नि चक्षु—रादी—नि चित्त—हारी च हन्त हतविष—यगण: ।
१ २ ३ ४ ५ ६ ७ ८
ऽ ऽ ।ऽ। ऽ ऽ ।ऽ। ऽ ।। ।।।। ।।ऽ ऽ ऽ
एका—न्तशीलि—नां यो—गिनाम—तो भव—ति परम—सुखसं—प्राप्ति: ॥

इत्यार्याधिकार:[१] ।

**शिवप्रसादिनी**—वसुगणा: = आठ गण प्रथम भाग के हुआ करते हैं जिस छन्द में, वह छन्द "आर्यागीति" कहलाता है । अर्थात्—जिस छन्द का पूर्वाऽर्ध भाग और उत्तराऽर्द्धभाग आठ-आठ गणों में निबद्ध हों, वह छन्द "आर्या गीति" नाम के व्यवहार से व्यवहृत होता है ॥३१॥

॥ यहाँ तक आर्या का विचार समाप्त हुआ समझना चाहिए ॥

(वैतालीय छन्द का लक्षण—)

**वतालीयं द्विःस्वरा अयुक्पादे युग्वसवोऽन्ते र्ल्गः ।४।३२।।**

**मृतसञ्जीवनी**—'ल:' इत्यनुवर्तते । यत्रायुक्पादे प्रथमे तृतीये च द्वि:स्वराश्चतुर्दश

---

(१) **मन्दारमरन्दे**ऽन्येपि केचिद्गीतिभेदा दृश्यन्ते—
'तत्रैकद्वित्रिमात्राणामाधिक्यं प्रथमे यदि ।
तदा **विगीतिः** कथिता द्वितीये चेत्**सुगीतिका** ॥
तृतीये **त्वतिगीतिः** स्याच्चतुर्थे **स्वरगीतिका** ।
**कटुगीति**स्त्वोजयोश्चेत्समयोर्**मधुगीतिका** ॥
यदि द्वितीयादिमयोर्**बालगीति**रुदाहृता ।
**वक्तगीति**स्तु कथिता चेत्तृतीयचतुर्थयो: ॥' इति । (बिं० १)

लकारा भवन्ति, युक्पादे च द्वितीये चतुर्थे च युग्वसवः षोडश लकाराः, तत् 'वैतालीयं' नाम छन्दः । तेषां लां मध्ये उभयोरपि पादयोरन्ते रेफलकारगकाराः कर्तव्याः । आद्ये पादे षड् लकाराः [1]पश्चादवशिष्यन्ते, द्वितीये चाष्टौ । एवं वैतालीयार्धं सिद्ध्यति । द्वितीयमप्यर्धं तादृशमेव । तत्रोदाहरणम्—

रगणः ल. गु. रगणः ल. गु.

२ ४ ५ ६ ८ ९ ११ १२ १४ २ ४ ६ ७ ८ १० ११ १३ १४ १६

ऽ ऽ । । ऽ । ऽ । ऽ ऽ ऽ ऽ । । ऽ । ऽ । ऽ

क्षु–त्क्षी–ण–श–री–र–सं–च–या व्य–क्ती–भू–त–शि–रा–स्थि–प–ञ्ज –राः ।

रगणः ल. गु. रगणः ल. गु.

२ ४ ५ ६ ८ ९ ११ १२ १४ २ ४ ६ ७ ८ १० ११ १३ १४ १६

ऽ ऽ । । ऽ । ऽ । ऽ ऽ ऽ ऽ । । ऽ । ऽ । ऽ

के–शैः प–रु–षै–स्त–वा–र–यो वै–ता–ली–य–त–नुं वि–त–न्व–ते ॥

अपि च ।

रगणः ल. गु. रगणः ल. गु.

१ २ ४ ५ ६ ८ ९ ११ १२ १४ १ २ ४ ६ ७ ८ १० ११ १३ १४ १६

। । ऽ । । ऽ । ऽ । ऽ । । ऽ ऽ । । ऽ । ऽ । ऽ

त-व-त-न्वि क-टा-क्ष-वी-क्षि-तैः प्र-स-र-द्भिः श्र-व-णा-न्त-गो-च–रैः ।

रगणः ल. गु. रगणः ल. गु.

१ २ ४ ५ ६ ८ ९ ११ १२ १४ १ २ ४ ६ ७ ८ १० ११ १३ १४ १६

। । ऽ । । ऽ । ऽ । ऽ । । ऽ ऽ । । ऽ । ऽ । ऽ

वि-शि-खै-रि-व ती-क्ष्ण-को-टि-भिः प्र-ह-तः प्रा-णि-ति दु-ष्क-रं न-रः ॥

यथा च ।

रगणः ल. गु. रगणः ल. गु.

१ २ ४ ५ ६ ८ ९ ११ १२ १४ १ २ ४ ६ ७ ८ १० ११ १३ १४ १६

। । ऽ. । । ऽ । ऽ । ऽ । । ऽ ऽ । । ऽ । ऽ । ऽ

श-व-शो-णि-त-प-ङ्क-च-र्चि-तं पु-रु-षा-न्त्र-ग्र-थि-तो-र्ध्व–मू–र्ध-जम् ।

---

(१) पश्चात् रेफलकारगकाराणां प्रागिति भावः ।

रगणः ल. गु. रगणः ल. गु.

१ २ ४ ५ ६ ८ ९ ११ १२ १४ २ ४ ६ ७ ८ १० ११ १३ १४ १६

। । ऽ । । ऽ । ऽ । ऽ ऽ ऽ ऽ । । ऽ । ऽ । ऽ

व-पु-रा-न्त-र-व-ह्नि-दी-पि-तं वै-ता-ली-य-मि-दं वि-लो-क्य-ताम् ॥

वैतालीयमिति वेतालशब्दात्कृशाश्वा (पा०सू० ४।२।८०) देराकृतिगणत्वाच्छण्-प्रत्ययश्चातुरर्थिकः । अत्र पादग्रहणमिदं ज्ञापयति, यत्–आर्यादीनां 'पादश्चतुर्भागः' (पि० सू० ४।१०) इति व्यवस्था नास्ति ॥

**शिवप्रसादिनी**—जिस छन्द के, अयुक्पादे = प्रथम एवं तृतीय पाद में, द्विःस्वराः = स्वर (सात प्रकार के होते हैं तदनुसार) सात-सात के चौदह संख्या में लकार (लघुमात्राएँ) होते हैं, (युक् पादे च) = दूसरे एवं चौथे पाद में, युग्वसवः = (वसु आठ की संख्या होती है जिससे अर्थ का स्वरूप होगा—) सोलह लकार = लघु मात्राएँ होती है । वह छन्द "वैतालीय" नाम से कहा जाता है । उन लकारों के मध्य में जहाँ चार पाद निर्धारित होगें, वहाँ पर उन चारों पादों के "अन्ते = अन्त में, अर्थात् प्रत्येक पाद के अन्त भाग में एक रगण (ऽ।ऽ), एक लघु मात्रा (१) और एक गुरु (ऽ) मात्रा विद्यमान हुआ करते हैं । भावाऽर्थ—चार चरण (पाद) वाले जिस छन्द में प्रथम पाद और तृतीय पाद चौदह लघुमात्राओं वाले होते हों, तथा द्वितीय एवं चतुर्थ पाद पुनः सोलहमात्राओं से निबद्ध होते हैं, और प्रत्येक पाद के अन्त्य में होने भाग पुनः नियमित रूप से एक रगण (ऽ।ऽ) एक लघु (।) तथा एक गुरु (ऽ) मात्रा से युक्त हों, तो वह छन्द "वैतालीय" नाम वाला होगा । "वैतालीय" शब्द की निष्पत्ति का प्रकार इस रूप में समझना चाहिए—"वेताल प्रातिपदिक से कृशाऽश्वाऽऽदि" (पा०सू० ४।२।८०) गणों के आकृतिगणों में गणना होने के कारण चातुरार्थिक "छण्" प्रत्यय, अनुबन्ध (ण) लोप, छ के स्थान में "ईय" आदेश, प्रकृतिभूत वेताल के आदि वृद्धि आदि कार्य द्वारा वैतालीय शब्द निष्पन्न हुआ करता है । सूत्रस्थ "पादे" यह ज्ञापन करता है कि आर्या आदि छन्दों को उद्देश्य करके पिङ्गलमुनि के द्वारा "पादश्चतुर्थो भागः" (पि०सू० ४।१०) इस सूत्र के माध्यम से जो व्यवस्था की गयी है, वह नियम इस वैतालीय वृत्त में लागू नहीं हुआ करती है; क्योंकि यहाँ पर न्यूनाधिक्य की मात्रा के साथ ही साथ चार से अधिक छः पाद या बारह पाद वृत्तिस्थ उदाहरणों में दृष्टिगोचर हो रहे हैं ॥३२॥

(औपच्छन्दसक छन्द का लक्षण दिखाया जा रहा है—)

## गौपच्छन्दसकम् ।४।३३।।

**मृतसञ्जीवनी**—अस्मिन् वैतालीये छन्दस्यते गकारश्चेदधिको[१] भवति, तद्

'औपच्छन्दसकं' नाम छन्दः । तत्रोदाहरणम्—

रगणः ल. गु. गु. रगणः ल. गु. गु.

२ ४ ५ ६ ८ ९ ११ १२ १४ १६ २ ४ ६ ७ ८ १० ११ १३ १४ १६ १८

ऽ ऽ । । ऽ । ऽ । ऽ ऽ ऽ ऽ ऽ । । ऽ । ऽ । ऽ ऽ

वा-क्यै-र्म-धु-रैः प्र-ता-र्य पू-र्वं यः प-श्चा-द-ति-सं-द-धा-ति मि-त्रम् ।

रगणः ल. गु. गु. रगणः ल. गु. गु.

२ ४ ५ ६ ८ ९ ११ १२ १४ १६ २ ४ ६ ७ ८ १० ११ १३ १४ १६ १८

ऽ ऽ । । ऽ । ऽ । ऽ ऽ ऽ ऽ ऽ । । ऽ । ऽ । ऽ ऽ

तं दु-ष्ट-म-तिं वि-शि-ष्ट-गो-ष्ठ्या-मौ-प-च्छ-न्द-स-कं व-द-न्ति बा-ह्यम् ॥

रगणः यगण रगणः यगण

१ २ ४ ५ ६ ८ ९ ११ १२ १४ १६ १ २ ४ ६ ७ ८ १० ११ १३ १४ १६ १८

। । ऽ । । ऽ । ऽ । ऽ ऽ । । ऽ ऽ । । ऽ । ऽ । ऽ ऽ

प-र-म-र्म-नि-री-क्ष-णा-नु-र-क्तं स्व-य-म-त्य-न्त-नि-गू-ढ-चि-त्त-वृ-त्तिम् ।

रगणः यगण रगणः यगण

१ २ ४ ५ ६ ८ ९ ११ १२ १४ १६ २ ४ ६ ७ ८ १० ११ १३ १४ १६ १८

। । ऽ । । ऽ । ऽ । ऽ ऽ ऽ ऽ ऽ । । ऽ । ऽ । ऽ ऽ

अ-न-व-स्थि-त-म-र्थ-लु-ब्ध-मा-रा-दौ-प-च्छ-न्द-स-कं ज-ही-हि मि-त्रम् ॥

उपछन्दः शब्दादरीहणादि (पा०सू० ४।२।८०) पाठाच्चातुरर्थिको वुञ्प्रत्ययः ॥

**शिवप्रसादिनी**—उपर्युक्त वैतालीय छन्द में यदि गुरु सञ्ज्ञक अन्तिम एक अक्षर अधिक हो, तो वह छन्द औपच्छन्दसक कहते हैं । इसका तात्पर्य यह है कि वैतालीय छन्द में प्रत्येक पाद के अन्त भाग में एक रगण (ऽ।ऽ) एक लघु (।) और एक गुरु (ऽ) के अतिरिक्त एक और गुरु अक्षर (ऽ) उपलब्ध होने पर वहाँ पर रगण (ऽ।ऽ) के साथ अब एक यगण (।ऽऽ) की भी सिद्धि हो जाती है । इसी अभिप्राय से गरूडपुराण में कहा गया—"अन्तेर्यौपूर्ववदिदमौपच्छन्दसिकंमतम्" (ग०पु०पू० ख०-२०८।६) सङ्गत होता है ॥३३॥

---

(१) लगयोरन्ते गकारेऽधिके यगणः सिध्यति । अत एवोक्तं **गारुडे**—'अन्तेर्यौ पूर्ववदिद-मौपच्छन्दसिकं मतम् ।' (पू. खं. २०८।६) इति ।

(आपातलिका वृत्त का लक्षण किया जा रहा है—)

## आपतालिका भ्गौ ग् ।४।३४।।

**मृतसञ्जीवनी**—रेफलकारगकाराणामपवादः । 'द्विस्वरा अयुक्पादे युग्वसवोऽन्ते' (पि०सू० ४।३२) इत्यनुवर्तते । पूर्वलक्षणयोरन्ते भकारो गकारौ—च भवतः, तद्वैतालीयम् 'आपातलिका' नाम लभते । तत्रोदाहरणम्—

भगणः गु. गु. भगणः गु. गु.

२ ३ ४ ६ ८ ९ १० १२ १४ २ ४ ६ ७ ८ १० ११ १२ १४ १६

ऽ । । ऽ ऽ । । ऽ ऽ ऽ ऽ ऽ । । ऽ । । ऽ ऽ

पि-ङ्ग-ल-के-शी क-पि-ला-क्षी वा-चा-टा वि-क-टो-न्न-त-द-न्ती ।

भगणः गु. गु. भगणः गु. गु.

२ ४ ५ ६ ८ ९ १० १२ १४ १ २ ३ ४ ६ ७ ८ १० ११ १२ १४ १६

ऽ ऽ । । ऽ । । ऽ ऽ । । । । ऽ । । ऽ । । ऽ ऽ

आ-पा-त-लि-का पु-न-रे-षा नृ-प-ति-कु-ले-ऽपि न भा-ग्य-मु-पै-ति ।।

आपातलिका अस्थिरेत्यर्थः ।।

**शिवप्रसादिनी**—पूर्व वर्णित वैतालीय छन्द के रगण (ऽ।ऽ) के स्थान में भगण (ऽ।।) एवं रगण के परवर्ती स्थान में लघु अक्षर के स्थान में गुरु अक्षर (ऽ) हो आता हो, तो वह 'वैतालीय छन्द' ''आपातलिका'' वृत्त कहलाती है । अर्थात् वैतालीय छन्दः पाद के अन्त में जहाँ रगण के अनन्तर एक लघु और एक गुरु होता है, वहाँ पर रगण को हटाकर यदि भगण (ऽ।।) हो और उसके अनन्तर दो गुरु अक्षर (ऽऽ) हों, तो वह वैतालीय वृत्त ''आपातलिका'' (=अर्थात् ''स्थिर होकर न रहने वाला'') नाम वाला हुआ करता है ।।३४।।

## शेषे परेण युङ् न साकम् ।४।३५।।

**मृतसञ्जीवनी**—अत्र वैतालीयाधिकारे येषां लकाराणां नियम उक्तस्तव्द्यतिरिक्तो लकारवर्णः शेषः, तस्मिन्नियमः क्रियते—युग्लकारः परेण साकं न मिश्रीकर्तव्यः । द्वितीयस्तृतीयेन, चतुर्थः, पञ्चमेन, युक्पादे षष्ठश्च सप्तमेन । एवं वदता शेषाणां मिश्रीभावोऽप्यनुज्ञातः । अत्रोदाहरणं पूर्वमेव ।।

**शिवप्रसादिनी**—उपर्युक्त वैतालीय छन्द के अधिकार क्षेत्र में आने वाले ''रगण, यगण, भगण'' द्वारा पाद के मध्य में विद्यमान आठ लकारों का नियमित रूप से प्रयोग हुआ है । उससे बचे हुए लकार ही यहाँ पर ''शेषे'' पदप्रतिपाद्य में ग्रहण करने योग्य

हैं। तदनुसार सूत्राऽर्थ का पर्यवसिताऽर्थ होगा-प्रथम और तृतीय पाद के छह लकारों तथा द्वितीय और चतुर्थपाद के आठ लकारों के सम्बन्ध में प्रकृत सूत्र के माध्यम से यह नियम प्रस्तुत किया जा रहा है कि एक लकार दूसरे लकार के साथ अर्थात् द्वितीय लकार तृतीय लकार के साथ, चतुर्थ लकार पञ्चम लकार के साथ, इसी प्रकार छठा लकार सप्तम लकार के साथ मिलना नहीं चाहिए। इससे अवशिष्ट बचे शेष लकारों का परस्पर में मिलना उचित ज्ञात होता है ॥३५॥

## षट् चामिश्रा युजि ।४।३६॥

अत्र द्वितीयचतुर्थयोः पादयोः षट् लकारा अमिश्रा न कर्तव्याः। पृथग् न प्रयोक्तव्या इत्यर्थः। प्रथमतृतीययोश्च पादयोः स्वरुचिः। तत्रोदाहरणं वैतालीये तावत्—

रगणः ल. गु. रगणः ल. गु.

१ २ ३ ४ ५ ६ ८ ९ ११ १२ १४ १ २ ३ ४ ६ ७ ८ १० ११ १३ १४ १६

। । । । । । ऽ । ऽ । ऽ । । । । ऽ । । ऽ । ऽ । ऽ

स-म-र-शि-र-सि स-ह्य-ते द्वि-षां न-व-नि-शि-ता-यु-ध-वृ-ष्टि-र-ग्र-तः।

रगणः ल. गु. रगणः ल. गु.

१ २ ३ ४ ५ ६ ८ ९ ११ १२ १४ १ २ ४ ६ ७ ८ १० ११ १३ १४ १६

। । । । । । ऽ । ऽ । ऽ । । ऽ ऽ । । ऽ । ऽ । ऽ

कु-व-ल-य-द-ल-दी-र्घ-च-क्षु-षां प्र-म-दा-नां न क-टा-क्ष-वी-क्षि-तम्॥

औपच्छन्दसकोदाहरणम्—

रगणः यगणः रगणः यगणः

१ २ ३ ४ ५ ६ ८ ९ ११ १२ १४ १६ २ ४ ६ ७ ८ १० ११ १३ १४ १६ १८

। । । । । । ऽ । ऽ । ऽ ऽ ऽ ऽ ऽ । । ऽ । ऽ । ऽ ऽ

प-र-यु-व-ति-षु-पु-त्र-भा-व-मा-दौ कृ-त्वा-प्रा-र्थ-य-ते त-तः प-ति-त्वम्।

रगणः यगणः रगणः यगणः

१ २ ३ ४ ५ ६ ८ ९ ११ १२ १४ १६ २ ४ ६ ७ ८ १० ११ १३ १४ १६ १८

। । । । । । ऽ । ऽ । ऽ ऽ ऽ ऽ ऽ । । ऽ । ऽ । ऽ ऽ

इ-द-म-प-र-मि-हो-च्य-ते वि-शे-षा-दौ-प-च्छ-न्द-स-कं ख-ल-स्य वृ-त्तम्॥

आपातलिकोदाहरणम्—

भगणः गु. गु. भगणः गु. गु.

१ २ ३ ४ ५ ६ ८ ९ १० १२ १४ २ ३ ४ ६ ७ ८ १० ११ १२ १४ १६

। । । । । । । ऽ । । ऽ ऽ ऽ । । ऽ । । ऽ । । ऽ ऽ

अ-भि-र-म-य-ति किं-न-र-क-ण्ठी हं-स-ग-तिः श्र-व-णा-य-त-ने-त्रा।

भगणः गु. गु. भगणः गु. गु.

१ २ ३ ४ ५ ६ ८ ९ १० १२ १४ १ २ ३ ४ ६ ७ ८ १० ११ १२ १४ १६

। । । । । । ऽ । । ऽ ऽ । । । । ऽ । । ऽ । । ऽ ऽ

वि-श-द-क-म-ल-को-म-ल-गा-त्री यु-व-ति-रि-यं ह्-द-यं त-रु-णा-नाम् ॥

**शिवप्रसादिनी**—इस वैतालीयछन्दाऽधिकार के द्वितीय तथा चतुर्थ पाद में छह लकारों का पृथक्-पृथक् रूप में प्रयोग नहीं होना चाहिए, अर्थात् इन लकारों को अलग-अलग करके प्रयोग नहीं किया जाना चाहिए, किन्तु इस छन्द के प्रथम और तृतीय पादों के लकारों का पृथक्-पृथक् प्रयोग भी अपनी इच्छाऽनुसार करने में किसी प्रकार की बाधा नहीं है ॥३६॥

## पञ्चमेन पूर्वः साकं [1]प्राच्यवृत्तिः ।४।३७॥

**मृतसञ्जीवनी**—इदानीं विशेषलक्षणमाह—'शेषे परेण युङ् न साकम्' (पि०सू० ४।३५) इत्यत्र पञ्चमचतुर्थयोरेकीभावो निषिद्धः सोऽनेन विधीयते। 'युजि' इत्यनुवर्तते। यदा युक्पादे पञ्चमेन लकारेण पूर्वः संगच्छते तदा 'प्राच्यवृत्तिः' नाम वैतालीयं भवति। शेषं यथा प्राप्तम्। तत्रोदाहरणम्—

रगणः ल. गु. रगणः ल. गु.

१ २ ४ ५ ६ ८ ९ ११ १२ १४ २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६

। । ऽ । । ऽ । ऽ । ऽ ऽ । ऽ । । । ऽ । ऽ । ऽ

वि-पु-ला-र्थ-सु-वा-च-का-क्ष-राः क-स्य ना-म न ह-र-न्ति मा-न-सम्?।

रगणः ल. गु. रगणः ल. गु.

१ २ ४ ५ ६ ८ ९ ११ १२ १४ २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६

। । ऽ । । ऽ । ऽ । ऽ ऽ । ऽ । । । ऽ । ऽ । ऽ

र-स-भा-व-वि-शे-ष-पे-श-लाः प्रा-च्य-वृ-त्ति-क-वि-का-व्य-सं-प-दः ॥

---

(१) 'वैतालीयप्राच्यवृत्तिः, औपच्छन्दसकप्राच्यवृत्तिः, आपातलिकाप्राच्यवृत्तिः' इति भेदत्रयमुपलभ्यते छन्दःकौस्तुभादौ।

**शिवप्रसादिनी**—इस समय विशेष लक्षण कहा जा रहा है—"शेषे परेण युङ् न साकम्" (पि०सू० ४।३५) इस सूत्र से द्वितीय एवं चतुर्थ पाद के पञ्चम और चतुर्थ लकार के एकीभाव का निषेध किया गया था, इस निषेध विषय का यहाँ प्रतिषेध किया जा रहा है। प्रकृत में पूर्वसूत्र से "युजि" की अनुवृत्ति आएगी, जिससे सूत्राऽर्थ होगा- द्वितीय एवं चतुर्थ पाद में स्थित पञ्चम लकार के साथ चतुर्थलकार जब मिल जाता है, तब वह "प्राच्यवृत्ति" वैतालीय छन्द के नाम से व्यवहृत होता है। यह सूत्र पुनः (पि०सू० ४।३५-६८-३९) इन सूत्रों का अपवाद स्वरूप है ॥३७॥

## अयुक्तृतीयेनोदीच्यवृत्तिः[1] ।४।३८।।

**मृतसञ्जीवनी**—'पूर्वः साकम्' इत्यनुवर्तते। अयुक्पादे तृतीयेन लकारेण यदि पूर्वः संगच्छते, तदा 'उदीच्यवृत्तिः' नाम वैतालीयम्। शेषं यथाप्राप्तमेव। तत्रोदाहरणम्—

रगणः ल. गु. रगणः ल. गु.

१ २ ४ ५ ६ ८ ९ ११ १२ १४ १ २ ४ ६ ७ ८ १० ११ १३ १४ १६

। ऽ । । । ऽ । ऽ । ऽ । । ऽ ऽ । । ऽ । ऽ । ऽ

अ-वा-च-क-म-नू-र्जि-ता-क्ष-रं श्रु-ति-दु-ष्टं य-ति-क-ष्ट-म-क्र-मम्।

रगणः ल. गु. रगणः ल. गु.

१ ३ ४ ५ ६ ८ ९ ११ १२ १४ १ २ ४ ६ ७ ८ १० ११ १३ १४ १६

। ऽ । । । ऽ । ऽ । ऽ । । ऽ ऽ । । ऽ । ऽ । ऽ

प्र-सा-द-र-हि-तं च ने-ष्य-ते क-वि-भिः का-व्य-मु-दी-च्य-वृ-त्ति-भिः ॥

**शिवप्रसादिनी**—यहाँ पूर्वसूत्र से "पूर्वः साकम्" की अनुवृत्ति होती है। अयुक् (पादे) = प्रथम तथा तृतीय पाद में यदि तृतीय लकार के साथ द्वितीय लकार मिला हो, अर्थात् (।।।) सकार पूर्ववर्ती एक गुरु (ऽ) वर्ण से निबद्ध हो (ऽ।।।), तो उस वैतालीय छन्द को "उदीच्य वृत्ति वैतालीय" छन्द कहते हैं ॥३८॥

## आभ्यां युगपत्प्रवृत्तकम्[2] ।४।३९।।

**मृतसञ्जीवनी**—आभ्यां पूर्वोक्तलक्षणाभ्यां युगपत्प्रवृत्ताभ्यां 'प्रवृत्तकं' नाम वैतालीयम्। युक्पादे पञ्चमेन पूर्वः संगच्छते, अयुक्पादे तृतीयेन द्वितीय इत्यर्थः। तत्रोदाहरणम्—

---

(१) अस्यापि 'वैतालीयोदीच्यवृत्तिः, औपच्छन्दसकोदीच्यवृत्तिः, आपातलिकोदीच्यवृत्तिः' इति भेदत्रयमुपलभ्यते तत्रैव।

(२) 'वैतालीयप्रवृत्तम्, औपच्छन्दसकप्रवृत्तम्, आपातलिकाप्रवृत्तकम्' एवं त्रिविधं छन्दःकौस्तुभादौ।

रगणः ल. गु. रगणः ल. गु.

१ ३ ४ ५ ६ ८ ९ ११ १२ १४ २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६

। ऽ । । । ऽ । ऽ । ऽ ऽ । ऽ । । । ऽ । ऽ । ऽ

इ-द भ-र-त-वं-श-भू-भृ-तां श्रू-य-तां श्रु-ति-म-नो-र-सा-य-नम्।

रगणः ल. गु. रगणः ल. गु.

१ ३ ४ ५ ६ ८ ९ ११ १२ १४ २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६

। । ऽ । । । ऽ । ऽ । ऽ ऽ । ऽ । । । ऽ । ऽ । ऽ

प-वि-त्र-म-धि-कं शु-भो-द-यं व्या-स-व-क्र-क-थि-तं प्र-वृ-त्त-कम्॥

**शिवप्रसादिनी**—आभ्याम् = पूर्व में कहे गये "प्राच्यवृत्ति और उदीच्यवृत्ति" इन दोनों छन्दों के लक्षणों से युक्त छन्द विशेष को "प्रवृत्तक वैतालीय" छन्द कहते हैं॥३९॥

## [१]अयुक्चारुहासिनी ।४।४०॥

**मृतसञ्जीवनी**—यस्य सर्वे पादा अयुग्लक्षणयुक्तास्तद्वैतालीयं 'चारुहासिनी' नाम। किं तल्लक्षणम्? चतुर्दशमात्रत्वं, तृतीयेन पूर्वस्य योगः। तत्रोदाहरणम्—

रगणः ल. गु. रगणः ल. गु.

१ ३ ४ ५ ६ ८ ९ ११ १२ १४ १ ३ ४ ५ ६ ८ ९ ११ १२ १४

। ऽ । । । ऽ । ऽ । ऽ । ऽ । । । ऽ । ऽ । ऽ

म-ना-क्प्र-सृ-त-द-न्त-दी-धि-तिः स्म-रो-ल्ल-सि-त-ग-ण्ड-म-ण्ड-ला।

रगणः ल. गु. रगणः ल. गु.

१ ३ ४ ५ ६ ८ ९ ११ १२ १४ १ ३ ४ ५ ६ ८ ९ ११ १२ १४

। ऽ । । । ऽ । ऽ । ऽ । ऽ । । । ऽ । ऽ । ऽ

क-टा-क्ष-ल-लि-ता तु का-मि-नी म-नो ह-र-ति चा-रु-हा-सि-नी॥

**शिवप्रसादिनी**—जिस छन्द के सभी पाद अयुक् लक्षण से युक्त हो, अर्थात् प्रत्येक पाद के कुल चतुर्दश लकार हों तथा द्वितीय लकार, तृतीय लकार के साथ मिला हो (= पूर्ववर्ती एक गुरु वर्ण उत्तर में क्रमशः उपस्थित तीन लघुवर्णों से मिले हों) तो, उस छन्द को "चारूहासिनी वैतालीय" छन्द कहते हैं॥४०॥

---

(१) तथैव चारुहासिन्यपि त्रिविधा।

## [1]युगपरान्तिका ।४।४१।।

**मृतसञ्जीवनी**—युग्लक्षणयुक्तैश्चतुर्भिः पादैः 'अपरान्तिका' नाम वैतालीयम्। किं तल्लक्षणम्? षोडशमात्रत्वम्, पञ्चमेन पूर्वस्य योगः, षण्णां मिश्राणां प्रयोगश्च। तत्रोदाहरणम्—

रगणः ल. गु. रगणः ल. गु.

१ २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६ १ २ ३ ५ ६ ८ १० ११ १३ १४ १६

। ।। ऽ ।।। ऽ । ऽ । ऽ ।।। ऽ । ऽ ऽ । ऽ । ऽ

स्थि[2]-र-वि-ला-स-न-त-मौ-क्ति-का-व-ली क-म-ल-को-म-ला-ङ्गी मृ-गे-क्ष-णा।

रगणः ल. गु. रगणः ल. गु.

१ २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६ १ २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६

।।। ऽ ।।। ऽ । ऽ । ऽ ।।। ऽ ।।। ऽ । ऽ । ऽ

ह-र-ति क-स्य हृ-द-यं न का-मि-नः? सु-र-त-के-लि-कु-श-ला-प-रा-न्ति-का॥

अपरस्यान्तिके समीपे स्थिता, परकीयेत्यर्थः[3]॥

### इति वैतालीयाधिकारः[4]।

**शिवप्रसादिनी**—जिस छन्द में सभी पाद युग्लक्षणों से युक्त हों, अर्थात् प्रत्येक पद में कुल सोलह लकार (लघुमात्रा) हो एवं पञ्चम लकार के साथ चौथा लकार मिला हो, तो वह "अपरान्तिका" नामक वैतालीय छन्द होता है।।४१।।

(यहाँ तक के ग्रन्थ से "वैतालीय छन्द" विषयक विचार समाप्त हुआ।)

## गन्ता द्विर्वसवो [5]मात्रासमकं ल् नवमः ।४।४२।।

**मृतसञ्जीवनी**—'वैतालीयम्-'(पि० सू० ४।३२) इत्यादिसूत्रात्सप्तम्यन्तं 'पाद'

---

(१) अपरान्तिकापि त्रिधोपलभ्यते तत्रैव. अस्या **एकपादिकेति** संज्ञा **गारुडे** (पू. २०८।९)।

(२) 'स्मितविलासरसोक्तिपेशला' इति लि.पु.।

(३) वस्तुतस्तु-'वानवासिका' (४।४३) वत् अपरान्तिका अपरान्तदेशोद्भवा स्त्री इत्येव युक्तम्।

(४) छन्दःकौस्तुभवृत्तरत्नकरादिग्रन्थेषु नव वैतालीयभेदा उपलभ्यन्ते, तेष्वेकतमो 'दक्षिणान्तिका' इति नामा भेदोऽत्र नोपलभ्यते। **गरुडपुराणे** तु लक्षितोऽसौ 'ज्ञेयाथो दक्षिणान्तिका। पराश्रितो द्वितीयो लः पादेषु निखिलेष्वपि॥ (पू. २०८।७) इति। इयमपि पूर्ववत्त्रिविधैव।

(५) 'मात्रासमकं नवमो ल् गोऽन्यः' इति वृ० र०।

ग्रहणमनुवर्तते । 'ल्' इति च महानधिकारः । तेनायमर्थः—यत्र पादे गन्ताः सन्तः, षोडश लकारा भवन्ति, तत् 'मात्रासमकं' नाम छन्दः । अन्ते द्वाभ्यामेको गुरुः (ऽ) कर्तव्यः । नवमश्च लकार (।) एव । 'द्विर्वसवः' इति द्विगुणिता वसवः, लकाराः षोडशेत्यर्थः । 'शेषे परेण युङ् न साकम्' (पि०सू० ४।३५) इत्यनुवर्तनीयम् । तत्रोदाहरणम्—

२ ४ ५ ६ ८ ९ १० १२१४१६ २ ४ ६ ८ ९ १०१२ १४ १६

ऽ ऽ । । ऽ । । ऽ ऽ ऽ ऽ ऽ ऽ ऽ । । ऽ ऽ ऽ

अ-श्म-श्रु-मु-खो वि-र-लै-र्द-न्तै ग-म्भी-रा-क्षो न-त-ना-सा-ग्रः ।

२ ४ ५ ६ ८ ९ १० १२१४१६ २ ४ ५ ६ ८ ९ १०१२१४ १६

ऽ ऽ । । ऽ । । ऽ ऽ ऽ ऽ ऽ । । ऽ । । ऽ ऽ ऽ

नि-र्मां-स-ह-नुः स्फु-टि-तैः के-शै र्मा-त्रा-स-म-कं ल-भ-ते दुः-खम् ॥

'गन्त-' (पि०सू० ४।३२) इत्यनेनैवान्तस्य[१] गुरुत्वे सिद्धे पुनर्गन्तग्रहणमातिदेशिक-गुरुत्वनिवृत्त्यर्थम् । तेनात्र द्वौ लकारौ (।।) भङ्क्त्वा द्विमात्रिको गुरुः (ऽ) क्रियत इति वाक्यशेषः ॥

**शिवप्रसादिनी**—प्रकृत सूत्र में ''वैतालीयम् .....'' (पि०सू० ४।३२) इससे ''पादे'' इस सप्तम्यन्त पद की अनुवृत्ति होती है । इसके अतिरिक्त ''ल्'' (पि०सू० १।९) का अधिकार आ रहा है । जिसके अनुसार सूत्राऽर्थ का स्वरूप होगा—जिस छन्द के प्रत्येक पाद के अन्त में एक गुरु अक्षर के साथ-साथ सोलह लकार (सोलहमात्रा) हों, तथा नौवाँ लकार मिला न हो (गुरु न हो) उस छन्द को ''मात्रासमक'' कहते हैं । जिस छन्द के प्रत्येक पाद के अन्त में दो लकारों से (दो लघुमात्राओं से) युक्त एक गुरु हो, और नवममात्रा उस पाद का लघु ही हो, इस प्रकार सोलह मात्रा वाले पादों से युक्त छन्द ''मात्रासमक'' कहलाता है । यहाँ पर ''शेषे परेण युङ् न साकम्'' (पि०सू० ४।३५) इस समस्त सूत्र की अनुवृत्ति करनी चाहिए, और तदनुसार ही सूत्राऽर्थ योजना पूर्वोक्तरीति के अनुसार बनानी चाहिए ॥४२॥

## द्वादशश्च [२]वानवासिका ।४।४३।।

**मृतसञ्जीवनी**—यस्य मात्रासमकस्य पादे द्वादशो लकारः (।) स्वरूपेणावतिष्ठते चकारान्नवमश्च, तन्मात्रासमकं 'वानवासिका' नाम । तत्रोदाहरणम्—

२ ३ ४ ६ ८ ९ १०१११२१४१६ १ २ ३ ४ ६ ७ ८ ९ १०१११२१४ १६

ऽ । । ऽ ऽ । । । । ऽ ऽ । । । । ऽ । । । । । । ऽ ऽ

म-न्म-थ-चा-प-ध्व-नि-र-म-णी-यः सु-र-त-म-हो-त्स-व-प-ट-ह-नि-ना-दः ।

(१) 'अन्त्यस्य' इति लि० पु० ।

(२) 'तद्युगलाद्वानवासिका स्यात्' इति वृ० र० ।

१ १ २ ४ ६ ८ ९ १०११११२१४ १६ २ ३ ४ ६ ८ ९ १०११११२१४ १६
। । ऽ ऽ ऽ । । । । । ऽ ऽ ऽ । । ऽ ऽ । । । । । ऽ ऽ
व-न-वा-स[1]-स्त्री-स्व-नि-त-वि-शे-षः क-स्य न चि-त्तं र-म-य-ति पुं-सः ॥

**शिवप्रसादिनी**—जिस मात्रासमक छन्द के प्रत्येक पाद में बारह-बारह लकार हों और नवम मात्रा लघु स्वरूप ही हो, अर्थात् कहीं भी नवाँ अक्षर गुरु न हो, किन्तु लघुमात्रा का ही हो, ऐसे छन्द को ''वानवासिका'' छन्द कहते हैं ।।४३।।

## [2]विश्लोकः पञ्चमाष्टमौ ।४।४४।।

**मृतसञ्जीवनी**—द्वादशग्रहणं नवमग्रहणं च निवृत्तम् । यत्र चतुर्षु पादेषु पञ्चमाष्टमौ लकारौ (।) तिष्ठतः, शेषं यथाप्राप्तम्, तन्मात्रासमकं 'विश्लोका' नाम । तत्रोदाहरणम्—

२ ४ ५ ६ ७ ८ १०१२ १४१६ २ ३ ४ ५ ६ ७ ८१०१११२ १४ १६
ऽ ऽ । । । । । ऽ ऽ ऽ ऽ ऽ । । । । । । ऽ । । ऽ ऽ
श्रा-त-र्गु-ण-र-हि-तं वि-श्लो-कं दु-र्न-य-क-र-ण-क-द-र्थि-त-लो-कम् ।

२ ४ ५ ६ ७ ८ १० ११ १२१४१६ २ ४ ५ ६ ७ ८१०१११२१४ १६
ऽ ऽ । । । । ऽ । । ऽ ऽ ऽ ऽ ऽ । । । । ऽ । । ऽ ऽ
जा-त[3]-म-हि-त-कु-ले-ऽप्य-वि-नी-तं मि-त्रं प-रि-ह-र सा-धु-वि-गी तम् ॥

**शिवप्रसादिनी**—इस सूत्र में 'द्वादश' एवं 'नवम' ग्रहण की अनुवृत्ति नहीं आती है ।

**सूत्राऽर्थ**—जिस मात्रासमक छन्द के प्रतिपाद पञ्चम और अष्टम संख्या वाला लकार स्वरूप से ही वर्त्तमान हो, अर्थात् लघुमात्रा को ही रहे, तो उस छन्द को ''विश्लोक'' नामक मात्रासमक छन्द कहते हैं ।।४४।।

## चित्रा नवमश्च ।४।४५।।

**मृतसञ्जीवनी**—यस्य नवमो लकार (।) एवावशिष्यते चकारात्पञ्चमाष्टमौ च, तन्मात्रासमकं 'चित्रा' नाम । तत्रोदाहरणम्—

१ २ ४ ५ ६ ७ ८ ९ १०१२१४१६ २ ४ ५ ६ ७ ८ ९ १०१११२१४१६
। । ऽ । । । । । । ऽ ऽ ऽ ऽ ऽ । । । । । । । । ऽ ऽ
य-दि वा-ञ्छ-सि प-र-प-द-मा-रो-ढुं मै-त्री प-रि-ह-र स-ह व-नि-ता-भिः ।

---

(१) कोङ्कणदेशात्पूर्वो भागो वनवासदेशः, 'सर्वसहा मध्यमवेगभाजस्त्रियो रमन्ते वनवासदेश्याः ।' (५।१८) इति **रतिरहस्ये** ।

(२) 'जो लूनावथाम्बुधेर्**विश्लोकः**' इति वृ० र०

(३) 'बाणाष्टनवसु यदि लश्चित्रा' इति वृ० र० '**चित्रा** नाम च्छन्दश्चित्रं चेत्रयो मा यकारौ' इति **छन्दोमञ्जर्यादिषूपलब्धं चित्रा चित्रं** वा च्छन्दस्त्वन्यत् ।

२ ३ ४ ५ ६ ७ ८ ९१० १२१४ १६ २ ४ ५ ६ ७ ८ ९ १०१२ १४१६
ऽ । । । । । । । । । ऽ ऽ ऽ, ऽ ऽ । । । । । । ऽ ऽ ऽ
मु-ह्य-ति मु-नि-र-पि वि-ष-या-स-ङ्गा- च्चि-त्रा भ-व-ति हि म-न-सो वृ-त्तिः ॥

'नवमः' (पि०सू० ४।४२) इत्यनुवर्तमानेऽपि पुनर्नवमग्रहणमुपचित्राप्रतिप्रसवार्थम् ।

**शिवप्रसादिनी**—सूत्र में "च" ग्रहण पूर्वसूत्रोक्त पञ्चम और अष्टम के अनुवर्त्तनाऽर्थ प्रयुक्त हुआ है । तदनुसार सूत्रार्थ का निर्धारित स्वरूप होगा—जिस छन्द का नौवाँ, पाँचवाँ एवम् आठवाँ लकार अपने लघुमात्रा स्वरूप (।) में वर्त्तमान रहे, उस छन्द विशेष को "चित्रा मात्रासमक" नाम से कहा जाता है ।।४५।।

## परयुक्तेनोपचित्रा[1] ।४।४६।।

**मृतसञ्जीवनी**—परयुक्तेन दशमेन सहैकीभूतेन नवमेन 'उपचित्रा' नाम भवति । पूर्वं लघुनियमेन लक्षणं प्रोक्तम् । इदं तु गुरुनियमेनोच्यते । तत्रोदाहरणम्—

२ ४ ६ ७ ८ १०११ १२१४ १६ २ ४ ६ ७ ८ १० ११ १२१४ १६
ऽ ऽ ऽ । । ऽ । । ऽ ऽ, ऽ ऽ ऽ । । ऽ । । ऽ ऽ
य-च्चि-त्तं गु-रु-स-क्त-मु-दा-रं वि-द्या-भ्या-स-म-हा-व्य-स-नं च ।

२ ४ ६ ७ ८ १० ११ १२१४१६ २ ३ ४ ६ ७ ८१०११ १२१४ १६
ऽ ऽ ऽ । । ऽ । । ऽ ऽ, ऽ । । ऽ । । ऽ । । ऽ ऽ
पृ-थ्वी त-स्य गु-णै-रु-प-चि-त्रा च-न्द्र-म-री-चि-नि-भै-र्भ-व-ती-यम् ॥

**शिवप्रसादिनी**—जिस छन्द का नौवा लकार (लघुवर्ण) दशम लकार (लघुमात्रिक वर्ण) से मिलता हो, अर्थात् जिस छन्द के प्रत्येक पाद से सम्बन्धित नौवाँ एवं दशवाँ लघु अक्षर मिलकर दशवें स्थान में जाकर गुरु में एक हो जाता हो, वह छन्द "उपचित्रा" मात्रासमक कहलाता है ।।४६।।

## एभिः [2]पादाकुलकम् ।४।४७।।

**मृतसञ्जीवनी**—एषां पञ्चानां मध्ये यैः कैश्चिदपि चतुर्भिः पादैः 'पादाकुलकं' नाम । मात्रासमकविश्लोकवानवासिकोपचित्राणां पादैरुदाहरणम्—

---

(१) '**उपचित्रा** नवमे परयुक्ते' इति वृ०र० । **अर्धसमवृत्तान्तर्गतमुपचित्र**नामकं छन्दस्त्वितोऽन्यत् ।

(२) 'लहु गुरु एक्क णिम्म णहि जेहा, पअ पअ लेक्खह उत्तमरेहा । सुकइ फणिंदह कंठहवलअं, सोरहमत्ता **पाआकुलअम्** ।। इति प्रा०पि०सू० १।१०४ ।

१ २४ ६ ७ ८ ९ १०११११२१४१६ २ ४ ५ ६ ७ ८१०११११२१४१६
। । ऽ ऽ । । । । । । ऽ ऽ ऽ ऽ । । । । ऽ । । ऽ ऽ
अ-लि-वा-चा-लि-त-वि क-सि-त-चू-ते का-ले म-द-न-स-मा-ग-म-दू-ते।
२ ४ ६ ८ ९ १०११११२१४१६ २ ४ ५ ६ ८ १०११११२१४ १६
ऽ ऽ ऽ ऽ। । । । ऽ ऽ ऽ ऽ । ऽ ऽ । । ऽ ऽ
स्मृ-त्वा का-तां प-रि-ह्-त-सा-र्थः पा-दा-कु-ल-कं धा-व-ति पा-न्थः ॥

तथा विश्लोकोपचित्रामात्रासमकोपचित्राणां पादैः 'पादाकुलकम्'। तत्रोदाहरणम्—

२ ४ ५ ६ ७ ८ १०११११२१४१६ २ ३ ४ ५ ६ ८१०११११२१४ १६
ऽ ऽ । । । । ऽ । । ऽ ऽ ऽ । । । । ऽ ऽ । । ऽ ऽ
पुं-स्को-कि-ल-कृ-त-शो-भ-न-गी-ते द-क्षि-ण-प-व-न-प्रे-रि-त-शी-ते।
१ २ ३ ४ ६ ८ ९ १०१२ १४ १६ २ ४ ५ ६ ८ १०११११२१४१६
। । । । ऽ ऽ । । ऽ ऽ ऽ ऽ ऽ । । ऽ ऽ । । ऽ ऽ
म-धु-स-म-ये-ऽस्मि-न्कृ-त-वि-श्लो-कः पा-दा-कु-ल-कं नृ-त्य-ति लो-कः ॥

मात्रासमकस्यैकेन पादेन, द्वाभ्यामुपचित्रायाः, विश्लोकस्यैकेन 'पादाकुलकम्'। तत्रोदाहरणम्—

२ ४ ६ ८ ९ १०१२ १४ १६ २ ४ ५ ६ ८ १०११११२ १४ १६
ऽ ऽ ऽ ऽ । । ऽ ऽ ऽ ऽ ऽ । । ऽ ऽ । । ऽ ऽ
चि-त्तं भ्रा-म्य-त्य-न-व-स्था-नं पा-दा-कु-ल-क-श्लो-क-स-मा-नम्।
२ ४ ६ ७ ८ १०११११२१४ १६ १ २ ३ ४ ५ ६ ७ ८१०१२१४ १६
ऽ ऽ ऽ । । ऽ । । ऽ ऽ । । । । । । । । । ऽ ऽ ऽ ऽ
का-यः का-य-ति शा-य-ति श-क्ति-स्त-द-पि न म-मं प-र-लो-के भ-क्तिः ॥

यथा पादाकुलकनाम्नः श्लोकस्य पादेष्वस्थिरता[1] तथेत्यर्थः।

उपचित्रापादेनैकेन, वानवासिकापादेन, पुनरुपचित्रापादाभ्यां पादाकुलकम्। तत्रोदाहरणम्—

१ २ ३ ४ ६ ७ ८ १०११११२१४१६
। । । । ऽ । । ऽ । । ऽ ऽ
प-रि-ह्-त-स-र्व-प-रि-ग्र-ह-लो-कः
१ २ ३ ४ ६ ७ ८ ९१०११११२१४ १६
। । । । ऽ । । । । । । ऽ ऽ
प्र-ति-दि-न-व-र्धि-त-गु-रु-त-र-शो-कः।

---

(१) 'यदतीतकृतविविधलक्ष्मयुतैर्मात्रासमादिपादैः कलितम्। अनियतवृत्तपरिणामसहितं प्रथितं जगत्सु **पादाकुलकम्**॥' इति वृ०र०।

२ ३४ ६ ७ ८ १०११ १२ १४ १६
ऽ । । ऽ । । ऽ । । ऽ ऽ
दु:-ख-वि-व-र्धि-त-लो-च-न-वा-रि:
२ ४ ५ ६ ८ १० ११ १२ १४ १६
ऽ ऽ । । ऽ ऽ । । ऽ ऽ
पा-दा-कु-ल-कं या-ति त-वा-रि: ॥

**इति मात्रासमकाधिकारः[१] ।**

**शिवप्रसादिनी**—(१) मात्रासमक (२) वानवासिका (३) विश्लोक (४) चित्रा (५) उपचित्रा इन पाँचों प्रकार के छन्दों के मध्य में जो-जो भी चारपाद वाले छन्द है, वे सभी ''पादाकुलक'' नामक मात्रासमक छन्द कहे जाते हैं ॥४७॥

(यहाँ तक के ग्रन्थ से सविशेष मात्रासमक छन्द का विचार समाप्त हुआ ॥)

## [२]गीत्यार्या लः ।४।४८।।

**मृतसञ्जीवनी**—यत्र पादे द्विर्वसवः षोडश लकारा भवन्ति सा 'गीत्यार्या'[३] नाम जातिः । 'लः' इत्यनुवर्तमाने पुनर्लग्रहणं द्विमात्रिकनिवृत्त्यर्थम् । तत्रोदाहरणम्—

---

(१) 'त्यक्त्वा दलयुगनियमं वृत्तानि चतुष्पदानि बहुधा स्युः ।
त्रयमधिकरणं तेषां मात्रासमकं च कुलकमथ तिलकम् ॥ (२।४)
'मात्रासमकपद्भेदाः शतोपर्यष्टविंशतिः ।
सर्वेषु योग्येष्वल्पानां निष्फलं नामकल्पनम् ॥
चतुर्धा यदि युक्तोऽङ्घ्रिर्मात्राभिः पञ्चभिर्यदि ।
षड्भिर्वा सप्तभिः पूर्णस्त्रिधा**कुलक**मीश्महे ॥'
मात्रासमकद्वयघटितं यदि । तिलकमिति प्रथयन्तु महान्तः ॥,
—(३।१४, १५, १९) इति **वृत्तमणिकोशे** ।
'चतुष्पादानां पादस्तु षोडशारभ्य मातृकाः ।
द्वात्रिंशद्भिः परिमितश्चरितार्थो विभाति नः ॥
यदि द्वात्रिंशतोऽप्यूर्ध्वं मात्राः पादे नियोजिताः ।
ध्वन्यादिसंज्ञं गीतं स्यान्न तद्वृतं प्रशस्यते ॥' (२।६, ७) इत्यपि तत्रैव ।

(२) 'द्विगुणितवसुलघु**रचलधृतिः**' इति नामान्तरं वृ०र० ।

(३) 'चउमत्ता अट्ठगणा पुव्वद्धे, उत्तरद्ध होइ समरूआ । सो खंधआ विआणहु पिंगल पभणेइ मुद्धि बहुसं भेआ ॥' इति प्रा०पि०सू० १।६३ इत्यनुसारेण स्कन्धकमित्यपि संज्ञान्तरं भवेत् ।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
। । । । । । । । । । । । । । । ।
म-द-क-ल-ख-ग-कु-ल-क-ल-र-व-मु-ख-रि-णि
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
। । । । । । । । । । । । । । । ।
वि-क-सि-त-स-र-सि-ज-प-रि-म-ल-सु-र-भि-णि ।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
। । । । । । । । । । । । । । । ।
गि-रि-व-र-प-रि-स-र-स-र-सि म-ह-ति ख-लु
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
। । । । । । । । । । । । । । । ।
र-ति-र-ति-श-य-मि-ह म-म हृ-दि वि-ल-स-ति ॥

सर्वलघुच्छन्दसि गीत्यार्याशब्दस्य प्रवेशयितुमशक्यत्वात्तन्नाम नोक्तम् ॥

**शिवप्रसादिनी**—जिस छन्द के प्रत्येक पाद में सोलह लघुवर्ण उपलब्ध हो, वह छन्द ''गीत्यार्या'' नाम से कहा जाता है। ल् का अधिकार से लाभ होने पर भी जो पुनः सूत्र में ग्रहण किया गया है वह व्यर्थ होकर ज्ञापन करता है कि इससे पूर्व के स्थलों में जो एक गुरुवर्ण के रूप में दो लघु वर्णों के बदले में स्थापन किया गया है, वहाँ पर दो लघुवर्ण ही होगें, दो लघु के स्थान पर एक गुरु वर्ण नहीं।

## [1]शिखा विपर्यस्तार्धा ।४।४९।।

**मृतसञ्जीवनी**—सैव गीत्यार्या विपर्यस्तार्धा यदा भवति तदा 'शिखा'[2] इत्याख्यां लभते। अयमर्थः—यत्रार्धं सर्वलघु भवति, अर्धं च सर्वगुरु, इति।

एवं तस्या एव विन्यासभेदेन संज्ञाद्वयमाह—

**शिवप्रसादिनी**—उपर्युक्त ''गीत्यार्या'' ही यदि विपरीत अवस्था वाला हो जाय, अर्थात् एक अर्ध भाग बत्तीस लघुवर्णों से निबद्ध हो, और दूसरा अर्ध भाग सोलह गुरु

(१) 'मत्त अठाइस पढमे, बीए बत्तीस मत्ताइ। पअ पअ अंते लहुआ सुद्धा सिखा विहाणेहु ॥' इति प्रा०पि०सू० १।१२७ उक्तशिखाच्छन्दस्त्वन्यत्। **वृत्तमणिकोशे** तु–'दशनगणोपरि गुरुयुतमलघुयुगं वा दलं पुरः परतः। उभयं द्वात्रिंशल्लघु सगुरु नवगणं च सम्मतास्ति शिखा॥' (३।८) इत्यन्यथैव शिखा दृश्यते। सा च 'शिखा कलयते चतुर्विधान् भेदान्' (२।३) इति तत्रैव।

(२) णंदउभछउसेससारंगसिवबंभवारणवरुण। 'णीलुमअणतालंकसेहरुसरुगअणुसरहुविमइरवीर'॥ इति प्रा०पि०सू० १।६४ इति सूत्रोक्तस्कन्धकभेदान्तर्गत**शरभाख्यं** छन्दोनामान्तरम्।

वर्णों से युक्त हो, तो उस छन्द को "शिखा छन्द" कहते हैं ॥४९॥

(अब इस चित्रा छन्द के दो भेदों को सूत्रकार द्वारा प्रकाशित किया जा रहा है—)

## लः पूर्वश्चेज्ज्योतिः[1] ।४।५०॥

**मृतसञ्जीवनी**—पूर्वश्चेदर्धभागः सर्वलघुर्द्वात्रिंशल्लकारो (३२) भवति, उत्तरश्च सर्वगुरुः षोडश (१६) गकारस्तदा 'ज्योतिः' नाम शिखा भवति । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
। । । । । । । । । । । । । । । ।
य–दि सु–ख–म–नु–प–म–म–प–र–म–भि–ल–ष–सि

१७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२
। । । । । । । । । । । । । । । ।
प–रि–ह–र यु–व–ति–षु र–ति–म–ति–श–य–मि–ह ।

१ २ ३ ४ ५ ६ ७ ८
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आ–त्म–ज्यो–ति–र्यो–गा–भ्या–सा-

९ १० ११ १२ १३ १४ १५ १६
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
दृ–ष्ट्वा दुः–ख–च्छे–दं कु–र्याः ॥

**शिवप्रसादिनी**—शिखा छन्द के विषय में जो कुछ विशेषता है, वह विशेषता इस प्रकार की है—जिसका पूर्वभाग (या पूर्वाऽर्धभाग) बत्तीस लघुवर्णों से युक्त हो, किन्तु उत्तराऽर्ध भाग गुरु सञ्ज्ञक सोलह अक्षरों वाला हो, वह "ज्योतिचित्रा छन्द" कही जाती है ॥५०॥

## गश्चेत्सौम्या ।४।५१॥

**मृतसञ्जीवनी**—तस्या एव शिखायाः पूर्वार्धभागः सर्वगुरुः षोडश (१६) गकारश्चेद्भवति, उत्तरश्च द्वात्रिंश (३२) ल्लकारो भवति, तदा 'सौम्या' नाम शिखा भवति । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
सौ–म्यां दृ–ष्टिं दे–हि स्ने–हा.

---

(१) **'अनङ्गक्रीडा'** इति नामान्तरमस्य वृ०र० ।

९१० ११ १२ १३१४१५ १६
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
द्दे–हे–ऽस्मा–कं मा–नं मु–क्त्वा।
१ २ ३ ४ ५ ६ ७ ८ ९ १०१११२१३१४१५१६
। । । । । । । । । । । । । । । ।
श–श–ध–र–मु–खि! सु–ख–मु–प–न–य म–म ह्–दि
१७ १८ १९ २०२१ २२२३२४ २५२६२७२८२९ ३० ३१ ३२
। । । । । । । । । । । । । । । ।
म– न– सि– ज–रु–ज–म–प–ह–र ल–घु–त–र–मि–ह ॥

**शिवप्रसादिनी**—उसी शिखाछन्द का यदि पूर्वाऽर्धभाग में सोलह गुरु अक्षर हो, तथा उत्तराऽर्ध भाग बत्तीस लघ्वक्षरों का हो, तो वह शिखा ''सौम्या'' नाम से जानी जाती है ॥५१॥

## चूलिकैकोनत्रिंशदेकत्रिंशदन्ते ग् ।४।५२।।

**मृतसञ्जीवनी**—'अर्ध ग्रहणम् (पि०सू० ४।४९) अनुवर्तते। यत्र प्रथमेऽर्धे एकोनत्रिंश (२९) ल्लकारा भवन्ति, द्वितीये चार्ध एकत्रिंशत् (३१), तयोश्चान्ते द्वौ (।।) लकारावुन्मूल्य प्रत्येकमेको गुरुः (ऽ) क्रियते, तत् 'चूलिका'[१] नाम छन्दः। 'अन्ते ग्' इति विशेषोपादानसामर्थ्यादन्येषां लघुत्वमुक्तं भवति। तेनाद्ये सप्तविंशति (२७) र्लघवः, अन्ते गुरुरेको भवति। द्वितीयेऽप्येकोनत्रिंश (२९) ल्लघवः,. अन्ते गुरुश्चैकः। तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९१०१११२ १३१४
। । । । । । । । । । । । । ।
र-ति-क-र-म-ल-य-म-रु-ति शु–भ–श–श- (?)
१५ १६ १७१८१९२० २१२२२३२४ २५२६ २७ २९
। । । । । । । । । । । । । । ऽ
म–भि–ह–त–हि–म–म–ह–सि म–धु–स–म–ये।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२१३१४ १५ १६
। । । । । । । । । । । । । । । ।
प्र–व–स–सि प–थि–क! वि–र–हि–त! क–थ–मि–ह तु
१७१८१९ २०२१२२ २३२४ २५२६ २७२८ २९ ३१
। । । । । । । । । । । । । । ऽ
प–रि–ह्–त़–यु–व–ति–र–ति–च–प–ल–त–या॥

(१) **'अतिरुचिरा'** इति संज्ञान्तरं वृत्तरत्नाकरादिषु।

अन्यैः पुनरन्यथैवेदं सूत्रमधीयते—'चूलिकार्धमेकोनत्रिंशदन्ते ग्' इति। तेषामुभयोश्चाप्यर्धयोरेकोनत्रिंशन्मात्रा गुर्वन्ता भवन्ति। तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४
। । । । । । । । । । । । । ।
घ–न–प–रि–म–ल–मि–ल–द–लि–कु–ल–मु–ख
१५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २९
। । । । । । । । । । । । । ऽ
रि–त–नि–खि–ल–क–म–ल–म–ल–य–प–व–ने।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४
। । । । । । । । । । । । । ।
ज–न–य–ति म–न–सि श–शि–मु–खि मु–द–म
१५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २९
। । । । । । । । । । । । । ऽ
ति–श–य–मि–ह म–म म–धु–र–य म–धु–ना॥

'अर्ध' ग्रहणादत्र पादव्यवस्था नास्ति[१]॥

इदानीं गणमात्राच्छन्दसां गुरुलघुसंख्यापरिज्ञानार्थमिदमाह—

**शिवप्रसादिनी**—इस सूत्र में ''शिखाविपयस्ताऽर्धा'' (पि०सू० ४।४९) सूत्र से ''अर्ध'' शब्द की अनुवृत्ति आती है। तदनुसार सूत्राऽर्थ का व्यक्त स्वरूप इस प्रकार होगा—जिस शिखाछन्द के प्रथम भाग में सत्ताईस (२७) लघु अक्षर और एक गुरु वर्ण के सहित उन्तीस लकार हो, तथा उत्तराऽर्ध भाग में उन्तीस (२९) लकार (लघुमात्रिक अक्षर) हो, तो ऐसा छन्द ''चूलिका'' नाम वाला होता है। कुछ छन्दःशास्त्र के शास्त्र के विद्वान् ''चूलिकैकोनत्रिंशदेकत्रिंशदन्ते ग्'' इस सूत्र के स्थान में ''चूलिकाऽर्धमेकोनत्रिंशदन्ते ग्'' ऐसा सूत्र पाठ स्वीकार करते हैं। तदनुसार सूत्राऽर्थ का निष्कृष्ट स्वरूप इस प्रकार अङ्गीकार करते हैं—प्रत्येक चूलिका छन्द के अर्धभाग में उन्तीस लघुवर्ण और अन्त में एक गुरुवर्ण मिलकर इकतीस लकार (लघुमात्रा) होना आवश्यक होता है॥५२॥

## सा ग् येन न समा लां ग्ल इति।४।५३॥

सा गुरुसंख्या वेदितव्या। येन यावद्भिरक्षरैः। लां लघूनां मात्राणाम्। समाः समसंख्या ग्लो न स्युः। अपि तु न्यूनसंख्या एव। 'ग्लः' इत्यक्षराण्यभिधीयन्ते तेषां गुरूलघुरुपत्वात्। अयमभिप्रायः—आर्यादिषु शास्त्रे यावत्यो मात्रा उपदिष्टास्तावन्त्यक्षराणि

---

(१) अत एवैतत्प्रकरणं 'द्विपात्प्रकरण'मिति निर्दिष्टं रत्नाकरे।

यथासंख्यं न पूर्यन्ते,''सा तत्र गुरुसंख्या वेदितव्या। अवशिष्टा लघुसंख्या। तत्रायमुपयोगः—यदा कश्चित्पृच्छति, चत्वारिंशदक्षरायामार्यायां कति गुरवः संपद्यन्ते,? कति वा लघव? इति, तदा सप्तपञ्चाशन्मात्रोपदिष्टायामार्यायां मात्रासंख्यायां चत्वारिंशदक्षरसंख्या (४०) मपनीय तत्र येऽवशिष्यन्ते, तान् गुरूनुपदिशेत्। ते च सप्तदशैव (१७)। शेषांस्तु त्रयोविंशति (२३) लघुरूपानुपदिशेत्[१]। तद्यथा—

१ २ ३ ४ ५-६ ७-८ ९-१० ११-१२
। । । । ऽ ऽ ऽ ऽ
स्त—न—यु—ग—म—श्रु— स्ना— तं
(१) (२) (३) (४) (५) (६) (७) (८)
१३ १४-१५ १६ १७ १८ १९-२० २१ २२ २३ २४ २५-२६ २७-२८ २९-३०
। ऽ । । । ऽ । । । । ऽ ऽ ऽ
स—मी—प—त—र—व— र्ति ह्व—द—य—शो— का— ग्ने:।
(९)(१०)(११)(१२)(१३)(१४)(१५)(१६)(१७)(१८)(१९) (२०) (२१)
३१ ३२ ३३ ३४ ३५-३६ ३७-३८ ३९-४० ४१-४२
। । । । ऽ ऽ ऽ ऽ
च—र—ति—वि—मु— क्ता— हा— रं
(२२)(२३)(२४)(२५) (२६) (२७) (२८) (२९)
४३ ४४ ४५ ४६ ४७ ४८ ४९-५० ५१ ५२-५३ ५४-५५ ५६-५७ मात्राङ्काः।
। । । । । । ऽ । ऽ ऽ ऽ
व्र—त—मि—व भ—व—तो रि— पु— स्त्री— णाम्॥
(३०)(३१)(३२)(३३)(३४)(३५) (३६) (३७) (३८) (३९) (४०) अक्षराङ्काः।

(बाणभट्टस्य)

॥ इति श्रीभट्टहलायुधविरचितायां पिङ्गलच्छन्दोवृत्तौ चतुर्थोऽध्यायः॥

---

(१) अस्याभिप्रायः स्फुटं प्रकाश्यते-पुरोदर्शितायामार्यायां कति गुरवो लघवश्च वर्तन्ते? इति पृष्टे सति पूर्वं तावदार्यायां मात्रागणना विधेया। तन्मात्रासंख्यापिण्डीभूताङ्काश्च कुत्रचन पत्रादौ संस्थाप्याः। पुनस्तस्या एव सर्वेषामक्षराणां गणनां विधाय तदक्षरसंख्यापिण्डीभूताङ्का मात्रासंख्यापिण्डीभूताङ्कानां संमुखे संस्थाप्याः। ततो मात्रासंख्यापिण्डीभूताङ्केभ्योऽक्षरसंख्यापिण्डीभूताङ्कानपनयेत्। तत्र ये संख्याङ्का अवशिष्यन्ते, तावत्संख्याकास्तस्यामार्यायां गुरवो भवन्ति। पुनरक्षरसंख्याङ्कत एतदवशिष्टगुरुसंख्याङ्कानपनयेत्। तत्र यावन्तोऽङ्का अवशिष्यन्ते, तावन्तो लघवो जायन्ते। अनयैव रीत्या गणमात्राच्छन्दसां गुरुलघुज्ञानं भवति। तद्रीतिर्यथा—
मा० सं० ङ्कः अ०सं० ङ्कः गु० सं० ङ्कः अ० सं० ङ्कः गु० सं० ङ्कः ल० सं० ङ्कः
" ५७- ४० = १७ " " ४० - १७ = २३"

**शिवप्रसादिनी**—यहाँ "सा" पद से गुरु सञ्ज्ञा जाननी चाहिए। इस सूत्र में गण की मात्राओं से युक्त समस्त छन्दों की गुरु-लघु संख्याओं को जनाने के लिए प्रकृत सूत्र को कहा गया है। आर्या आदि छन्दों में जिस सूत्र निर्दिष्टमात्रा से अक्षरसंख्या कम होगी, उसे गुरु संख्या समझना चाहिए, तथा उससे भिन्न स्थल में लघु संख्या जाननी चाहिए। एक गुरुवर्ण की दोमात्रा होने से, गुरु वर्ण में दो-दो मात्राओं का सन्निवेश होने के कारण ही मात्रा की संख्या से अक्षरों की संख्या कम हुआ करती है। इस कारण केवल लघु वर्ण का समावेश रहने पर ही लघु सञ्ज्ञा हुआ करती है ॥५३॥

॥ इति सांख्य-योग-न्याय-वैशेषिक-पद-वाक्य-पारावारीणेन मैथिलपण्डित-चित्तनारायणपाठकाऽऽह्वयेन कृतायां पिङ्गलछन्दः शास्त्रीय-शिवप्रसादिनीव्याख्यायां चतुर्थोऽध्यायः ॥

## पञ्चमोऽध्यायः

### वृत्तम् ।५।१।।

**मृतसञ्जीवनी**—अधिकारोऽयमाशास्त्रपरिसमाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यामस्तद् 'वृत्तम्' वेदितव्यम् । तेन प्राक्तनं लौकिकं छन्दोजातं 'जातिः' इत्युच्यते । इत उत्तरं च 'वृत्तम्' । तथा चोक्तम्—

'पद्यं चतुष्पदी[1] तच्च वृत्तं जातिरिति द्विधा ।' (का०द० १।११)

गायत्र्यादौ छन्दसि वर्तत इति 'वृत्तम्। तच्च स्थिरगुरुलघ्वक्षरविन्यासमिष्यते । पादेन संयोगात् 'पद्यम्। यथा-आर्यादिच्छन्दःस्वपि पादव्यवस्था नास्तीति पादौ संयुक्तौ, वृत्ते पुनः पृथग्भवत इत्यर्थः । पादेन संयोगाभावात् । तथा चोक्तम्—

'एकदेशस्थिता जातिर्वृत्तं गुरुलघुस्थितम्' इति ।।

**शिवप्रसादिनी**—यहाँ से लेकर प्रकृत छन्दः शास्त्र की समाप्ति पर्यन्त जितने भी छन्द विषयक कार्य विधायक सूत्र होगा उसके विधेय सम्पर्क रूप से ''वृत्त'' की ही उपस्थिति होगी । अर्थात् यहाँ से लेकर प्रकृत शास्त्री की समाप्ति होने तक जो भी छन्द होगें, वे वृत्तछन्द के नाम से जाने जाएगें । एक श्लोक में प्रायः चार पाद या चार चरण होते हैं चारों पादों वा चारों चरणों से युक्त श्लोक को पद्य या वृत्त कहते हैं । पद्य के सामान्यतया दो भेद माने जाते हैं—(१) वृत्त एवं (२) जाति । वृत्त में लघु-गुरु अक्षरों की संख्याओं की गणना होती है, किन्तु जातिछन्द में मात्राओं की गणना हुआ करती है । इस अधिकार सूत्र से उत्तरवर्ती सभी छन्द वृत्त रूप में व्यवहृत होगें, किन्तु इसके पूर्व चतुर्थाऽध्यायाऽऽदि में वर्णित सभी लौकिक छन्द जाति के नाम से समझने योग्य हैं ।।१।।

(अग्रिम सूत्र से वृत्तछन्द के भेद (विशेष) का विधान किया जा रहा है—)

### सममर्धसमं विषमं च ।५।२।।

**मृतसञ्जीवनी**—समसर्वावयवत्वात् 'समम्' । यस्य चत्वारः पादा एकलक्षणयुक्तास्तत् 'समं' वृत्तम् । शेषं च संज्ञानुरूपमेव । तत्रार्धे समे यस्य तत् 'अर्धसमम्' सर्वावयवेभ्यः । अर्धाभ्यां च विगतं समं यस्य तद् 'विषमम्' । एवं त्रिप्रकारमपि वृत्तजातमुक्तम् ।।

---

(१) अत्र पादपर्यायः पदशब्दः । चतुर्णां पदानां समाहारश्चतुष्पदी । चतुष्पदीति पद्यलक्षणं प्रायिकत्वादुक्तम्, द्विपदीपञ्चपदीषट्पदीनामपि दृश्यमानत्वात्–इति **तरुणवाचस्पतिः** ।

**शिवप्रसादिनी**—वृत्त छन्द के तीन भेद होते हैं—(१) समवृत्त (२) अर्धसमवृत्त एवं (३) विषमवृत्त। इन तीनों में जिस वृत्त का प्रत्येक पाद समान, अर्थात् समान लघु-गुरु अक्षर वाला हो, (अक्षर संख्या के नियम से आबद्ध हो) वह ''समवृत्त'' कहलाता है। (जिस छन्द या वृत्त का चारों पाद समान अक्षर वाला हो, वह समवृत्त कहलाता है।) अर्धसमवृत्त-जिस वृत्त का प्रथम चरण तीसरे चरण के समान हो, और द्वितीय चरण (=पाद) चौथे चरण के समान हो, उसे ''अर्धसमवृत्त'' कहा जाता है। विषम वृत्त-जिस वृत्त के सभी पाद भिन्न-भिन्न छन्दों के अक्षरसंख्या के नियम से युक्त हो, वह वृत्त ''विषमवृत्त'' होता है ॥२॥

## समं तावत्कृत्वः कृतमर्धसमम् ।५।३।।

**मृतसञ्जीवनी**—'समम्' इति समवृत्तसंख्योच्यते। तयैव गुणितं 'तावत्कृत्वः कृतम्' उच्यते। एतदुक्तं भवति—समवृत्तसंख्यागुणिते समवृत्तसंख्यायाः पिण्डे या संख्या निष्पद्यते, तावत्संख्यमर्धसमं वेदितव्यम्। तत्र गायत्रे छन्दसि समवृत्तसंख्या चतुःषष्टि (६४) रष्टमाध्यायसिद्धा। तस्यां चतुःषष्टि (६४) संख्यागुणितायामर्धसमवृत्त संख्या संपद्यते—चत्वारि सहस्राणि, षण्णवतिश्च वृत्तानि। अङ्कतोऽपि (६४ × ६४) = ४०९६ ॥

**शिवप्रसादिनी**—सूत्रस्थ ''समम्'' पद वृत्त की समसंख्या का बोधक है। ''तावत् कृत्वः कृतम्'' शब्द का अर्थ ''उसके द्वारा गुणित, अर्थात् गुणा किया हुआ''। इस प्रकार सूत्राऽर्थ का स्वरूप होगा—समवृत्त की संख्या से समवृत्त की संख्या का गुणा किये जाने पर जो संख्या का गुणनफल होगा, उसी से अर्धसमवृत्त संख्या को समझना चाहिए। यथा—अष्टमाऽऽध्याय में गायत्री समवृत्त की संख्या चौंसठ (६४) कही गयी है। अतः गायत्री समवृत्त की चौंसठ संख्या (६४) को ६४ से गुणा (६४×६४) कर दिये जाने पर गुणन फल होगा—चार हजार छियानवे (४०९६) अतः गायत्री अर्धसमवृत्त की संख्या चार हजार छियानवे मानी जाती है ॥३॥

## विषमं च ।५।४।।

**मृतसञ्जीवनी**—अर्धसमं तावत्कृत्वः कृतं 'विषमं' भवति। एतदुक्तं भवति—अर्धसमवृत्तसंख्या (४०९६) अर्धसमवृत्तसंख्यया (४०९६) एव गुणिता विषमवृत्तसंख्या संपद्यते—एका कोटिः, सप्तषष्टिर्लक्षाणि, सप्तसप्ततिसहस्राणि, द्वे शते, षोडशोत्तरे। अङ्कतोऽपि (४०९६ × ४०९६) = १६७७७२१६ इति ॥

समसमार्धसमोपचितमर्धसमं विषमं च यथाक्रमं समोपचितं समार्धसमाभ्यां चोपचितं वेदिव्यम् ॥

**शिवप्रसादिनी**—पूर्वसूत्र से ''अर्धसमं तावत्कृत्वःकृतम्'' लाकर तथा उसके

आगे "विषमम्" को रखेंगें। तदनुसार सूत्राऽर्थ होगा—

पूर्व सूत्र से "अर्धसमं तावत् कृत्वः कृतम्" लाकर तथा उसके आगे "विषमम्" को रखेंगें। तदनुसार सूत्राऽर्थ होगा–अर्ध समवृत्त की (४०९६) संख्या को अर्धसमवृत्त की (४०९६) संख्या से ही गुणा करने पर विषमवृत्त की (४०९६ × ४०९६ = १,६७,७७,२१६) एक करोड़ सरसठ लाख सतहत्तर हजार दो सौ सोलह संख्या सम्पन्न होती है ॥४॥

## राश्यूनम् ।५।५।।

**मृतसञ्जीवनी**—तद् विषमं वृत्तं (१६७७७२१६) अर्धसमं (४०९६) वा राश्यूनम् (१६७७७२१६-४०९६ = १६७७३१२०) कर्तव्यम्। मूलराशिः (४०९६) समुदायात् (१६७७७२१६) अपवेतव्य इति। कोटिरेका, सप्तषष्टिर्लक्षाणि, त्रिसप्ततिसहस्राणि, विंशत्युत्तरं शतं शुद्धविषमवृत्तस्य संख्या। अङ्कतः १६७७७३१२०। चत्वारि सहस्राणि, द्वात्रिंशचेति शुद्धार्धसमसंख्या। अङ्कतोऽपि-(४०९६-६४) = ४०३२ उभयशेषोऽयं राश्यूनमिति ॥

**शिवप्रसादिनी**—उस विषमवृत्त (१,६७,७७,२१६) अथवा अर्धसमवृत्त (४०९६) की संख्या से अपनी-अपनी मूलराशि की संख्या का त्याग किया जाना चाहिए, अर्थात् उपर्युक्त विषम वृत्त की (१,६७,७७,२१६) संख्या से, उस मूलराशि अर्द्धसमवृत्त (४०९६) संख्या की निवृत्ति कर (१,६७,७७,२१६-४०९६ = १,६७,७३,१२०) दी जानी चाहिए। इसका आशय यह है कि मूलराशि (४०९६) को समुदाय संख्या (१,६७,७७,२१६) से घटा देना चाहिए, जिससे एक करोड़ सरसठ लाख तिहत्तर हजार एक सौ बीस (१,६७,७३,१२०) विषमवृत्त की संख्या निर्धारित होती है। एवं प्रदर्शित अर्धसमवृत्त की संख्या से उसकी मूलराशि समवृत्त की संख्या (६४) चौसठ को घटा देने पर (४०९६-६४ = ४०३२) इस प्रकार शुद्ध अर्ध समवृत्त की संख्या होती है ॥५॥

## ग्लिति [१]समानी ।५।६।।

**मृतसञ्जीवनी**—गकार (ऽ) लकारा (।) भ्यां यद्वृत्तं समाप्यते, तत् 'समानी' नाम। 'पादस्यानुष्टुब्बकम्' (पि०सू० ५।९) इत्यतः सूत्रात् सिंहावलोकितन्यायेनानुष्टुब्ग्रहण-मनुवर्तते। तेनाष्टाक्षरः पादो यावद्भिर्गकारलकारैः पूर्यते, तावतामेव ग्रहणम्। तत्रोदाहरणम्—

---

(१) 'हारगंधबंधुरेण दिट्ठअट्ठअक्खरेण। बारहाहि मत्त जाण **मल्लिआसुछंदमाण**॥' इति प्रा०पि०सू० २।७१ इत्यनुसारेण मल्लिकाख्यं नामान्तरम्। नव्यमतेऽस्य सूत्रस्य गद्यपरत्वमाह **व्यङ्कटाचलसूरिः**।

ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ ।
वा-स-वो-ऽपि वि-क्र-मे-ण य-त्स-मा-न-तां न या-ति ।
ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ ।
त-स्य व-ल्ल-भे-श्व-र-स्य के-न तु-ल्य-ता क्रि-ये-त? ॥

अपि च ।

ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ ।
ओँ न-मो ज-ना-र्द-ना-य पा-प-बं-ध-मो-च-ना-य ।
ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ ।
दु-ष्ट-दै-त्य-म-र्द-ना-य पु-ण्ड-री-क-लो-च-ना-य ॥

**शिवप्रसादिनी**—ग कार (ऽ) और लकार (।) इन दोनों से जो वृत्त समाप्त किया जाता है वह वृत्त ''समानी'' नाम वाला होता है । भाव यह है कि जहाँ पर आठ अक्षरों का एक पाद हुआ करता है वहाँ पर (उस छन्द में) पाद के पूर्ववर्ती अक्षर अर्थात् प्रथम, तृतीय, पञ्चम और सप्तम अक्षर गुरु (ऽ) सञ्ज्ञक होते हों, और उत्तरवर्ती अक्षर अर्थात् द्वितीय, चतुर्थ, षष्ठ, एवम् अष्टम संख्या का अक्षर लघु हों, ऐसे छन्द को ''समानीवृत्त'' कहते हैं । यहाँ पर सिंहाऽवलोकन न्याय से ''पादस्याऽनुष्टुब्वक्रम्'' (पि०सू० ५।९ ॥) इस आगामी नवम् सूत्र से अनुष्टुप् अधिकाराऽन्र्तगत अष्टाऽक्षर वाले पाद का ग्रहण कर सूत्रकार के द्वारा प्रकृत सूत्र का विचार वा प्रकृत सूत्र की रचना की गयी है ॥६॥

## ल्गिति [1]प्रमाणी ।५।७।।

**मृतसञ्जीवनी**—लकार (१) गकारा (ऽ) भ्यां यद्वृतं समाप्यते तत् 'प्रमाणी' नाम । 'जरौ [2]लगौ' इत्यपरे[3] । तत्रोदाहरणम्—

। ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ
स-रो-ज-यो-नि-र-म्ब-रे र-सा-त-ले त-था-च्यु-तः ।
। ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ
त-व प्र-मा-ण-मी-क्षि-तुं क्ष-मौ न तौ ब-भू-व-तुः ॥

**शिवप्रसादिनी**—एक लकार (लघु अक्षर) एवं एक गुरु अक्षर से जिस चतुष्पाद छन्द के प्रत्येक पाद की समाप्ति होती हो, वह छन्द ''समानी'' नाम से कहा जाता है ।

---

(१) 'लहू गुरू णिरंतरा **पमाणि** अट्ठअक्खरा।' इति प्रा० पि० सू० २।६९. 'द्वितुर्यषष्ठमष्टमं गुरु प्रयोजितं यदा । तदा निवेदयन्ति तां बुधा **नगस्वरूपिणीम्** ॥' इति श्रुतबोधानुसारेण नगस्वरूपिणीत्यपि नामान्तरम् ।

(२) 'नाराचम्' इति कलिकातामुद्रिते ।

(३) छन्दोमञ्जरीकाराः ।

यही छन्द छन्दोमञ्जरी ग्रन्थ में "नाराच" नाम से भी अभिहित हुआ है। प्राकृत पिङ्गल छन्द में इस सूत्र के विषय को इस प्रकार प्रकाशित किया गया है—"लहू गुरु णिरन्तरा पमाणि अट्ठाअक्खरा" (प्रा० पि० सू० २।६९) = आठ अक्षरों वाले चार पादों वाले छन्द में जहाँ प्रत्येक पादों के अन्त में सर्वत्र एक लघु एवम् एक गुरु अक्षर हो, तो वह छन्द "प्रमाणी" नाम वाला होता है। इसी प्रकार प्राकृत सूत्र का भी अर्थ है। इस सूत्र का हार्दिक अभिप्राय यह जानना चाहिए कि—अष्टाऽक्षरयुक्त पाद वाले जिस छन्द के प्रत्येक पाद में पूर्व-पूर्व अक्षर लघु और उत्तर-उत्तर अक्षर गुरु हों, अर्थात् चार पादों में प्रत्येक पाद के अन्तर्गत विराजमान अष्ट अक्षरों में से प्रथम, तृतीय, पञ्चम, एवं सप्तम अक्षर ह्रस्व (एकमात्रिक) हों, और द्वितीय, चतुर्थ, षष्ठ, एवम् अष्ठम अक्षर गुरुसञ्ज्ञक (द्विमात्रिक) हों, तो उस छन्द को "प्रमाणी" छन्द कहते हैं ।।७।।

## वितानमन्यत् ।५।८।।

**मृतसञ्जीवनी**—आभ्यां समानी-प्रमाणीभ्यामन्यदष्टाक्षरपादं छन्दो 'वितानं' नाम। तत्रोदाहरणम्—

ऽ ऽ । । ऽ ऽ । । ऽ ऽ । । ऽ ऽ । ।
[१]तृ-ष्णां त्य-ज ध-र्मं भ-ज पा-पे हृ-द-यं मा कु-रु।
ऽ ऽ । । ऽ ऽ । । ऽ ऽ । । ऽ ऽ । ।
इ-ष्टा य-दि ल-क्ष्मी-स्त-व शि-ष्टा-न-नि-शं सं-श्र-य ।।

द्वितीयं च—

। । ऽ ऽ । । ऽ ऽ । । ऽ ऽ । । ऽ ऽ
हृ-द-यं य-स्यं वि-शा-लं ग-ग-ना-भो-ग-स-मा-नम्।
। । ऽ ऽ । । ऽ ऽ । । ऽ ऽ । । ऽ ऽ
ल-भ-ते-ऽसौ म-णि-चि-त्रं नृ-प-ति-र्मू-र्ध्नि वि-ता-नम् ।।

अन्यूच्च—

ऽ ऽ । ऽ । ऽ । ऽ ऽ ऽ । ऽ । ऽ । ऽ
[२]क-ङ्का-ल-मा-ल-भा-रि-णं कं-द-र्प-द-र्प-हा-रि-णम्।
ऽ ऽ । ऽ । ऽ । ऽ ऽ ऽ । ऽ । ऽ । ऽ
सं-सा-र-ब-न्ध-मो-च-नं व-न्दा-म-हे त्रि-लो-च-नम् ।।

अपि च—

---

(१) प्राकृतपिङ्गलानुसारेणात्र दोहाभेदान्तर्गत**करभ**च्छन्दः।
(२) **'नाराचकं तरौ लगौ'** इति छन्दःकौस्तुभानुसारेणात्र नाराचकं छन्दः।

ऽ ऽ । ऽ । ऽ । ऽ ऽ ऽ । ऽ । ऽ । ऽ
त-स्याः स्म-रा-मि सु-न्द-रं च-न्द्रो-प-मा-न-मा-न-नम् ।
ऽ ऽ । ऽ । ऽ । ऽ ऽ ऽ । ऽ । ऽ । ऽ
कं-द-र्प-चा-प-भ-ङ्गु-र- भ्रू-वि-भ्र-मो-प-शो-भि-तम् ॥

(अपि च)—

ऽ । । ऽ । । ऽ ऽ ऽ । । ऽ । । ऽ ऽ
[१]अ-न्य-द-तो हि वि-ता-नं **श्वे-त-प-टे-न** य दु-क्तम् ।
ऽ । । ऽ । । ऽ ऽ ऽ । । ऽ । । ऽ ऽ
चि-त्र-प-दा-पि च भौ गौ ते-न ग-ता-र्थ-मि-वै-तत् ॥

किं च 'वितानमन्यत्' इति ब्रुवन् सूत्रकारो वितानस्यानेकप्रकारतां दर्शयति । अन्यथा 'वितानं भौ गौ' इत्येव ब्रूयात् ॥

**शिवप्रसादिनी**—अन्यत् = समानी और प्रमाणी छन्द से भिन्न (वृत्त) छन्द ''वितान'' नाम से जाना जाता है । आठ अक्षरों वाले चार पादों में समाप्त होने वाले समानी छन्द के प्रत्येक पादों में क्रमिक रूप से जहाँ चार गुरु एवं चार लघु अक्षर होते हैं । अर्थात् वहाँ पर प्रथम, तृतीय, पञ्चम्, एवं सप्तम अक्षर गुरु सञ्ज्ञक और द्वितीय, चतुर्थ, षष्ठ तथा अष्टमाऽक्षर नियमित रूप से लघु पाए जाते हैं । इसी प्रकार के प्रमाणी वृत्त के आठ अक्षरों वाले पाद में पूर्व-पूर्व अक्षर लघु तथा उत्तर-उत्तर के अक्षर गुरु होते हैं, किन्तु वितान वृत्त के आठ अक्षरों में क्रमशः दो गुरु, दो लघु अक्षर पाए जाते हैं, जो कि वृत्तिगत उदाहरणों के मध्य से स्पष्ट होगा ॥८॥

## पादस्यानुष्टुब्वक्रम्[२] ।५।९।।

**मृतसञ्जीवनी**—'पादस्य' इत्ययमधिकार आसप्तमाध्यायपरिसमाप्तेः । 'अनुष्टुब्वक्रम्' इति च प्राक् पदचतुरूर्ध्वात् (वि०सू० ५।२०) अधिकृतं वेदितव्यम् ॥

**शिवप्रसादिनी**—यह पादाऽधिकार सूत्र है, जिसकी अनुवृत्ति प्रकृत ग्रन्थ के सप्तम अध्याय की समाप्ति तक चलेगी । इसके अतिरिक्त इस पाँचवें अध्याय के ''पदचतुरूर्ध्वाम्'' (पि०सू० ५।२०) बींसवें सूत्र के पूर्व तक ''अनुष्टुब्वक्रम्'' इसका भी अधिकार चलेगा ॥९॥

## न प्रथमात्स्नौ ।५।१०।।

---

(१) **'चित्रपदा भौ गौ'** इति (६।५) सूत्रानुसारेणात्र चित्रपदाख्यं छन्दः ।

(२) यद्यपि सभेदमिदमुत्तरत्र षष्ठेऽध्यायेऽनुष्टुबधिकार एव वक्तुमुचितम्; तथापि यथा मात्राछन्दसि लघुगुरुनियमो नास्ति, तथात्रापीति पृथगुक्तम् इति **केचित्** ।

**मृतसञ्जीवनी**—प्रतिषेधार्थमिदं सूत्रम्। अत्र वक्रजातौ पादस्य प्रथमादक्षरादूर्ध्वं सगण-(।।ऽ) नगणौ (।।।) न कर्तव्यौ ॥

**शिवप्रसादिनी**—यह निषेध सूत्र है। वक्रजाति के छन्द में पाद के प्रथम अक्षर के ऊपर या आगे-"स्नौ"= सगण (।।ऽ) और नगण (।।।) का प्रयोग नहीं होना चाहिए ॥१०॥

## द्वितीयचतुर्थयो रश्च ।५।११॥

**मृतसञ्जीवनी**—द्वितीयचतुर्थयोश्च पादयोः प्रथमादूर्ध्व रेफो[1] (ऽ।ऽ) न कर्तव्य इत्युपदेशः ॥

**शिवप्रसादिनी**—द्वितीय एवं चतुर्थपाद में प्रथम अक्षर के आगे रगण (ऽ।ऽ) का प्रयोग नहीं किया जाना चाहिए ॥११॥

## वान्यत् ।५।१२॥

**मृतसञ्जीवनी**—[2]अन्येषां षण्णां गणानां मध्ये यत्किंचित् गणान्तरं प्रथमान्तरं कर्तव्यम् ॥

**शिवप्रसादिनी**—सगण (।।ऽ) और नगण (।।।) से भिन्न (१) मगण (ऽऽऽ), (२) भगण (ऽ।।), (३) यगण (।ऽऽ), (४) जगण (।ऽ।), (५) रगण (ऽ।ऽ) और (६) तगण (ऽऽ।) तीन-तीन अक्षरों के समुदाय स्वरूप छहों प्रकार के इन मगणाऽऽदिकों के मध्य में जिस किसी त्रिक (तीन अक्षरों के गण) को दिया जाना आवश्यक है। (कलिकाता मुद्रित वृत्ति ग्रन्थ के अनुसार सूत्राऽर्थ का स्वरूप व्यक्त किया गया है।) ॥१२॥

## [3]य चतुर्थात् ।५।१३॥

**मृतसञ्जीवनी**—'य' इति लुप्तविभक्तिको निर्देशः। पादस्य चतुर्थादक्षरादूर्ध्वं यगणः (।ऽऽ) प्रयोक्तव्यः। सर्वेषामुदाहरणानि—

ल० यगणः यगणः ल० ल० यगणः यगणः गु०
। ।ऽऽ ।ऽऽ । । ।ऽऽ । ऽऽ ऽ
[4]न(१)वधारा(४)म्बुसंसि-क्त- व(१)सुधाग(४)न्धिनिःश्वा-सम्।

---

(१) 'रेफोऽपि' इति क. का. मु. पुस्तके।

(२) कलिकातामुद्रिते तु (सगण (।।ऽ), नगणाभ्या(।।।) मन्यन्मगणा (ऽऽऽ) दित्रिकषट्कमध्ये यत्किंचित्त्रिकान्तरं वा कर्तव्यम् ॥'

(३) यश्चतुर्थात्-इत्येव वैदिकपाठः। 'अब्धेर्योऽनुष्टुभि ख्यातम्' इति प्रा०पि०सू० २।३३२।

(४) पि०सू० ५।१० सूत्रस्योदाहरणम्।

गु० जगणः यगणः गु० ल० तगणः यगणः गु०
ऽ ।ऽ। ।ऽऽ ऽ । ऽऽ। ।ऽऽ ऽ
किं(१)चिदुन्न(४)तघोणा-ग्रं म(१)ही काम(४)यते व-कम् ॥

अन्यैरप्युक्तम्—

गु० भगणः यगणः ल० ल० मगणः यगणः गु०
ऽ ऽ।। ।ऽऽ ऽ । ऽऽऽ ।ऽऽ ऽ
[1]नी(१)लोत्पल(४)वनेष्व-द्य च(१)रन्त्यश्चा(४)रुसंरा-वाः ।

गु० मगणः यगणः गु० ल० मगणः यगणः गु०
ऽ ऽ ऽऽ ।ऽऽ ऽ । ऽऽऽ । ऽऽ ऽ
रा(१)माः कौशे(२)यसंवी-ताः प्र(१)नृत्यन्ती-व(४)काद-म्बाः ॥

तथा—

गु० रगणः यगणः गु० गु० भगणः यगणः गु०
ऽ ऽ।ऽ । ऽऽ ऽ ऽ ऽ।। ।ऽऽ ऽ
[2]दु(१)र्भाषिते(४)ऽपि सौभा-ग्यं प्रा(१)यः प्रकु(४)रुते प्री-तिः ।

गु० रगणः यगणः ल० गु० मगणः यगणः गु०
ऽ ऽ।ऽ ।ऽऽ । ऽ ऽऽऽ ।ऽऽ ऽ
मा(१)तुर्मनो(४)हरन्त्ये-व दौ(१)र्लालित्यो(४)क्तिभिर्बा-लाः ॥

इत्यादि ॥

**शिवप्रसादिनी**—पाद में चतुर्थ अक्षर के ऊपर यगण (।ऽऽ) का प्रयोग किया जाना चाहिए। सूत्र में ''य'' यह लुप्त प्रथमान्त पद है, ऐसा समझना चाहिए। ऊपर में कहे गये समस्तसूत्रों के उदाहरण इसी सूत्र की वृत्ति में प्रदर्शित की गयी है ॥१३॥

## [3]पथ्या युजो ज् ।५।१४।।

**मृतसञ्जीवनी**—'चतुर्थात्' (पि०सू० ५।१३) इति वर्तते। अत्र वक्रे युजः (२,४)

---

(१) पि०सू० इत्यस्योदाहरणम्। श्लोकोऽयं **शबरस्वामिना** मीमांसाभाष्ये (१।१।२४) उदाहृतः। तत्र '.....चरन्तः.....नीलकौशेय....प्रणश्यन्तीव....' इति पाठः।

(२) पि०सू० ५।११ इत्यस्योदाहरणम्. 'दुर्भाविते' इति लि. पुस्तके।

(३) 'युजोश्चतुर्थतो जेन **पथ्यावक्रं** प्रकीर्तितम्' इति प्रा०पि०सू० २।३३४. 'पथ्यायुजो जः' इति लि. पुस्तके।

पादस्य चतुर्था दक्षरादूर्ध्वं जगणः (।ऽ।) प्रयुज्यते, तद्वक्रं 'पथ्या' नाम। 'य' (।ऽऽ) स्यापवादः। अत्रोदाहरणम्—

गु० तगणः यगणः ल० गु० मगणः जगणः ल०

ऽ ऽ ऽ । । ऽ ऽ । ऽ ऽ ऽ ऽ । ऽ । ।

नि(१)त्यं नीति(४)निषण्ण-स्य रा(१)ज्ञो राष्ट्र(४)न सीद-ति।

ल० यगणः यगणः गु० गु० मगणः जगणः गु०

। । ऽ ऽ । ऽ ऽ ऽ ऽ ऽ ऽ ऽ । ऽ । ऽ

न(१)हि पथ्या(४)शिनः का-ये जा(१)यन्ते व्या(४)धिवेद नाः॥

**शिवप्रसादिनी**—प्रकृत सूत्र में "चतुर्थ्यात्" (पि०सू० ५।१३) इस अंश की अनुवृत्ति आ रही है। तदनुसार सूत्राऽर्थ होगा जिस वक्रछन्द के युक्पाद में अर्थात् द्वितीय, एवं चतुर्थपाद में स्थित चौथे अक्षर के आगे जगण (।ऽ।) का प्रयोग किया जाता है, वह वक्र "पथ्या" नाम से कहा जाता है। यह सूत्र अपने पूर्ववर्त्ती (५।१३) का अपवाद है॥१४॥

## [१]विपरीतैकीयम्॥५।१५॥

**मृतसञ्जीवनी**—[२]उक्तलक्षणाद्विपरीता 'पथ्या' भवतीत्येकीयं मतम्, 'अयुक्पादे चतुर्थादक्षरात् परतो जकारः कर्तव्यः, युक्पादे य एवावतिष्ठते। अत्रोदाहरणम्—

गु० यगणः जगणः गु० गु० मगणः यगणः गु०

ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ ऽ ऽ । ऽ ऽ ऽ

भ(१)र्तुराज्ञा(४)नुवर्ति-नी या(१)स्त्री स्यात्सा(४) गृहे ल-क्ष्मीः।

गु० यगणः जगणः गु० ल० यगणः यगणः गु०

ऽ । ऽ ऽ । ऽ । ऽ । । ऽ ऽ । ऽ ऽ ऽ

स्व(१)प्रभुत्वा(४)भिमानि-नी विं(१)परीता(४)परित्या-ज्या॥

**शिवप्रसादिनी**—उपर्युक्त लक्षण से विपरीत "पथ्या" होत्ती है। ऐसा एकमत है। इसका भाव यह है कि जिस छन्द के प्रथम पाद एवं तृतीय पाद में विद्यमान चतुर्थ अक्षर के आगे जगण (।ऽ।) प्रयुक्त हुआ हो, वह वक्र छन्द किसी आचार्य के मत में "पथ्या" कहलाता है॥१५॥

---

(१) 'ओजयोर्जेन वारिधेस्तदेव **विपरीतादि**' इति छन्दःकौस्तुभे।

(२) कलिकातामुद्रिते तु–'उक्तलक्षणाद्विपरीतलक्षणा एकीयमते 'पथ्या' भवति। यथा—

## [1]चपलायुजो न् ।५।१६।।

**मृतसञ्जीवनी**—अयुक् (१,६) पादस्य यदा चतुर्थादक्षरादूर्ध्व नकारो (।।।) भवति युक्-(२,४) पादे । य (।ऽऽ) एवावतिष्ठते, तदा 'चपला' नाम सानुष्टुब् । तत्रोदाहरणम्—

गु० यगणः नगणः गु० गु० यगणः यगणः गु०

ऽ ।ऽऽ ।।। ऽ ऽ ।ऽऽ ।ऽऽ ऽ

क्षी(१)यमाणा(४)ग्रदश—ना व(१)क्रनिर्मा(४)सनासा-ग्रा ।

गु० यगणः नगणः गु० ल० यगणः यगणः गु०

ऽ ।ऽ ऽ ।।। ऽ । ।ऽऽ ।ऽऽ ऽ

क(१)न्यका वा(४)क्यचप-ला ल(१)भते धू(४)र्तसौभा-ग्यम् ।।

**शिवप्रसादिनी**—जिस छन्द के अयुक् पाद में, अर्थात् प्रथम एवं तृतीय पाद में स्थित चतुर्थ अक्षर के ऊपर नगण (।।।) का प्रयोग हुआ हो, तथा युक् पाद में अर्थात् द्वितीय एवं चतुर्थ पाद में चतुर्थ अक्षर के ऊपर में यगण (।ऽऽ) उपलब्ध होता हो, तो वह वक्त्र अनुष्टुप् छन्द "चपला" नाम से व्यवहृत होता है ।।१६।।

## विपुला[2] युग्लः सप्तमः ।५।१७।।

**मृतसञ्जीवनी**—अधिकारोऽयम् । 'य चतुर्थात्' (पि०सू० ५।१३) इत्यनेन सर्वत्र यकारे (।ऽऽ) कृते यदा युक् (२,४) पादे सप्तमो वर्णो लघुर्भवति, तदा 'विपुला' नाम सानुष्टुब् ।।

ननु पथ्यालक्षणेऽन्तर्भूतत्वात् पुनरुक्तमेतत् । नैवम्, विपुलावर्गस्येदानीमारभ्यमाणत्वात्तद्विनानुपपत्तेः । युक् (२,४) पादे सप्तमेन लघुनावश्यमेव भवितव्यम् । प्रथमतृतीययोश्चैतावता यकारस्यापवादः । तथा च वक्ष्यति—[3]'सर्वतः सैतवस्य' (पि०सू० ५।१८) इत्यादिना । पथ्यायां तु यकार (।ऽऽ) एवावतिष्ठते ।।

**शिवप्रसादिनी**—यह अधिकार सूत्र है । जिस छन्द के द्वितीय पाद और चतुर्थ पाद में सातवाँ अक्षर लघु नाम वाला उपलब्ध हो जाता है तब वह अनुष्टुप् वक्त्र छन्द "विपुला" कहलाता है । पथ्या में जहाँ प्रथम एवं तृतीय पाद के चतुर्थ वर्ण से ऊपर यगण (।ऽऽ) का होना आवश्यक होता है, वहीं विपुला अनुष्टुप् छन्द में यगण के समीप

---

(१) **चपलावक्त्र**मयुजोर्नकारश्चेत्पयोराशेः' इति छन्दःकौस्तुभे ।

(२) 'यस्यां तसप्तमो युग्मे सा **युग्मविपुला**' इति छंन्दः कौस्तुभे युग्मविपुलेति नामान्तरम् ।

(३) लिखितपुस्तके सूत्रमत्रैतन्नास्ति ।

में भगण (ऽ।।) रगण (ऽ।ऽ) या नगण (।।।) की आवश्यकता होती है, यही पथ्या और विपुला छन्द में भेद है ॥१७॥

## [१]सर्वतः सैतवस्य ।५।१८॥

**मृतसञ्जीवनी**—सैतवस्याचार्यस्य मतेन युक् (२,४) पादे अयुक् (१,३) पादे च सप्तमो लकार (।) एव कर्तव्यः । अत्रोदाहरणम्—

गु० जगणः जगणः गु० गु० भगणः जगणः गु०

ऽ ।ऽ। ।ऽ। ऽ ऽ ऽ।। ।ऽ। ऽ

सै(१)तवेन(४)पथार्ण(७)वं ती(१)र्णो दश(४)रथात्म(७)जः ।

गु० भगणः जगणः गु० ल० मगणः जगण गु०

ऽ ऽ।। ।ऽ। ऽ । ऽऽऽ ।ऽ। ऽ

र(१)क्षः क्षय(४)करीं पु(७)नः प्र(१)तिज्ञां स्वे(४)न बाहु(७)ना ॥

**शिवप्रसादिनी**—सैतव आचार्य के मत से (युक्पाद=) द्वितीय और चतुर्थ पाद में तथा प्रथम और तृतीय पाद में, अर्थात् चारों पादों में सप्तम अक्षर लघु ही किया जाना उचित होता है ॥१८॥

## भ्रौ न्तौ च ।५।१९॥

**मृतसञ्जीवनी**—'सर्वतः सैतवस्य' (पि०सू० ५।१८) इति निवृत्तम् । 'चपलायुजो न्' (पि०सू० ५।१६) इत्येतस्मादयुग्ग्रहणमनुवर्तते । 'विपुला युग्लः सप्तमः' (पि०सू० ५।१७) इति सर्वमनुवर्तनीयम् । अयुक् (१,३) पादे यदा चतुर्थादक्षरात्परतो यकारं (।ऽऽ) बाधित्वा भकार (ऽ।।) रेफ (ऽ।ऽ) नकार (।।।) तकारा (ऽऽ।) विकल्पेन भवन्ति, तदासौ 'विपुला' नाम । तत्र भकारेण[२] विपुलोदाहरणम्—

ल० रगणः भगणः गु० ल० मगणः जगणः गु०

। ऽ।ऽ ऽ।। ऽ । ऽऽऽ ।ऽ। ऽ

इ(१)यं सखे(४)चन्द्रमु(७)खी स्मि(१)तज्योत्स्ना(४)च मानि(७)नी ।

गु० रगणः भगणः गु० गु० जगणः जगणः गु०

ऽ ऽ।ऽ ऽ।। ऽ ऽ ।ऽ। ।ऽ। ऽ

इ(१)न्दीवरा(४)क्षी हृद(७)यं द(१)न्दहीति(४)तथापि(७)मे ॥

---

(१) 'सैतवस्याखिलेष्वपि' इति छन्दःकौस्तुभे ।

(२) 'भेनाऽब्धितो भाद्विपुला' इति छन्दःकौस्तुभे ।

'अयुजः' (पि०सू० ५।१६) इति जातिपक्षे द्वयोरपि पादयोर्ग्रहणम्। व्यक्तिपक्षे पुनरेकस्य। एकपक्षे पुनः प्रथमस्य तृतीयस्य वा। तथा च महाकवीनां प्रयोगाः—

ल० रगणः भगणः गु० गु० यगणः जगणः गु०
। ऽ।ऽ ऽ।। ऽ ऽ ।ऽऽ ।ऽ। ऽ
व(१)टे वटे(४)वैश्रव(७)णः[1] च(१)त्वरे च(४)त्वरे शि(७)वः[1]।

गु० यगणः यगणः गु० गु० भगणः जगणः गु०
ऽ ।ऽऽ ।ऽऽ ऽ ऽ ऽ।। ।ऽ। ऽ
प(१)र्वते प(४)र्वते रा(७)मः[1] स(१)र्वत्र म(४)धुसूद(७)नः[1] ॥

(अग्निपु० ३०५।१४)

गु० भगणः यगणः गु० गु० यगणः जगणः गु०
ऽ ऽ।। ।ऽऽ ऽ ऽ ।ऽऽ ।ऽ। ऽ
दे(१)वः स ज(४)यति श्री(७)मान् द(१)ण्डधारो(४)महाम[2](७)तिः।

गु० रगणः भगणः गु० गु० जगणः जगणः ल०
ऽ ऽ।ऽ ऽ।। ऽ ऽ ।ऽ। ।ऽ। ।
य(१)स्य प्रसा(४)दाद्भुव(७)नं शा(१)श्वते प(४)थि तिष्ठ(७)ति ॥

ल० रगणः भगणः गु० ल० तगणः जगणः गु०
। ऽ।ऽ ऽ।। ऽ । ऽऽ। ।ऽ। ऽ
उ(१)पस्थितं(४)प्राञ्जलि(७)ना वि(१)नीतेन(४)गरुत्म(७)ता।

गु० रगणः भगणः गु० गु० तगणः जगणः गु०
ऽ ऽ।ऽ ऽ।। ऽ ऽ ऽऽ। ।ऽ। ऽ
ना(१)रायणं(४)स्तौमि स(७)दा भ(१)क्तानां भ(४)यनाश(७)नम् ॥

इत्यादि ॥

इदानीं रेफ[3](ऽ।ऽ)विपुलोदाहरणम्—

---

(१) मूले त्वेतद् द्वितीयान्तं दृश्यते, तत्र 'संस्मरन् मुक्तिनुक्तिभाक्।' (३०५।१५) इत्युत्तरेण सम्बन्धः।

(२) दण्डधारी महीपतिः' इति क. पुस्तके।

(३) 'इत्थमन्या रश्चतुर्थात्' इति छ. कौ०।

गु० रगणः रगणः गु० ल० भगणः जगणः गु०
ऽ ऽ।ऽ ऽ।ऽ ऽ । ऽ।। ।ऽ। ऽ

ल(१)क्ष्मीपतिं(४)लोकना(७)थं र(१)थाङ्गध(४)रमच्यु[1](७)तम्।

गु० रगणः रगणः गु० ल० जगणः जगणः गु०
ऽ ऽ।ऽ ऽ।ऽ ऽ । ।ऽ। ।ऽ। ऽ

य(१)ज्ञेश्वरं(४)शार्ङ्गपा(७)णिं प्र(१)णमामि(४)त्रयीत(७)नुम्॥

व्यक्तिपक्षे प्रथमे पादे—

ल० रगणः रगणः गु० गु० मगणः जगणः गु०
। ऽ।ऽ ऽ।ऽ ऽ ऽ ऽऽऽ ।ऽ। ऽ

म(१)हाकविं(४)कालिदा(७)सं व(१)न्दे वाग्दे(४)वतां गु(७)रुम्।

गु० मगणः यगणः ल० गु० जगणः जगणः गु०
ऽ ऽऽऽ ।ऽऽ । ऽ ।ऽ। ।ऽ। ऽ

य(१)ज्ज्ञाने वि(४)श्वमाभा(७)ति द(१)र्पणे प्र(४)तिबिम्ब(७)वत्॥

तृतीये पादे—

गु० यगणः सगणः गु० गु० तगणः जगणः गु०
ऽ ।ऽऽ ।।ऽ ऽ ऽ ऽऽ। ।ऽ। ऽ

का(१)मिनीभिः(४)सह प्री(७)तिः का(१)स्मै नाम(४)न रोच(७)ते।

ल० यगणः रगणः ल० गु० जगणः जगणः गु०
। ।ऽऽ ऽ।ऽ । ऽ ।ऽ। ।ऽ। ऽ

य(१)दि न स्या(४)द्वारिवी(७)चि च(१)ञ्चलं ह(४)तजीवि(७)तम्॥

इदानीं [2]नकार(।।।)विपुलोदाहरणम्—

गु० रगणः नगणः गु० गु० यगणः जगणः गु०
ऽ ऽ।ऽ ।।। ऽ ऽ ।ऽऽ ।ऽ। ऽ

य(१)स्या विभा(४)ति विपु(७)ला म(१)न्मथस्था(४)नपिण्डि(७)का।

गु० यगणः नगणः गु० गु० तगणः जगणः गु०
ऽ ।ऽऽ ।।। ऽ ऽ ऽऽ। ।ऽ। ऽ

या(१)चतुःष(४)ष्टिचतु[3](७)रा सा(१)स्त्री स्यान्नृ(४)पवल्ल(७)भा॥

---

(१) 'ईश्वरम्' इति क. पुस्तके। (२) **'नोऽम्बुधेश्चेन्नविपुला'** इति छन्दःकौस्तुभकारः।
(३) 'चतुःषष्टिरङ्गविद्याः कामसूत्रस्यावयविन्यः' **वात्स्यायनसूत्रे** (१।३।१६) द्रष्टव्याः।

तथैव **भारविः**—

ल० रगणः नगणः गु० ल० तगणः जगणः गु०
| ऽ|ऽ ||| ऽ | ऽऽ| |ऽ| ऽ

[१]यु(१)युत्सुने(४)व कव(७)चं कि(१)मामुक्त(४)मिदं त्व(७)या? ।

ल० रगणः नगणः गु० गु० जगणः जगणः गु०
| ऽ|ऽ ||| ऽ ऽ |ऽ| |ऽ| ऽ

त(१)पस्विनो (४)हि वस(७)ने[२] के(१)वलाजि(४)नवल्क(७)ले ।।

(किरात० ११।१५)

व्यक्तिपक्षे **कालिदासः**—

ल० मगणः नगणः गु० गु० मगणः जगणः गु०
| ऽऽऽ ||| ऽ ऽ ऽऽऽ |ऽ| ऽ

[२]अ(१)नाकृष्ट(४)स्य विष(७)यैर् वि(१)द्यानां पा(४) रदृश्व(७)नः ।

गु० जगणः यगणः गु० गु० तगणः जगणः गु०
ऽ |ऽ| |ऽऽ ऽ ऽ ऽऽ| |ऽ| ऽ

त(१)स्य धर्म(४)रतेरा(७)सीद् वृ(१)द्धत्वं ज(४)रसा वि(७)ना ।।

(र०वं० १।२३)

तथा च—

ल० जगणः यगणः गु० गु० तगणः जगणः गु०
| ऽ|ऽ |ऽऽ ऽ ऽ ऽऽ| |ऽ| ऽ

[२]त(१)व मन्त्र(४)कृतो म(७)न्त्रैर् दू(१)रात्सश(४)मितारि(७)भिः ।

गु० मगणः नगणः गु० गु० जगणः जगणः गु०
ऽ ऽऽऽ ||| ऽ ऽ |ऽ| |ऽ| ऽ

प्र(१)त्यादिश्य(४)न्त इव(७)मे दृं(१)ष्टलक्ष्य(४)भिदः श(७)राः ।।

(र०वं० १।६१)

तथा च—

ल० जगणः यगणः गु० गु० तगणः जगणः गु०
ऽ |ऽ| |ऽऽ ऽ ऽ ऽऽ| |ऽ| ऽ

[२]त(१)व मन्त्र(४)कृतो म(७)न्त्रैर् दू(१)रात्सश(४)मितारि(७)भिः ।

(१) नकार**विपुलो**दाहरणानि । (२) 'वसते' इति मूलै ।

गु० मगणः नगणः गु० गु० जगणः जगणः गु०
ऽ ऽऽऽ ।।। ऽ ऽ ।ऽ। ।ऽ। ऽ
प्र(१)त्यादिश्य(४)न्त इव(७)मे दृं(१)ष्टलक्ष्य(४)भिदःश(७)राः ।।

(र०वं० १।६१)

इदानीं तकार (ऽऽ।) विपुलोदाहरणम्—

जातिपक्षे—

गु० मगणः तगणः गु० ल० भगणः जगणः गु०
ऽ ऽऽऽ ऽऽ। ऽ । ऽ।। ।ऽ। ऽ
व(१)न्दे देवं(४)सोमेश्व(७)रं ज(१)टामुकु(४)टमण्डि(७)तम् ।

गु० भगणः तगणः गु० ल० भगणः जगणः गु०
ऽ ऽ।। ऽऽ। ऽ । ऽ।। ।ऽ। ऽ
ख(१)ट्वाङ्गध(४)रं [1]चन्द्र(७)मः शि(१)खामणि(४)विभूषि(७)तम् ।।

व्यक्तिपक्षे—

गु० रगणः तगणः गु० गु० जगणः जगणः गु०
ऽ ऽ।ऽ ऽऽ। ऽ ऽ ।ऽ। ।ऽ। ऽ
व(१)न्दे कविं(४)**श्रीभार**(७)**विं** लो(१)कसंत(४)मसच्छि(७)दम् ।

ल० मगणः यगणः ल० गु० तगणः जगणः गु०
ऽ ऽऽऽ ।ऽऽ । ऽ ऽऽ। ।ऽ। ऽ
दि(१)वा दीपा(४)इवाभा(७)न्ति य(१)स्याग्रे क(४)वयोऽप(७)रे ।।

तथान्येषामपि प्रयोगाः—

गु० जगणः यगणः गु० गु० यगणः जगणः गु०
ऽ ।ऽ। ।ऽऽ ऽ ऽ ।ऽऽ ।ऽ। ऽ
लो(१)कवत्प्र(४)तिपत्त(७)व्यो लौ(१)किकोऽर्थः(४)परीक्ष(७)कैः ।

गु० भगणः तगणः ल० ल० यगणः जगणः गु०
ऽ ऽ।। ऽऽ। । । ।ऽऽ ।ऽ। ऽ
लो(१)कव्यव(४)हारं प्र(७)ति स(१)दृशौ बा(४)लपण्डि(७)तौ ।।

इदानीं चकाराकृष्टं [2]मकार (ऽऽऽ) विपुलोदाहरणम्—

---

(१) 'शंकरं चन्द्ररेखाशिवाननम्' इति लि. पुस्तके । (२) एते **विपुलाभेदाश्छन्दःकौस्तु-भादौ नोपलभ्यन्ते ।**

गु० रगण: मगण: गु० गु० यगण: जगण: गु०
ऽ ऽ।ऽ ऽऽऽ ऽ ऽ ।ऽऽ ।ऽ। ऽ
स(१)र्वातिरि(४)क्तं लाव(७)ण्यं बि(१)भ्रती चा(४)रुविभ्र(७)मा ।

गु० रगण: मगण: ल० गु० मगण: जगण: गु०
ऽ ऽ।ऽ ऽऽऽ । ऽ ऽऽऽ ।ऽ। ऽ
स्त्री(१)लोकसृ(४)ष्टिस्त्वयै(७)व नि:(१)सामान्य(४)स्य वेध(७)स: ॥

व्यक्तिपक्षे श्रीकालिदास:—

ल० रगण: मगण: गु० ल० यगण: जगण: गु०
। ऽ।ऽ ऽऽऽ ऽ । ।ऽऽ ।ऽ। ऽ
म(१)नोभिरा(४)मा: शृण्व(७)न्तौ र(१)थनेमि(४)स्वनोन्मु(७)खै: ।

गु० यगण: यगण: गु० ल० मगण: जगण: गु०
ऽ ।ऽऽ ।ऽऽ ऽ । ऽऽऽ ।ऽ। ऽ
ष(१)ड्जसंवा(४)दिनी: के(७)का द्वि(१)धा भिन्ना: (४)शिखण्डि(७)भि: ॥

(र०वं० १।३९)

ल० रगण: मगण: गु० गु० तगण: जगण: गु०
। ऽ।ऽ ऽऽऽ ऽ ऽ ऽऽ। ।ऽ। ऽ
अ(१)थ प्रदो(४)षे दोष(७)ज्ञ: सं(१)वेशाय(४)विशांप(७)तिम् ।

गु० तगण: यगण: गु० ल० यगण: जगण: गु०
ऽ ऽऽ। ।ऽऽ ऽ । ।ऽऽ ।ऽ। ऽ
सू(१)नु: सूनृ(४)तवाक्स्र(७)ष्टु—र्वि(१)ससर्जो(४)र्जितश्रि(७)यम् ॥

(र०वं० १।९३)

तृतीयपादे—

ल० रगण: यगण: गु० गु० भगण: जगण: गु०
। ऽ।ऽ ।ऽऽ ऽ ऽ ऽ।। ।ऽ। ऽ
अ(१)दूरव(४)र्तिनीं सि(७)द्धिं रा(१)जन्विग(४)णयात्म(७)न: ।

ल० रगण: मगण: गु० गु० जगण: जगण: गु०
। ऽ।ऽ ऽऽऽ ऽ ऽ ।ऽ। ।ऽ। ऽ
उ(१)पस्थिते(४)यं कल्या(७)णी ना(१)म्नि कीर्ति(४)त एव(७)यत् ॥

(र०वं० १।८७)

गु० मगणः यगणः गु० गु० मगणः जगणः गु०
ऽ ऽऽऽ ।ऽऽ ऽ ऽ ऽऽऽ ।ऽ। ऽ
श्ला(१)घ्यस्त्यागो(४)ऽपि वैदे(७)ह्याः प(१)त्युः प्राग्वं(४)शवासि(७)नः ।

ल० रगणः मगणः गु० गु० यगणः जगणः गु०
। ऽ।ऽ ऽऽऽ ऽ ऽ ।ऽऽ ।ऽ। ऽ
अ(१)नन्यजा(४)नेस्तस्या[१](७)सीत् सै(१)व जाया(४)हिरण्म(७)यी ॥

(र०वं० १५।६१)

[२]सकारेणा(।।ऽ)पि क्वचिद्विपुला दृश्यते । यथा—

ल० भगणः यगणः गु० ल० तगणः जगणः गु०
। ऽ।। ।ऽऽ ऽ । ऽऽ। ।ऽ। ऽ
जि(१)ते न ल(४)भते ल(७)क्ष्मीं मृ(१)तेनापि(४)सुराङ्ग(७)नाः ।

ल० यगणः सगणः गु० गु० तगणः जगणः गु०
। ।ऽऽ ।।ऽ ऽ ऽ ऽऽ। ।ऽ। ऽ
[३]क्ष(१)णविध्वं(४)सिनि का(७)ये का(१)चिन्ता म(४)रणे र(७)णे? ॥

(परा०स्मृ० ३।३८)

संकीर्णाश्च विपुलाप्रकारा दृश्यन्ते । तथा च **भामहेनोक्तम्**—

ल० मगणः नगणः गु० ल० यगणः जगणः गु०
। ऽऽऽ ।।। ऽ । ।ऽऽ ।ऽ। ऽ
क्व(१)चित्काले(४)प्रसर(७)ता क्व(१)चिदाप(४)त्य निघ्न(७)ता ।

ल० रगणः भगणः गु० ल० मगणः जगणः गु०
। ऽ।ऽ ऽ।। ऽ । ऽऽऽ ।ऽ। ऽ
शु(१)नेव सा(४)रङ्कु(७)लं त्व (१)या भिन्नं(४)द्विषां ब(७)लम् ॥

(का०लं० २।५४)

इत्यादयो विपुलाविकल्पाः संकीर्णाश्च कोटिशः[४] काव्येषु दृश्यन्ते । सर्वासां विपुलानां

---

(१) 'अनन्यजानेर्यस्यासीत्' इति लि. पुस्तके । 'अनन्यजानेः सैवासीद् यस्माज्जाया' इति मुद्रिते रघुवंशे । (२) 'यकारेण' इति लि. पुस्तके । एते **विपुला**भेदाश्छन्दः कौस्तुभादौ नोपलभ्यन्ते । (३) 'क्षणध्वंसिनि कायेऽस्मिन्' इति मूले पाठः ।

(४) 'विषमसमाङ्घ्र्योर्भेदैराविरभूवन्ननुष्टुभि श्लोकाः ।
षोडशलक्षाण्यष्टात्रिंशत्साहस्रसागरशतानि ॥' (वृ० म० को० ५।१)

चतुर्थो वर्ण: प्रायेण गुरुर्भवतीत्याम्नाय: ।।

अत: परं विषमवृत्तान्याह—

**शिवप्रसादिनी**—(५।१८) पूर्व सूत्र की निवृत्ति हो जाती है। "चपलाऽयुजो न्" (पि० सू० ५।१६) इस सूत्र से "अयुक्" की अनुवृत्ति आएगी। यहाँ पर "विपुला युग्ल: सप्तम" (पि० सू० ५।१७) सम्पूर्ण सूत्र अनुवर्त्तन करना चाहिए। छन्द के प्रथम, तृतीय पाद में चतुर्थ अक्षर से परे यगण (।ऽऽ) को बाधकर भगण (ऽ।।) रगण (ऽ।ऽ) नगण (।।।) एवं तगण (ऽऽ।) विकल्प से होते हैं। सार यह है कि जिस अनुष्टुप् छन्द के युक् पादों = द्वितीय एवं चतुर्थ पादों में सातवाँ अक्षर लघु हो, तथा अयुक्पादों में (प्रथम एवं तृतीय पादों में) चतुर्थ अक्षर के आगे में स्थित यगण (।ऽऽ) को बाधकर भगण (ऽ।।), रगण (ऽ।ऽ), नगण (।।।), अथवा तगण (ऽऽ।) उपस्थित होगा, वह छन्द "विपुला" कहलाता है ।।१९।।

## प्रतिपादं चतुर्वृद्ध्या पदचतुरूर्ध्वम्[1] ।५।२०।।

**मृतसञ्जीवनी**—चतुर्णामक्षराणां वृद्धिश्चतुर्वृद्धि:। अनुष्टुभ: पादादूर्ध्वं प्रतिपादं चतुरक्षरवृध्द्या यद्वृत्तं निष्पद्यते, तत् 'पदचतुरूर्ध्वं' नाम। तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८
त-स्या: क-टा-क्ष-वि-क्षे-पै:
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
क-म्पि-त-त-नु-कु-टि-लै-र-ति-दी-र्घै: ।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
त-क्ष-क-द-ष्ट इ-वे-न्द्रि-य-शू-न्य: क्ष-त-चै-त-न्य:
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
प-द-च-तु-रू-र्ध्वं न च-ल-ति पु-रु-ष: प-त-ति स-ह-सै-व ।।

अत्र गुरुलघुविभागो नेष्यते ।।

**शिवप्रसादिनी**—चार अक्षरों की वृद्धि को चतुर्वृद्धिशब्द से कहा जाता है। आठ अक्षरों वाले चार पाद अनुष्टुप् छन्द में होते हैं। अनुष्टुप् छन्द के पाद से ऊपर प्रत्येक पाद में चार-चार अक्षरों की वृद्धि से जो वृत्त (छन्द) उत्पन्न होता है, वह वृत्त "पदचतुरूर्ध्व" नाम से व्यवहार का विषय बनता है। अर्थात् जिस छन्द का प्रथम पाद अनुष्टुप् छन्द के आठ अक्षरों वाला हो, द्वितीय पाद में चार अक्षरों की वृद्धि होकर बारह

---

(१) 'आद्य: पादोऽष्टभिर्वर्णैस्ततोऽन्ये चतुरक्षरै: क्रमाद्वृद्धा:। पादा यस्य द्वितीयाद्या: षट्पञ्चाशद्वर्णा यत्र तदिह विबुधजनैरुक्तं **पदचतुरूर्ध्वं** नाम वृत्तम् ।।' इति छन्द:कौस्तुभे।

अक्षर हों, तृतीय पाद में चार जुड़कर सोलह अक्षरों की संख्या हो, और चतुर्थपाद में पुनः चार अक्षरों की वृद्धि से युक्त हुआ वह बीस अक्षरों से युक्त होकर उपलब्ध हो, तो ऐसा वह वृत्त ''पदचतुरूर्ध्व'' नाम से कहा जाएगा ॥२०॥

## गावन्त आपीडः[१] ।५।२१॥

**मृतसञ्जीवनी**—गकारौ (ऽऽ) द्वावन्ते चेद्भवतश्चतुर्णामपि पादानां तत् पदचतुरूर्ध्वं 'आपीड' संज्ञकं भवति। अन्ते गुरुद्वयग्रहणादत्र शेषाणां लघुत्वमभ्यनुज्ञातं सूत्रकारेणेति मन्यामहे[२]।

तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८
। । । । । । ऽ ऽ
कु-सु-मि-त-स-ह-का-रे
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
। । । । । । । । । । ऽ ऽ
ह-त-हि-म-म-हि-म-शु-चि-श-शा-ङ्के।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
। । । । । । । । । । । । । । ऽ ऽ
वि-क-सि-त-क-म-ल-स-र-सि म-धु-स-म-ये-ऽस्मिन्
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
। । । । । । । । । । । । । । । । । । ऽ ऽ
प्र-व-स-सि-प-थि-क-ह-त-क!य-दि भ-व-ति त-व-वि-प-त्तिः॥

**शिवप्रसादिनी**—दो गुरुवर्ण पादान्त में यदि उपस्थित होते हैं, तो चारपादों का वह ''पद चतुरूर्ध्व'' नाम वाला वृत्त ''आपीड'' नाम से पुकारा जाता है। पादान्त में दो गुरुओं के ग्रहण से यहाँ पर शेष अक्षरों में सूत्रकार के द्वारा लघ्वक्षर प्रतिज्ञात होता है। ऐसा यहाँ पर हम स्वीकार करते हैं। इसका तात्पर्य यह है कि पूर्व में प्रतिपादित पद ''चतुरूर्ध्व'' वृत्त के प्रत्येक पाद के अन्त में यदि दो-दो अक्षर दीर्घ सञ्ज्ञक उपलब्ध हों, तो उस ''पद चतुरूर्ध्व'' वृत्त की ''आपीड'' सञ्ज्ञा हो जाती है। सूत्रकार के द्वारा पाद के अन्त में दो वर्ण मात्र के दीर्घ विधान किये जाने से शेष समस्त अक्षरों की ह्रस्ववर्णों के रूप में उपस्थिति ही स्वीकरणीय है।'' यह बात सिद्ध होती है ॥२१॥

---

(१) '**आपीड** इदमेवान्त्यौ वर्णौ चेद्गौ' इति **छन्दःकौस्तुभे**।
(२) 'आपीडः सर्वलः प्रोक्तः पूर्वपादान्तगद्वयः' (ग०पु० पू०खं० २११।२)

## गावादौ [1]चेत्प्रत्यापीडः ।५।२२।।

**मृतसञ्जीवनी**—गकारौ (ऽऽ) द्वावादौ चेद्भवतश्चतुर्णामपि पादानां, तदा तत् पदचतुरूर्ध्वं 'प्रत्यापीड' संज्ञं भवति । अत्रापि मूर्ववच्छेषाणां लघुत्वमेव । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८
ऽ ऽ । । । । । ।
चि-त्तं म-म र-म-य-ति

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
ऽ ऽ । । । । । । । । । ।
का-न्तं व-न-मि-द-मु-प-गि-रि-न-दि ।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
ऽ ऽ । । । । । । । । । । । । । ।
कू-ज-न्म-धु-क-र-क[2]-ल-र-व-कृ-त-ज-न-धु-ति

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
ऽ ऽ । । । । । । । । । । । । । । । । । ।
पुं-स्को-कि-ल-मु-ख-रि-त-सु-र-भि-कु-सु-म-चि-त-त-रु-त-ति ॥

**शिवप्रसादिनी**—गौ = दो गकार (= दीर्घ अक्षर) यदि चारों पादों के आदौ = आदि में हो, तो वह ''पदचतुरूर्ध्व'' नामक वृत्त ''प्रत्यापीड'' नाम वाला सिद्ध होता है । यहाँ पर भी शेष अक्षर लघु ही रहेंगें ॥२२॥

## [3]प्रत्यापीडो गावादौ च ।५।२३।।

**मृतसञ्जीवनी**—चकारोऽन्त इति समुच्चयार्थः । तस्यैव पदचतुरूर्ध्वस्यान्ते आदौ च यदि गकारौ (ऽऽ) भवतस्तदापि 'प्रत्यापीड' एव भवति । तत्रोदाहरणम्—

---

(१) अयं भेदश्छन्दःकौस्तुभवृत्तरत्नाकरादिषु नोपलभ्यते । मन्दारमरन्दे त्वस्ति ।

(२) 'कुलकलरवकृतयति' इति लि. पुस्तके ।

(३) अयं भेदश्छन्दः कौस्तुभ-वृत्तरत्नाकरादिषु नोपलभ्यते, **नाग्नेये** (३३२) ऽस्य सूत्रस्यानुवादो दृश्यते, न च वृत्तिकृदुक्तार्थसूचनार्थमेतावद्गुरुसूत्रकरणापेक्षास्ति, नापि नाम्नः पुनरुपादाने प्रयोजनमस्तीति पूर्वसूत्रस्यैव पाठान्तरमिदं लेखकप्रमादान्मूले प्रविष्टं वृत्तिकृता 'स्थितस्य गतिश्चिन्तनीये'ति न्यायमनुसृत्य व्याख्यातमिति सम्भाव्यते । 'अत्यापीड' इति पाठः कैश्चिदूह्यते । वैदिकैस्तु यथावस्थितमधीयत एवेत्यत्र तत्त्वे सुधिय एव प्रमाणम् ।

१ २ ३ ४ ५ ६ ७ ८

ऽ ऽ । । । । । ।

का-न्ता-व-द-न-स-रो-जं

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२

ऽ ऽ । । । । । । । । ऽ ऽ

हृ-द्यं घ-न-सु-र-भि-म-धु-र-सा-ढ्यम् ।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६

ऽ ऽ । । । । । । । । । । । । ऽ ऽ

पा-तुं र-ह-सि स-त-त-म-भि-ल-ष-ति म–नो मे

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०

ऽ ऽ । । । । । । । । । । । । । । । । ऽ ऽ

किं-चि-न्मु-कु-लि-त-न-य-न-म-वि–र-त-म-णि-त-र-म-णी-यम् ॥

तदेवं द्विप्रकारः प्रत्यापीडो भवति ॥

**शिवप्रसादिनी**—यहाँ पर ''च'' शब्द ''अन्त'' (५।२१) का परामर्शक (बोधक) है। उपर्युक्त ''पदचतुरूर्ध्व'' के प्रत्येक पादों के आदि-आदि में होने वाले दो अक्षर तथा प्रतिपादों के अन्तिम-अन्तिम दो अक्षर यदि दीर्घ रूप में उपलब्ध हों, तब भी वह वृत्त ''प्रत्यापीड'' नाम से ही अभिहित होगा ॥२३॥

**प्रथमस्य विपर्यासे [1]मञ्जरीलवल्यमृतधाराः ।५।२४।।**

**मृतसञ्जीवनी**—आपीडग्रहणं निवृत्तम्। तेनैव समं लघ्वक्षराभ्यनुज्ञानं च। तदेव पदचतुरूर्ध्वं प्रथमस्य विपर्यासे मञ्जरी-लवली-अमृतधाराभिधानं भवति। प्रथमस्य पादस्य द्वितीयेन विपर्यासे 'मञ्जरी'। प्रथमस्य तृतीयेन विपर्यासे 'लवली'। प्रथमस्य चतुर्थेन विपर्यासे 'अमृतधारा'[2] ॥

तत्र मञ्जर्युदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२

ज-न-य-ति म-ह-तीं प्री–तिं हृ–द-ये

---

(१) **'कलिका'** इति नामान्तरं गारुड-छन्दःकौस्तुभ-वृत्तरत्नाकरादौ। **'मण्डरी'**त्यपि **कृष्णीये**। 'अथादिना। क्रमात्पादेन चेत्पादा द्वितीयाद्यास्त्रयस्तदा। **कलिका लवली** प्रोक्ताऽ**मृतधारा** च सूरिभिः ॥' इति **छन्दःकौस्तुभे**।

(२) 'आपीडस्यादिमस्तुर्यस्तुरीयश्चेत्तृतीयकः। तृतीयोऽपि द्वितीयोऽङ्घ्रिर्द्वितीयः प्रथमो यदि। उक्ता **साऽमृतधारेति मञ्जरीत्यपि कैश्चन** ॥' इति **मं० म०**।

१ २ ३ ४ ५ ६ ७ ८
का-मि-नां चू-त-म-ञ्ज-री।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
मि-ल-द-लि-च-क्र-च-ञ्चु-प-रि-चु-म्बि-त-के-स-रा
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
को-म-ल-म-ल-य-वा-त-प-रि-न-र्ति-त-त-रु-शि-र-सि स्थि-ता॥

लवल्युदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
वि-र-ह-वि-धु-र-हू-ण-का-ङ्ग-ना-क-पो-लो-प-मं
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
[१]प-रि-ण-ति-ध-रं पी-त-पा-ण्डु-च्छ-वि।
१ २ ३ ४ ५ ६ ७ ८
ल-व-ली-फ-लं नि-दा-घे
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
[२]भ-व-ति ज-ग-ति हि-म-क-र-शी-त-ल-म-ति-स्वा-दू-ष्ण-ह-रम्॥

अमृतधारोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
य-दि वा-ञ्छ-सि क-र्ण-र-सा-य-नं स-त-त-म-मृ-त-धा-रा-भि;
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
य-दि हृ-दि वा प-र-मा-न-न्द-र-सम्।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
चे-तः! शृ-णु ध-र-णी-ध-र-वा-णी-म-मृ-त-म-यीं
१ २ ३ ४ ५ ६ ७ ८
त-त्का-व्य-गु-ण-भू-ष-णम्॥

केचिदापीडादिष्वपि पादविपर्यासे सति मञ्जर्यादिनामानीच्छन्ति॥

**इति पदचतुरूर्ध्वाधिकारः।**

**शिवप्रसादिनी**—प्रकृत सूत्र में पूर्व सूत्र से अनुवृत्ति लभ्य ''आपीड'' की निवृत्ति हो जाती है। यदि ''पदचतुरूर्ध्व'' वृत्त में द्वितीयाऽऽदिपादों के सहित प्रथमपाद विपर्यास को प्राप्त होता है, तो वह क्रम से मञ्जरी, लवली, एवम् अमृतधारा के नाम से जानी

(१) 'कपोलावदातपरिणति आपीतपाण्डुच्छवि' इति लि. पुस्तके।
(२) 'जयति हिमशीतलं खण्डवत्स्वादु तृष्णाहरं सुन्दरम्' इति लि. पुस्तके।

जाती है। इसका तात्पर्य यह है कि पदचतुरूर्ध्ववृत्त के प्रथम पाद के स्थान में यदि द्वितीय पाद अवस्थित होता है, तथा द्वितीय पाद के स्थान में प्रथम पाद आ जाता है, तो उस पदचतुरूर्ध्व वृत्त की "मञ्जरी" सञ्ज्ञा होती है। एवम् आदि पाद के स्थान में तृतीय पाद तथा तृतीय पाद के स्थान में प्रथम पाद की यदि प्रविष्टि होती है, तो वह वृत्त "लवली" सञ्ज्ञा को धारण करता है। इसी प्रकार चतुर्थ पाद के स्थान में प्रथम पाद तथा प्रथम पाद के स्थान में चतुर्थ पाद आरोहण करे, तो वह वृत्त "अमृत धारा" नाम से कही जाती है।

छन्दशास्त्र के कुछ तत्त्ववेत्तागण पदचतुरूर्ध्ववृत्त के भेद विशेष "आपीड, प्रत्यापीड" में भी उपर्युक्त प्रकार से पादविन्यास की स्थिति में मञ्जरी आदि सञ्ज्ञाएँ प्राप्त होती हैं, ऐसा कहते हैं ॥२४॥

**[१]उद्गतामेकतः स्जौ स्लौ, न्सौ ज्गौ, भ्नौ ज्लौ ग्, स्जौ स्जौ ग् ।५।२५।।**

**मृतसञ्जीवनी**—'पाद-' (पि०सू० ५।९) इति प्रकृतमनुवर्तते। यत्र प्रथमे पादे सकार (।।ऽ) जकार(।ऽ।) सकार(।।ऽ)ल(।)कारैर्दशाक्षराणि भवन्ति, द्वितीये पादे नकार-(।।।)सकार(।।ऽ)जकार(।ऽ।)ग(ऽ) कारैर्दशैव, तृतीये पादे भकार(ऽ।।) नकार(।।।)-जकार(।ऽ।)लकार(।)ग(ऽ)कारैरेकादशैव, चतुर्थे पादे सकार(।।ऽ)जकार(।ऽ।)सकार-(।।ऽ)जकार(।ऽ।)ग(ऽ)कारैस्त्रयोदश तद्वृत्तम् 'उद्गता' नाम। तत्रोदाहरणम्—

सगणः जगणः सगणः ल०
। । ऽ । ऽ । । । ऽ ।
मृ–ग–लो–च–ना श–शि–मु–खी च
(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)

नगणः सगणः जगणः गु०
। । । । । ऽ । ऽ । ऽ
रु-चि-र-द–श-ना नि–त–म्बि-नी।
(१)(२)(३)(४)(५)(६) (७)(८)(९)(१०)

---

(१) 'प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरे।
यद्यथ भनजलगाः स्युरथो सजसा जगौ प्रभवतीयमुद्गता ॥',
'प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरे।
यद्यथ च भनभगाः स्युरथो सजसा जगौ भवतीयमुद्गता ॥' इति प्रा० पि० सू० २।३२४, ३२२ एवं च प्राकृतपिङ्गले लक्षणद्वयमुक्तमुद्गतायाः।

भगण: नगण: जगण: ल० गु०
ऽ । । । । । । ऽ । । ऽ
हं–स–ल—लि–त–ग—म–ना ल—ल– ना
(१)(२)(३) (४)(५)(६) (७)(८)(९) (१०)(११)

सगण: जगण: सगण: जगण: गु०
। । ऽ । ऽ । । । ऽ । ऽ । ऽ
प–रि–णी—य–ते य—दि भ–वे—त्कु–लो–द्ग—ता ॥
(१)(२)(३) (४)(५)(६) (७)(८)(९) (१०)(११)(१२)(१३)

यत्र सूत्रे गकारो(ऽ) लकारो(।) वा श्रूयते, तत्र तेनैव वृत्तस्य पाद: परिसमाप्यते। 'उद्गताम्' इति कर्मविभक्तिश्रवणात् पठेदित्यध्याहार्यम्। 'एकत:' इति प्रथमं पादं द्वितीयेन सहाविलम्बेन पठेदित्यर्थ:। 'उपस्थितप्रचुपितं पृथगाद्यम्' (पि०सू० ५।२८) इत्यत: सिंहावलोकितन्यायेन 'आद्य' ग्रहणमनुवर्तनीयम्। तेनाद्यमेव पादमेकत: पठेत्[१]। 'एकत:' इति ल्यब्लोपे पञ्चमी ॥

**शिवप्रसादिनी**—इस सूत्र में (पि०सू० ५।९) से "पाद" की अनुवृत्ति आती है। जिस छन्द के प्रथम पाद में, क्रमिक रूप से सगण (।।ऽ) जगण (।ऽ।) सगण (।।ऽ) और एक ह्रस्वअक्षर कुछ मिलकर दशअक्षर हों, द्वितीय पाद में नगण (।।।) सगण (।।ऽ) जगण (।ऽ।) तथा एक दीर्घ वर्णों को लेकर कुल दशअक्षर हों, तृतीय पाद में भगण (ऽ।।) नगण (।।।) जगण (।ऽ।) एक ह्रस्व, तथा एक गुरु (दीर्घ) अक्षरों को मिलाकर कुल (११) ग्यारह अक्षर हों, और चतुर्थपाद में पुन: सगण (।।ऽ) जगण (।ऽ।) सगण (।।ऽ) जगण (।ऽ।) के साथ-साथ एक दीर्घ तथा एक ह्रस्ववर्ण को मिलाकर कुल तेरह (१३) अक्षर हों, चारों पाद वाले उस वृत्त को "उद्गता" नाम से कहा जाता है। सूत्र में "एकत्र:" पद का तात्पर्य यह है कि प्रथम पाद को द्वितीय "उपस्थित प्रचुपितं पृथगाद्यम्" (पि०सू० ५।२८) इस सूत्र से (सिंहाऽऽवलोकन न्याय से "आद्य" शब्द का अनुकर्षण किया जाना चाहिए, जिससे अविलम्बोच्चारण के विषय में यह तत्त्वस्फुट होता है कि प्रथमपाद का ही द्वितीय पाद के साथ अविलम्ब उच्चारण किया जाना चाहिए। द्वितीय पाद एवं तृतीय पाद तो सन्धि और समास के कारण अविलम्बोच्चारण का विषय बनता है। अत: वहाँ के लिए यह नियम नहीं है ॥२५॥

---

(१) 'एकत: पठे'दिति—अर्धद्वयमप्येकीकृत्य एकत उच्चारयेत्। द्वितीयपादस्तृतीयपादश्च सन्धिसमासवशादेकीभवतीत्यर्थ:। उक्तं च **जयदेवेन**—तरसोदिता सजसलेष्वि'त्यादि। तत्र च तरसोदिता वेगेनोच्चारिता—अर्धान्ते विराममन्तरेणार्धद्वयमेकीकृत्यपठितेत्यर्थ:—इति **वृत्तरत्नाकरपञ्चिका** (५।६)।

## तृतीयस्य सौरभकं[1] र्नौ भ्गौ ।५।२६ ।

**मृतसञ्जीवनी**—'तृतीयस्य' इति ग्रहणात्तस्या उद्गताया एवान्ये त्रयः पादा गृह्यन्ते । तृतीयपादे तु विशेषः । तृतीये पादे रेफ (ऽ।ऽ)नकार(।।।)भकार(ऽ।।)ग(ऽ)कारैर्दशाक्षराणि भवन्ति तत 'सौरभकं' नाम । तत्रोदाहरणम्—

सगणः जगणः सगणः ल० नगणः सगणः जगणः गु०

। । ऽ । ऽ । । । ऽ । । । । । । ऽ । ऽ । ऽ

वि-नि-वा-रि-तोऽपि न-य-ने-न त-द-पि कि-मि-हा-ग-तो भ-वान्? ।

(१) (२) (३)(४) (५) (६)(७)(८)(९)(१०) (१)(२)(३) (४) (५)(६) (७)(८) (९) (१०)

रगणः नगणः भगणः गु० सगणः जगणः सगण जगणः गु०

ऽ । ऽ । । । ऽ । । ऽ । । ऽ । ऽ । । । ऽ । ऽ । ऽ

ए-त-दे-व त-व सौ-र-भ-कं य-दु-दी-रि-ता-र्थ-म-पि ना-व- बु-ध्य-ते ॥

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०) (१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)

**शिवप्रसादिनी**—जिस उद्गताछन्द के तृतीयपाद में क्रमशः रगण (ऽ।ऽ) नगण (।।।) भगण (ऽ।।) और एक गुरु वर्ण को मिलाकर कुल दश अक्षर होते हों, तथा शेष बचे प्रथम-द्वितीय एवं चतुर्थ पादों में पुनः १०-१० और १३ अक्षर हों, अर्थात् तृतीय पाद के अतिरिक्त पाद पुनः उद्गता वृत्त के लक्षणों से युक्त हों, तो वह उद्गातावृत्त ''सौरभक'' नाम को धारण करता है ॥२६॥

## [2]ललितं नौ सौ ।५।२७।।

**मृतसञ्जीवनी**—तस्या एव उद्गतायास्तृतीयपादस्थाने यदा नौ(।।।.।।।)सौ(।।ऽ.।।ऽ) भवतस्तदा 'ललितं' नाम वृत्तम् । तत्रोदाहरणम्—

सगणः जगणः सगणः ल०

। । ऽ । ऽ । । । ऽ ।

स–त–तं प्रि–यं–व–द–मु–दा—र

(१)(२)(३) (४)(५)(६)(७)(८)(९)(१०)

---

(१) 'त्रयमुद्गतासदृशमेव पदमिह तृतीयमन्यथा। जायते रनभगैर्ग्रथितं कथयन्ति **सौरभक**मेतदीदृशम् ॥' इति प्रा०पि०सू० २।३२७। 'अन्ये **सौरलक**मूचिरे ।' इति **कृष्णीये** ।

(२) 'नयुगं सकारयुगलं च भवति चरणे तृतीयके। तदुदितमुरुमतिभिर्**ललितं** यदि शेषमस्य सकलं अधोद्गता ॥' इति प्रा०पि०सू० २।३२९ ।

**शिवप्रसादिनी**—उसी उद्‌गता वृत्त के तृतीय पाद के स्थान में जब दो नगण (।।। ।।।) दो सगण (।।ऽ-।।ऽ) होते हों, अर्थात् जब उद्‌गता वृत्त के तृतीय पाद में क्रमशः दो नगण और दो सगण मिलकर बारह अक्षर हों, और शेष तीनों पादों में पुनः १०-१० तथा १३, अक्षरों की संख्या हो, या शेष तीनों पाद उद्‌गता वृत्त के लक्षणों से युक्त हों, तो उस उद्‌गता को "ललित" वृत्त कहते हैं ।।२७।।

**[२]उपस्थितप्रचुपितं पृथगाद्यं म्सौ ज्भौ गौ, स्नौ ज्रौ ग्, नौ स्, नौ न् ज्यौ ।५।२८।।**

**मृतसञ्जीवनी**—यत्र प्रथमे पादे मकार(ऽऽऽ) सकार(।।ऽ)जकार(।ऽ।)भकारा(ऽ।।) गकारौ(ऽऽ) च भवतः, द्वितीये पादे सकार(।।ऽ)नकार(।।।)जकार (।ऽ।)रेफा(ऽ।ऽ)गकार (ऽ)श्च, तृतीये नकारौ(।।।.।।।) सकार(।।ऽ)श्च, चतुर्थे त्रयो नकारा (।।।.।।।.।।।) जकार(।ऽ।) यकारौ (।ऽऽ) च, तत् 'उपस्थितप्रचुपितं' नाम वृत्तं भवति । तत्रोदाहरणम्—

मगणः सगणः जगणः भगणः गु० गु०

ऽ ऽ ऽ । । ऽ । ऽ । ऽ । । ऽ ऽ

रा-मा का—म-क-रे—णु-का मृ—गा- य- त—ने—त्रा

(१)(२)(३) (४)(५)(६) (७)(८)(९) (१०)(११)(१२)(१३)(१४)

---

(१) 'गुणोन्नतं' इति लि. पुस्तके । (२) 'म्सौ ज्भौ गौ प्रथमाङ्घ्रिरीक्ष्यते खलु यस्मिंस्त्रितयं सनजरगास्तथा ननौ सः । अथ नननयुजतयं **प्रचुपित**मिदमुदित**मुपस्थित**पूर्वम् ॥' इति छन्दःकौस्तुभे । **कृष्णीये** तूद्गतायाः सरलाख्योऽन्योऽपि भेद उपलभ्यते—'उद्गतायाश्चतुर्थोऽङ्घ्रिर्ननन्गैः सरलं मतम् ।' इति । 'उपस्थितप्रकुपित'मिति—**कृष्णीये** ।

'पृथगाद्यम्' इति उद्गतामेकतः पठेत्' (पि०सू० ५।२५) इत्यनुवृत्तिनिरासार्थम्[१] । अत्र तृतीयपादव्यवस्था [२]सकारस्य विभज्य पाठलिङ्गात् ।।

**शिवप्रसादिनी**—जिस वृत्त के प्रथम पाद में क्रमिक रूप से मगण (ऽऽऽ) सगण (।।ऽ) जगण (।ऽ।) भगण (ऽ।।) तथा दो गुरु अक्षरों से युक्त कुल चौदह (१४) अक्षर हों, द्वितीय पाद में सगण (।।ऽ) नगण (।।।) जगण (।ऽ।) रगण (ऽ।ऽ) और एक दीर्घ अक्षर, अक्षरों से मिलकर कुल १३ (तेरह) अक्षर हों, तृतीयपाद में दो नगण (।।।-।।।) एवम् एक सगण (।।ऽ) मिलकर नौ (९) अक्षर हों, तथा चतुर्थ पाद में जाकर तीन नगण (।।।-।।।-।।।) एक जगण (।ऽ।) यगण (।ऽऽ) कुल मिलाकर पन्द्रह (१५) अक्षर हों, वह वृत्त पुनः ''उपस्थित प्रचुपित'' नाम से कहा जाता है । इस सूत्र में ''पृथगाद्यम्'' इस अंश को दिये जाने से, (उद्गतामेकतः पठेत् (पि०सू० ५।२५) इस सूत्र से अधिकार रूप से आने वाले ''एकतः'' शब्द की निवृत्ति प्रकृत सूत्र में समझना चाहिए । अर्थात् इस उपस्थित प्रचुपित ''छन्द'' में, उद्गता छन्द के समान प्रथम पाद को द्वितीय पाद के साथ अविलम्ब उच्चारण नहीं करना चाहिए ।।२८।।

## [३]वर्द्धमानं नौ स्नौ न्सौ ।५।२९।।

**मृतसञ्जीवनी**—'तृतीयस्य' (पि०सू० ५।२६) इत्यनुवर्तते । तस्मिन्नपस्थितप्रचुपिते

(१) 'शङ्कानिरासार्थम्' इति लि. पुस्तके ।
(२) 'स्नौ' इति सूत्रस्थपाठदेहे नकारात्सकारं दूरीकृत्येत्यर्थः ।
(३) 'वर्धमानं तृतीये नौ–' इत्येव वैदिकपाठः । '**वर्द्धमानं** तृतीयश्चेन्ननसैर्ननसैरिह' इति छन्दःकौस्तुभे ।

तृतीयस्य पादस्य स्थाने यदा [१]नकारौ (।।।.।।।) सकार(।।ऽ)नकारौ(।।।) पुनर्नकार(।।।) सकारौ(ऽ।।)च भवतस्तदा 'वर्द्धमानं' नाम वृत्तं भवति । तत्रोदाहरणम्—

**शिवप्रसादिनी**—प्रकृत सूत्र में तृतीयस्य (पि० सू० ५।२६) की अनुवृत्ति होती है। तदनुसार जिस उपस्थित प्रचुपित वृत्त के तृतीय पाद के स्थान में जब दो नगण (।।।-।।।) एक सगण (।।ऽ) दो नकार (।।।-।।।) और एक सकार (ऽ।।) सब मिलकर अठारह १८ अक्षर होने की स्थिति प्रकट हो, एवम् शेष प्रथम, द्वितीय तथा चतुर्थ पाद में उपस्थित प्रचुपित छन्द के लक्षण विद्यमान हो, तो वह वृत्त "वर्द्धमान" नाम से व्यक्त होता है ।।२९।।

## [२]शुद्धविराडृषभं तज्राः ।५।३०।।

**मृतसञ्जीवनी**—तस्मिन्नेव उपस्थितप्रचुपिते यदा तृतीयस्य पादस्य स्थाने तकार (ऽऽ।) जकार(।ऽ।)रेफा(ऽ।ऽ) भवन्ति, तदा 'शुद्धविराडृषभं' नाम वृत्तं भवति । तत्रो-दाहरणम्—

---

(१) लिखितपुस्तके सर्वत्रापि जगणौ सगणनगणौ' इत्यादि ।

(२) 'तजरैस्तु **शुद्धविराजर्षभम्**' इति छन्दःकौस्तुभे ।

मगणः　　सगणः　　जगणः　　भगणः　　गु०　गु०

ऽ ऽ ऽ | । । ऽ | । ऽ । | ऽ । । | ऽ | ऽ

क-न्यो-यं क-न-को-ज्ज्व-ला म-नो-ह- र—दी-प्तिः

(१)(२)(३)(४)(५)(६) (७) (८)(९)(१०)(११)(१२)(१३)(१४)

सगणः　　नगणः　　जगण　　रगणः　　गु०

। । ऽ | । । । | । ऽ । | ऽ । ऽ | ऽ

श-शि-नि—र्म-ल-व—द-ना वि—शा-ल- ने- त्रा ।

(१)(२) (३) (४)(५)(६) (७)(८)(९) (१०)(११)(१२)(१३)

तगणः　　जगणः　　रगणः

ऽ ऽ । | । ऽ । | ऽ । ऽ

पी-नो-रु—नि-त-म्ब—शा-लि-नी

(१)(२)(३) (४)(५)(६) (७) (८)(९)

नगणः　　नगणः　　नगणः　　जगणः　　यगणः

। । । | । । । | । । । | । ऽ । | । ऽ ऽ

सु-ख-य—ति हृ-द—य-म-ति—श-यं त—रु- णा-नाम् ।।

(१)(२)(३) (४)(५)(६) (७)(८)(९) (१०)(११)(१२) (१३)(१४)(१५)

उपस्थितप्रचुपितादीनामस्मिन्प्रवेशयितुं न शक्यन्ते संज्ञाः, इति नोक्ताः ।।

**शिवप्रसादिनी**—उसी उपस्थित प्रचुपित छन्द में जब तृतीय पाद के स्थान में तगण (ऽऽ।) जगण (।ऽ।) रगण (ऽ।ऽ) नौ (९) अक्षर व्यक्त हों, और शेष पाद त्रय में ''उपस्थितप्रचुपित'' छन्द के लक्षण लक्षित हों, तब उस छन्द की ''शुद्धविराट्ऋषभ'' सञ्ज्ञा होती है ।।३०।।

## अर्द्धे ।५।३१।।

**मृतसञ्जीवनी**—पूर्वमुच्चावचानि छन्दांस्युक्तानि । इदानीं नियमेनोच्यन्ते । 'अर्द्धे' इत्यधिकारोऽयमाध्यायपरिसमाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यामः, अर्द्ध एव तद्वेदितव्यम् ।।

**शिवप्रसादिनी**—यह अधिकार सूत्र है । इस पाँचवें अध्याय की समाप्ति पर्यन्त ''अर्द्धे'' यह सूत्र अधिकृत होगा, अर्थात् यहाँ से लेकर पाचवें अध्याय की समाप्ति पर्यन्त जितने छन्द विधायक सूत्र कहे जाएगें, उन सभी सूत्रों में ''अर्द्धे'' शब्द की अनुवृत्ति होगी, जिससे आने वाले लक्षण अर्द्धछन्द के ही होगें ।।३१।।

## [१]उपचित्रकं सौ स्लौ ग्, भौ भ्गौ ग् ।५।३२।।

---

(१) 'विषमे यदि सौ सलगा दले भौ युजि भाद्गुरुकावुपचित्रम्' इति प्रा०पि०सू० २।३११ ।

**मृतसञ्जीवनी**—यस्य प्रथमे पादे सकारास्त्रय: (।।ऽ.।।ऽ.।।ऽ), लकार(।) गकारौ-(ऽ) च क्रमेण, द्वितीये भकारास्त्रयो (ऽ।।.ऽ।।.ऽ।।) गकारौ(ऽऽ) च भवत:, तत् 'उपचित्रकं' नाम वृत्तम् । अर्द्धशब्दस्य समप्रविभागवचनत्वाद्वितीयमप्यर्द्ध तादृशमेव । तत्रोदाहरणम्—

सगण: सगण: सगण: गु० गु०
। । ऽ । । ऽ । । ऽ ऽ ऽ
उ–प–चि—त्र–क–म—त्र वि–रा—ज– ते
(१)(२)(३) (४)(५)(६) (७)(८)(९) (१०)(११)

भगण: भगण: भगण: गु० गु०
ऽ । । ऽ । । ऽ । । ऽ ऽ
चू–त–व—नं कु–सु—मै–र्वि–क– स– द्भि: ।
(१)(२)(३) (४)(५)(६) (७)(८)(९) (१०)(११)

सगण: सगण: सगण: गु० गु०
। । ऽ । । ऽ । । ऽ ऽ ऽ
प– र– पु– ष्ट–वि–घु–ष्ट– म– नो– ह– रं
(१)(२)(३) (४)(५)(६) (७)(८)(९) (१०)(११)

भगण: भगण: भगण: गु० गु०
ऽ । । ऽ । । ऽ । । ऽ ऽ
म–न्म–थ–के–लि–नि–के–त– न– मे–तत् ।।
(१)(२)(३)(४)(५) (६) (७)(८)(९) (१०)(११)

**शिवप्रसादिनी**—जिस वृत्त के प्रथम पाद में तीन सगण (।।ऽ-।।ऽ-।।ऽ) एक लघु अक्षर (।) एक गुरु अक्षर क्रम से मिलकर कुल (११) अक्षर हों, द्वितीय पाद में लगातार तीन भगण (ऽ।।-ऽ।।-ऽ।।) दो गुरु अक्षर (ऽऽ) मिलकर (११) ग्यारह अक्षर हों, एवं तुल्य प्रविभागवाची अर्द्धशब्द के प्रयोग द्वारा प्रथमाऽर्द्ध के समान ही द्वितीयाऽर्द्ध की भी अक्षर संख्या हो, अर्थात् तृतीय पाद प्रथमपाद के लक्षण से युक्त हो, और चतुर्थ पाद द्वितीय पाद के लक्षण से युक्त हो, तो वह छन्द "उपचित्रक" नाम वाला होता है ।।३२।।

## [१]द्रुतमध्या भौ भ्गौ ग्, न्जौ ज्यौ ।५।३३।।

**मृतसञ्जीवनी**—यस्य प्रथमे पादे त्रयो भकारा (ऽ।।.ऽ।।.ऽ।।) गकारौ (ऽ.ऽ) च, द्वितीये नकार (।।।) जकारौ(।ऽ।) जकार(।ऽ।)यकारौ (।ऽऽ) च, तद् 'द्रुतमध्या' नाम वृत्तम् । अत्रापि प्रथमद्वितीयाविव तृतीयचतुर्थौ पादौ । तत्रोदाहरणम्—

---

(१) 'भत्रयमोजगतं गुरुकौ चेत् युजि च नजौ ज्ययुतौ **द्रुतमध्या**' इति छन्द: कौस्तुभे ।

भगणः भगणः भगणः गु० गु०

ऽ । । ऽ । । ऽ । । ऽ ऽ

य-द्य-पि शी-घ्र-ग-ति-र्मृ-दु-गा-मी

(१)(२)(३)(४) (५)(६)(७)(८)(९)(१०)(११)

नगणः जगणः जगणः यगणः

। । । । ऽ । । ऽ । । ऽ ऽ

ब-हु-ध-न-वा-न-पि दु:-ख-मु- पै- ति।

(१)(२)(३)(४)(५)(६)(७)(८) (९)(१०)(११)(१२)

भगणः भगणः भगणः गु० गु०

ऽ । । ऽ । । ऽ । । ऽ ऽ

ना-ति-श-य-त्व-रि-ता न च मृ- द्वी

(१)(२)(३) (४)(५)(६)(७)(८)(९) (१०)(११)

नगणः जगणः जगणः यगणः

। । । । ऽ । । ऽ । । ऽ ऽ

नृ-प-ति-ग-तिः क-थि-ता द्रु- त-म-ध्या ॥

(१)(२)(३) (४)(५) (६)(७) (८)(९)(१०)(११)(१२)

**शिवप्रसादिनी**—जिसके प्रथम पाद में तीन भकार (ऽ।।-ऽ।।-ऽ।।) दो गुरु (ऽऽ) को मिलाकर ग्यारह (११) अक्षर हों, द्वितीय पाद में नगण (।।।) दो जगण (।ऽ।-।ऽ।) यगण (।ऽऽ) इन सबको मिलाकर बारह अक्षर हों, तथा तृतीय पाद प्रथम पाद के लक्षण से युक्त हो और चतुर्थ पाद पुनः द्वितीय पाद के लक्षण से लक्षित हो, तो ऐसे वृत्त को "द्रुतमध्या" वृत्त के नाम से कहा जाता है ॥३३॥

## [1]वेगवती सौ स्गौ, भौ भ्गौ ग् ।५।३४॥

**मृतसञ्जीवनी**—यस्य प्रथमे पादे त्रयः सकारा (।।ऽ.।।ऽ.।।ऽ) गकार(ऽ)श्चैकः, द्वितीये भकारास्त्रयो (ऽ।।.ऽ।।.ऽ।।) गकारौ(ऽऽ) च भवतः, तत् 'वेगवती' नाम वृत्तम्। तत्रोदाहरणम्—

सगणः सगणः सगणः गु०

। । ऽ । । ऽ । । ऽ ऽ

त-व मु-ञ्च न-रा-धि-प! से-नां

(१)(२)(३)(४)(५)(६) (७)(८) (९)(१०)

---

(१) 'विषमे प्रथमाक्षरहीनं दोधकवृत्तमेव **वेगवती** स्यात्' इति प्रा०पि०सू० २।३१३।

भगणः भगणः भगणः गु० गु०

ऽ । । ऽ । । ऽ । । ऽ ऽ

वे-ग-व-तीं स-ह-ते स-म- रे- षु ।

(१)(२)(३) (४)(५)(६)(७)(८)(९)(१०)(११)

सगणः सगणः सगणः गु०

। । ऽ । । ऽ । । ऽ ऽ

प्र-ल-यो-र्मि-मि-वा-भि-मु-खीं तां

(१)(२)(३) (४)(५)(६) (७)(८)(९) (१०)

भगणः भगणः भगणः गु० गु०

ऽ । । ऽ । । ऽ । । ऽ ऽ

कः स-क-ल-क्षि-ति-भृ-न्नि-व- हे- षु? ॥

(१)(२)(३) (४)(५) (६) (७)(८)(९)(१०)(११)

**शिवप्रसादिनी**—जिस छन्द के प्रथम पाद में तीन सगण (।।ऽ-।।ऽ-।।ऽ) एक गुरु (ऽ) कुल दश अक्षर (१०) हों, द्वितीयपाद में तीन भगण (ऽ।।-ऽ।।-ऽ।।) और दो गुरु (ऽऽ) को मिलाकर (११) ग्यारह अक्षर हों, तथा तृतीयपाद प्रथम पाद के तुल्य एवं चतुर्थ पाद द्वितीयपाद के लक्षण से युक्त हो, तो वह छन्द या वृत्त "वेगवती" सञ्ज्ञा को धारण करता है ॥३४॥

## [१]भद्रविराट् त्जौ गौं, म्सौ ज्गौ ग् ।५।३५।।

**मृतसञ्जीवनी**—यस्य प्रथमे पादे तकार (ऽऽ।) जकारौ (।ऽ।)रेफ(ऽ।ऽ)गकारौ(ऽ) च, द्वितीये मकार(ऽऽऽ) सकार (।।ऽ) जकारा (।ऽ।) गकारौ (ऽऽ) च, तद् वृत्तं 'भद्रविराट्' नाम । तत्रोदाहरणम्—

तगणः जगणः रगणः गु०

ऽ ऽ । । ऽ । ऽ । ऽ ऽ

य-त्पा-द-त-ले च-का-स्ति च-क्रं

(१)(२)(३)(४)(५)(६)(७) (८)(९)(१०)

मगणः सगणः जगणः गु० गु०

ऽ ऽ ऽ । । ऽ । ऽ । ऽ ऽ

ह-स्ते वा कु-लि-शं स-रो-रु- हं वा ।

(१)(२)(३) (४)(५) (६)(७)(८)(९)(१०)(११)

---

(१) 'ओजे तपरौ जरौ गुरुश्चेत् म्सौ ज्गौ ग् **भद्रविराड् भवेदनोजे**' इति छन्दः कौस्तुभे ।

तगणः जगणः रगणः गु०

ऽ ऽ । । ऽ । ऽ । ऽ ऽ

रा-जा ज-ग-दे-क-च-क्र-व-र्ती

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)

मगणः सगणः जगणः गु० गु०

ऽ ऽ ऽ । । ऽ । ऽ । ऽ ऽ

स्या-च्छं भ-द्र-वि-राट् स-म-श्नु-ते ऽसौ ॥

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

अस्यौपच्छन्दसिकान्तः पातित्वेऽपि विशेषसंज्ञार्थमर्द्धसमाधिकारे पाठः[१] ॥

**शिवप्रसादिनी**—जिस वृत्त के प्रथम पाद में तगण (ऽऽ।) जगण (।ऽ।) रगण (ऽ।ऽ) और एक गुरु मिलकर (१०) दश अक्षर हों, द्वितीय पाद में मगण (ऽऽऽ) सगण (।।ऽ) जगण (।ऽ।) तथा दो गुरु अक्षर विद्यमान हो। इसके अतिरिक्त तृतीयपाद प्रथम पाद के लक्षण से लक्षित हो और चतुर्थ पाद द्वितीयपाद के लक्षण वाला हो, वह वृत्त ''भद्रविराट'' कहलाता है ॥३५॥

## [२]केतुमती स्जौ स्गौ, भरौ न्गौ ग् ।५।३६॥

**मृतसञ्जीवनी**—यस्य प्रथमे पादे सकार (।।ऽ) जकारौ (।ऽ।) सकार (।।ऽ) गकारौ (ऽ) च, द्वितीये भकार (ऽ।।) रेभ (ऽ।ऽ) नकारा (।।।) गकारौ (ऽऽ) च, तत् 'केतुमती' नाम वृत्तं भवति। तत्रोदाहरणम्—

सगणः जगणः सगणः गु०

। । ऽ । ऽ । । । ऽ ऽ

ह-त-भू-रि-भू-मि-प-ति-चि-ह्नां

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)

भगणः रगणः नगणः गु० गु०

ऽ । । ऽ । ऽ । । । ऽ ऽ

यु-द्ध-स-ह-स्र-ल-ब्ध-ज-य-ल-क्ष्मीम्।

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

---

(१) अत्र केषाञ्चिद्भद्रविराडादीनामौपच्छन्दसिकादिभ्यो वैतालीयभेदेभ्योऽभेदेऽपि गणनियमानियमरूपोपाधिभेदाद्भेदो बोध्यः। अत एव **केदारोऽपि** औपच्छन्दसिकं विराड्वृत्तमप्याह स्म-'वदन्त्यपरवक्त्राख्यं वैतालीयं विपश्चितः। पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं तथा॥' (वृ० र० ४।१२) इति **माधुर्यरञ्जनी**।

(२) 'विषमे सजौ सगुरुयुक्तौ **केतुमती** समे भरनगाद्गः' इति छन्दः कौस्तुभे।

सगण: जगण: सगण: गु०

। । ऽ । ऽ । । । ऽ ऽ

स-ह-ते न-कोऽ-पि व-सु-धा-यां

(१)(२)(३)(४)(५) (६)(७)(८)(९)(१०)

भगण: रगण: नगण: गु० गु०

ऽ । । ऽ । ऽ । । । ऽ ऽ

के-तु-म-तीं न-रे-द्र! त-व से-नाम् ।।

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

**शिवप्रसादिनी**—जिस छन्द अथवा वृत्त के प्रथम पाद में क्रमश: सगण (।।ऽ) जगण (।ऽ।) सगण (।।ऽ) एक गुरु अक्षर हो, द्वितीयपाद में भगण (ऽ।।) रगण (ऽ।ऽ) नगण (।।।) एवं दो गुरु (ऽ-ऽ) अक्षर हों। तथा तृतीयपाद प्रथमपाद के लक्षण वाला और चतुर्थपाद द्वितीय पाद के लक्षण से समन्वित हों, तो वह "केतुमती" वृत्त होता है ।।३६।।

## [१]आख्यानकी तौ ज्गौ ग्, ज्तौ ज्गौ ग् ।५।३७।।

यस्य प्रथमे पादे तकारौ (ऽऽ।.ऽऽ।) जकारो (।ऽ।) गकारौ (ऽऽ) च, द्वितीये जकार (।ऽ।) तकारौ (ऽऽ।) जकार (।ऽ।) गकारौ (ऽऽ) च, तत् 'आख्यानकी' नाम वृत्तम्। तत्रोदाहरणम्—

तगण: तगण: जगण: गु० गु०

ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

भृ-ङ्गा-व-ली म-ङ्ग-ल-गी-त-ना-दै

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

जगण: तगण: जगण: गु० गु०

। ऽ । ऽ ऽ । । ऽ । ऽ ऽ

र्ज-न-स्य चि-त्ते मु-द-मा-द-धा-ति ।

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

---

(१) 'अख्यानिकी' इति कलिकातामुद्रितपुस्तके पाठ: । एवं वृत्तावपि तत्र । 'आख्यातकी'ति **रत्नाकरे। 'आख्यानकी** तौ जगुरू गमोजे जतावनोजे जगुरू गुरुश्चेत्' इति छन्द:कौस्तुभे । उपजातिचतुर्दशभेदान्तर्गतप्राकृतपिङ्गलोक्त**भद्रा**ख्यदशमभेदरूपत्वात् **'भद्रा'** इत्यपरं नाम ।

तगणः तगणः जगणः गु० गु०

ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

आ-ख्या-न-की-व स्म-र-ज-न्म-वा[१]-र्ता

(१) (२) (३)(४)(५)(६)(७)(८)(९)(१०)(११)

जगणः तगणः जगणः गु० गु०

। ऽ । ऽ ऽ । । ऽ । ऽ ऽ

म-हो-त्स-व-स्या-म्र-व-णे क्व-ण-न्ती ।

(१)(२)(३)(४) (५)(६)(७)(८)(९)(१०)(११)

आख्यानकी वार्ताहारिकोच्यते ॥

**शिवप्रसादिनी**—जिस वृत्त के प्रथम पाद में दो तकार (ऽऽ।-ऽऽ।) एक जकार (।ऽ।) दो गुरु (ऽ-ऽ) अक्षर हो, तथा द्वितीय पाद में पुनः एक जकार (।ऽ।) एक तकार (ऽऽ।) एक जकार (।ऽ।) और दो गुरु (ऽ-ऽ) वर्ण हों । साथ ही तृतीय पाद प्रथम पाद के और चतुर्थ पाद द्वितीय पाद के लक्षण से लक्षित हो, तो वह ''आख्यानकी'' वृत्त होता है ॥३७॥

## [२]विपरीताख्यानकी ज्तौ ज्गौ ग्, तौ ज्गौ ग् ।५।३८॥

यस्य प्रथमे पादे जकार (।ऽ।) तकारो (ऽऽ।) जकारो (।ऽ।) गकारौ (ऽऽ) च, द्वितीये तकारौ (ऽऽ।.ऽऽ।) जकारो (।ऽ।) गकारौ (ऽऽ) च, तद् 'विपरीताख्यानकी' नाम वृत्तम् । तत्रोदाहरणम्—

जगणः तगणः जगणः गु० गु०

। ऽ । ऽ ऽ । । ऽ । ऽ ऽ

अ-लं त-वा-ली-क-व-चो-भिं-रे-भिः

(१)(२)(३)(४) (५) (६)(७)(८)(९)(१०)(११)

तगणः तगणः जगणः गु० गु०

ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

स्वा-र्थं प्रि-ये! सा-ध-य का-र्य-म-न्यत् ।

(१) (२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

---

(१) 'यात्रामहोत्सवस्य श्रवणे क्वणन्ती' इति लिखितोदाहरणपुस्तके

(२) 'विपरीताख्यानिकी इति क.मु.पु. 'जतौ जगौ गो विषमे समे तौ जगौ ग एषा **विपरीत**पूर्वा' इति छन्दःकौस्तुभे । प्राकृतपिङ्गलोक्तोपजातिचतुर्दशभेदान्तर्गत**हंसी**-नामकपञ्चमभेदरूपत्वात्पञ्चमोऽयं भेद उपजातेः, अतो **'हंसी'** इति नामान्तरम् ॥

जगणः तगणः जगणः गु० गु०

। ऽ । ऽ ऽ । । ऽ । ऽ ऽ

क-थं क-थां-क-र्ण-न-कौ-तु-कं स्या-
(१)(२)(३)(४) (५) (६)(७)(८)(९)(१०)(११)

तगणः तगणः जगणः गु० गु०

ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

दा-ख्या-न-की चे-द्वि-प-री-त-वृ- त्तिः?॥
(१)(२) (३)(४)(५)(६)(७)(८)(९)(१०)(११)

एतयोश्च वक्ष्यमाणोपजात्यन्तर्गतत्वेऽपि विशेषसंज्ञार्थमर्द्धसमाधिकारे पाठः ।

**शिवप्रसादिनी**—जिस वृत्त के प्रथम पाद में क्रमशः जकार (।ऽ।) तकार (ऽऽ।) जकार (।ऽ।) और दो गुरु (ऽ-ऽ) अक्षर हो, द्वितीय पाद में दो तकार (ऽऽ।-ऽऽ।) जकार (।ऽ।) तथा दो गुरु (ऽ-ऽ) हो, इसी प्रकार तृतीय पाद प्रथम पाद के समान एवं चतुर्थपाद द्वितीयपाद के समान लक्षण वाला हो, वह "विपरीताऽऽख्यानकी" वृत्त होता है । उपर्युक्त आख्यान की और विपरीताऽऽख्यानकी नाम वाले दो छन्दों का आगे कहे जाने वाले "उपजाति छन्द" के अन्तर्गत परिगणन होने पर भी यहाँ पर विशेष सञ्ज्ञा के विधानाऽर्थ अर्द्धसम के अधिकार में सूत्रकार के द्वारा पढ़ा गया है, ऐसा जानना चाहिए ॥३८॥

## [1]हरिणप्लुता सौ स्लौ ग्, न्भौ भ्रौ ।५।३९।।

**मृतसञ्जीवनी**—यस्य प्रथमे पादे सकारास्त्रयो (।।ऽ.।।ऽ.।।ऽ) लकार (।) गकारो (ऽ) च, द्वितीये नकार (।।।) भकारौ (ऽ।।) भकार (ऽ।।) रेफौ (ऽ।ऽ) च, तद् वृत्तं 'हरिणप्लुता' नाम । तत्रोदाहरणम्—

सगणः सगणः सगणः ल०गु०

। । ऽ । । ऽ । । ऽ । ऽ

त-व-मु-ञ्ज-न-रा-धि-प! वि-द्वि-षां
(१)(२)(३)(४)(५)(६)(७)(८) (९)(१०)(११)

नगणः भगणः भगणः रगणः

। । । ऽ । । ऽ । । ऽ । ऽ

[2]भ-य-वि-व-र्जि-त-के-तु-ल-घी- य-साम् ।
(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)

---

(१) 'अयुजि प्रथमेन विवर्जितो द्रुतविलम्बिततो **हरिणप्लुता**' इति प्रा०पि०सू० २।३१५ ।

(२) 'भयविसर्जितहेतिलघीयसाम्' इति लि. पुस्तके ।

सगणः सगणः सगणः ल० गु०
। । ऽ । । ऽ । । ऽ । ऽ
र-ण-भू-मि-प-रा-ङ्मु-ख-व- र्त्म- नां
(१)(२)(३)(४)(५)(६) (७) (८)(९)(१०)(११)
नगणः भगणः भगणः रगणः
। । । ऽ । । ऽ । । ऽ । ऽ
भ-व-ति शी-घ्र-ग-ति-र्ह-रि-ण- प्लु- ता ।
(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)

**शिवप्रसादिनी**—जिस वृत्त के प्रथम पाद में तीन सकार (।।ऽ-।।ऽ-।।ऽ) एक लघु (।) और एक दीर्घ वर्ण (ऽ) हों । पुनः द्वितीय पाद में नकार (।।।) भकार (ऽ।।) और रेफ (ऽ।ऽ) रहते हों, और शेष तृतीयपाद प्रथमपाद का लक्षण वाला और चतुर्थपाद द्वितीयपादीय लक्षण से समन्वित हो, तो वह ''हरिणप्लुता'' वृत्त होता है ।।३९।।

## [१]अपरवक्त्रं नौ र्लौ ग्, न्जौ ज्रौ ।५।४०।।

**मृतसञ्जीवनी**—यस्य प्रथमे पादे नकारौ (।।।.।।।) रेफ(ऽ।ऽ) लकार (।) गकारा (ऽ) श्च, द्वितीये नकार (।।।) जकारौ (।ऽ।) जकार (।ऽ।) रेफौ (ऽ।ऽ) च, तद्वृत्तम् 'अपवक्त्रं' नाम । तत्रोदाहरणम्—

नगणः नगणः रगणः ल० गु०
। । । । । । ऽ । ऽ । ऽ
स–वृ-द-पि वृ-प-णो-न च– क्षु- षा
(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)
नगणः जगणः जरगणः रगणः
। । । । ऽ । । ऽ । ऽ । ऽ
न-र- व-र! प-श्य-ति-य-स्त-वा- न-नम् ।
(१)(२)(३)(४)(५)(६) (७)(८)(९)(१०)(११)(१२)
नगणः नगणः रगणः ल० गु०
। । । । । । ऽ । ऽ । ऽ
न-पु- न- र- प- र- व-क्र-मी-क्ष- ते
(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

---

(१) 'अयुजि ननरला गुरुः समे **यदपरवक्त्र**मिदं नजौ जगौ' इति प्रा० पि० सू० २।३।१८ अस्यैव **'पल्लविताग्र'**मिति नामान्तरं वृ० म० को० ।

नगणः जगणः जगणः रगणः

। । । । ऽ । । ऽ । ऽ । ऽ

स हि सु-खि-तो-ऽर्थि-ज-न-स्त-था-वि- धः ॥

(१)(२)(३)(४) (५) (६) (७)(८)(९)(१०)(११)(१२)

अस्य वैतालीयान्तर्गतत्वेऽपि विशेषसंज्ञार्थमिहोपन्यासः ॥

**शिवप्रसादिनी**—जिस वृत्त के प्रथम पाद में क्रमशः दो नकार (।।।-।।।) रेफ (ऽ।ऽ) एक लघु एवम् एक दीर्घ अक्षर हो । द्वितीय पाद में नगण (।।।) दो जगण (।ऽ।-।ऽ।) रगण (ऽ।ऽ) मिलकर कुल (१२) बारह अक्षर हो, तथा तृतीयपाद और चतुर्थपाद क्रमशः प्रथम पाद और द्वितीयपाद के लक्षणों वाला हो वह "अपरवक्त्र" वृत्त होता है । वैतालीय के अन्तर्गत आने पर भी विशेष सञ्ज्ञा विधानाऽर्थ इस प्रकरण में सूत्रकार के द्वारा प्रस्तुत किया गया है ॥४०॥

## [१]पुष्पिताग्रा नौ र्यौ, न्जौ ज्रौ ग् ।५।४१।।

**मृतसञ्जीवनी**—यस्य प्रथमे पादे नकारौ (।।।.।।।) रेफ (ऽ।ऽ) यकारौ (।ऽऽ) च, द्वितीये नकार (।।।) जकारौ (।ऽ।) जकार (।ऽ।) रेफौ (ऽ।ऽ) गकार (ऽ) श्च, तद्वृत्तं 'पुष्पिताग्रा' नाम । तत्रोदाहरणम्—

---

(१) 'अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च **पुष्पिताग्रा**' इति प्रा० पि० सू० २।३०८ ।

नगणः जगणः जगणः रगणः गु

। । । । ऽ । । ऽ । ऽ । ऽ ऽ

भ्र-म-र-कु-ला-नि ल-ते-व पु-ष्पि- ता- ग्रा।।

(१)(२)(३)(४) (५) (६)(७)(८)(९)(१०)(११)(१२)(१३)

इयमप्यौपच्छन्दसकान्तर्गतां विशेषसंज्ञापनार्थमत्रोच्यते ॥

**शिवप्रसादिनी**—जिस वृत्त के प्रथम पाद में दो नकार (।।।-।।।) रेफ (ऽ।ऽ) तथा यकार (।ऽऽ) सम्मिलित हों, द्वितीयपाद में नकार (।।।) दो जकार (।ऽ।-।ऽ।) रकार (ऽ।ऽ) तथा एक दीर्घ हो। इसके अलावा तृतीयपाद और चतुर्थपाद क्रमशः प्रथम-द्वितीय पादों के लक्षणों वाले हों, वह पुष्पिताऽग्रा वृत्त कहा जाता है। इस छन्द का ''औपछन्दसिक'' के मध्य गणना होने पर भी पुनः विशेष सञ्ज्ञा की सिद्धि के लिए उसका प्रकृत प्रकरण में पाठ उपस्थापित किया गया है ।।४१।।

## [1]यवमती जौं जौं, ज्रौ ज्रौ ग् ।५।४२।।

यस्य प्रथमे पादे रेफ(ऽ।ऽ)जकारौ (।ऽ।) भूयोऽपि रेफ (ऽ।ऽ) जकारौ (।ऽ।) भवतः, द्वितीये जकार (।ऽ।) रेफौ (ऽ।ऽ) पुर्जकार (।ऽ।) रेफौ (ऽ।ऽ) गुरु (ऽ) श्च, तद्वृत्तं 'यवमती' नाम। अत्र संप्रदायात्पादव्यवस्था। तत्रोदाहरणम्—

---

(१) **'परावती'** इत्यपि नामान्तरं **श्रीकृष्णमते**।

(२) 'तथा च यस्याः' इति लि. पु०।

जगण: रगण: जगण: रगण: गु
। ऽ । ऽ । ऽ । ऽ । ऽ । ऽ ऽ
स-म-स्त-ब-न्धु-पू-जि-ता प्रि-या च प-त्यु: ।।
(१)(२)(३)(४)(५) (६)(७) (८)(९)(१०)(११)(१२)(१३)

यवान्विता यवमतीत्यर्थ: ।।

**शिवप्रसादिनी**—जिस वृत्त के प्रथम पाद में रेफ (ऽ।ऽ) जकार (।ऽ।) पुन: रेफ (ऽ।ऽ) और जकार (।ऽ।) हो, द्वितीय पाद में जकार (।ऽ।) रेफ (ऽ।ऽ) पुन: जकार (।ऽ।) रेफ (ऽ।ऽ) एवम् एक दीर्घ वर्ण हो, तथा तृतीय पाद प्रथम पाद के लक्षण वाला हो, और चतुर्थ पाद द्वितीयपाद के लक्षण से युक्त हो, तो वह ''यवमती'' वृत्त कहा जाता है ।।४२।।

## [१]शिखैकोनत्रिंदशदेकत्रिंदशदन्ते ग् ।५।४३।।

यस्य प्रथमे पादे एकोनत्रिंशद् (२९) अक्षराणि, द्वितीये च एकत्रिंशत् (३१), द्वयोरपि (१.२) पादयोरन्ते च प्रत्येकं गुरु: (ऽ), तद्वृतं 'शिखा' नाम । 'अर्धे' (पि०सू० ५।३१) इत्यधिकाराद्द्वितीयमप्यर्धं तादृशमेव । 'अन्ते ग्' इति नियमार्थमेतत् । अन्ते एव गुरुर्नान्यत्र । तेन **अयुक्** (१,३) पादे अष्टाविंशति(२८)रक्षराणि लघूनि, अन्ते गुरु(१)-रेक: । युक् (२,४) पादे त्रिंश(३०)ल्लघव:, अन्ते गुरु(१)श्च । तत्रोदाहरणम्—

गु०
ऽ
[२]अभिमतबकुलकुसुमघनपरिमलमिलदलिमुखरितहरिति मधौ
(२९)
गु०
ऽ
सहचरमलयपवनरयतरलितसरसिजरजसि [३]शयतरणिवितते ।
(३१)
गु०
ऽ
विकसितविविधकुसुमसुलभसुरभिशरमदननिहतसकलजने
(२९)

---

(१) 'शिखैकान्नत्रिंश-'दिति वैदिकपाठ: । पिङ्गलसूत्र (४।४९) प्राकृतपिङ्गलसूत्र (१।१२६) बोधित'**शिखा**'छन्दस्त्वस्माद्भिन्नमेव । (२) 'अभिनव' इति लि. पुस्तके । (३) 'मनसि शयवितते' ति लि. लिखितोदाहरणपुस्तके च ।

गु०
ऽ

ज्वलयति मम हृदयमविरतमिह सुतनु! तव विरहदहनविषमशिखा ॥
(३१)

**शिवप्रसादिनी**—जिस वृत्त के प्रथम चरण के आदि में (२८) अक्षर लघु हो एवम् अन्त में एक दीर्घ वर्ण हो, (कुल मिलाकर (२९) उन्तीस वर्ण हो) एवं द्वितीयपाद में तीस (३०) लघु अक्षर आदि में, और एक गुरु अक्षर अन्त में (कुल इकत्तीस (३१) अक्षर) उपलब्ध हो । इसी प्रकार तृतीयपाद प्रथम पाद के समान उन्तीस (२९) लघु गुरु वाला और चतुर्थ पाद पुनः द्वितीय पाद के समान तीस लघु और एक अन्त्य गुरु से संयुक्त हो, तो वह वृत्त "शिखा" कहलाता है ॥४३॥

## [१]खञ्जा महत्ययुजीति ।५।४४॥

**मृतसञ्जीवनी**—इयमेव शिखा पूर्वोक्ते महति बह्वक्षरे पादे अयुजि (१,३) सति, पारिशेष्यादितरस्मिंश्च युजि (२,४) सति 'खञ्जा' नाम च्छन्दो भवति । अयमर्थः— एकत्रिंशदक्षरो विषमः पादः कर्तव्यः; एकोनत्रिंशद (२९) क्षरश्च समः पादः । शेषं यथाप्राप्तमेव । तत्रोदाहरणम्—

गु०
ऽ

अपगत घनविशददशदिशि हतजनदृशि परिणतकणकपिलकलमे
(३१)

गु०
ऽ

प्रविकसदसमकुसुमघनपरिमलसुरभितमरुति शरदि समये ।
(२९)

गु०
ऽ

शुचिशशिमहसि विवृतसरसिरुहि मुदितमधुलिहि विमलितधरणितले
(३१)

---

(१) 'प्राकृतपिङ्गलसूत्र (१।१२४) बोधित'**खञ्जा**'छन्दस्त्वस्माद्भिन्नमेव । '**खजा**' इति नामान्तरमस्याः क्वचित् । 'शिखाखञ्जे दण्डकभेदौ । अत्र दर्शिते मात्रासमकप्रस्तावात्'— इति **वृ०र०पञ्चिका** ।

गु०
ऽ

किमपरमिह कमलमुखि! सुखमनुभवति मम हृदयकमलमधुना ॥
(२९)

अर्धसमवृत्ताधिकारो निवृत्तः ।

इति भट्टहलायुधविरचितायां छन्दोवृत्तौ पञ्चमोऽध्यायः ।

**शिवप्रसादिनी**—पूर्व में कही गयी शिखा ही महति = बहुअक्षरों से युक्त, अयुजि = प्रथम एवं तृतीय पाद होने की दशा में, अर्थात् प्रथम पाद एवं तृतीयपाद के आदि में तीस लघु एवं अन्त में एक गुरु वर्ण कुल (३१) इकतीस वर्ण हो, एवं द्वितीय और चतुर्थ पाद में शिखा छन्द के कहे हुए (२९) उन्तीस वर्ण विद्यमान हो, तो उस वृत्त को "खञ्जा" कहते हैं ॥४४॥

॥ इति सांख्य-योग-न्याय-वैशेषिक-पद-वाक्य-पारावारीणेन मैथिलपण्डित-
चित्तनारायणपाठकाऽऽह्वयेन कृतायां पिङ्गलछन्दःशास्त्रीय-
शिवप्रसादिनीव्याख्यायां पञ्चमोऽध्यायः ॥

## षष्ठोऽध्यायः

### यतिर्विच्छेदः ।६।१।।

**मृतसञ्जीवनी**—विच्छिद्यते विभज्यते पदपाठोऽस्मिन्निति विच्छेदो विश्रामस्थानं, स च [1]यतिरित्युच्यते। नन्वत्र शास्त्रे यतिशब्देन व्यवहारादर्शनान्निरर्थकं संज्ञाकरणम्! । नैष दोषः, यतिरित्यागमादिष्वाचार्यपारम्पर्यागता संज्ञेयं 'तनुमध्यादि' वत्। तस्याः शिष्यव्युत्पत्त्यर्थमर्थकथनम् 'यतिर्विच्छेदः' इति। अस्ति च लोके शास्त्रान्तरेषु च यतिः संज्ञाव्यवहारः। अपि च 'यतिः' इत्यधिकार आसप्तमाध्यायपरिसमाप्तेः समुद्रेन्द्रियरसादि-निर्देशेषूपतिष्ठते। समुद्रादिशब्दाः साकाङ्क्षत्वात् 'यतिः' इत्यनेनैव संबध्यन्ते। यति-शब्दस्याधिकरणव्युत्पत्त्या समुद्राद्यवच्छिन्नेष्वक्षरेषु यतिः कर्तव्येत्यर्थः सिध्यति। तत्रैषा यत्युपदेशोपनिषद्भवति[2]—

**यतिः सर्वत्र पादान्ते श्लोकार्धे तु विशेषतः।**
**समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके।।**
**क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत्।**
**यदि पूर्वापरैः भागौ न स्यातामेकवर्णकौ।।**
**पूर्वान्तवत्स्वरः संधौ क्वचिदेव परादिवत्।**
**द्रष्टव्यो यतिचिन्तायां यणादेशः परादिवत्।।**
**नित्यं प्राक्पदसंबन्धाश्चादयः प्राक्पदान्तवत्।**
**परेण नित्यसंबन्धाः प्रादयश्च परादिवत्।।**

'यतिः सर्वत्र पादान्ते' इत्यस्योदाहरणम्—'विशुद्धज्ञानदेहाय' (मी.श्लो.वा. १।१) इत्यादि। तस्यैव प्रत्युदाहरणम्—

'नमस्तस्मै महादेवा,-य शशाङ्कार्धधारिणे' इत्यादि।

'श्लोकार्धे तु विशेषतः' इत्यत्र संधिकार्याभावः स्पष्टविभक्तिकत्वं च विशेषः। तत्रोदाहरणं यथा—

---

(१) यतिश्छन्दोऽधिरूढानां शब्दानां या विधारणा।' (का.लं. ४।२४) इति **भामहः**।

(२) 'पादान्त एव केचिच्च पादमध्येऽपि केचन। यतिं वदन्ति तत्रापि विशेषः स्फुटमुच्यते।। धातुनामस्वभिन्नेषु यतिर्भवति नान्यथा। उपसर्गान्ततश्छेदः प्रत्ययादौ तयोःक्वचित्।। स्वरसन्धौ तु सम्प्राप्तसौन्दर्याद्यतिरिच्यते। तु चादयो न प्रयोज्या विच्छेदात्परतस्तथा। प्रत्ययादौ यतिर्नाम्नां षष्ठ्यामेवेति केचन।'-इति **मन्दारमरन्दे** (शे.बि.)।

'नमस्यामि सदोद्भूतमिन्धनीकृतमन्मथम् ।
ईश्वराख्यं परं ज्योतिरज्ञानतिमिरापहम् ॥'

अत्र 'ईश्वराख्यम्' इत्यस्य पूर्वमकारेण संयोगो न कर्तव्यः । समासे प्रत्युदाहरणं [ यथा—]

'सुरासुरशिरोरत्नस्फुरत्किरणमञ्जरी'-।
पिञ्जरीकृतपादाब्जद्वन्द्वं वन्दामहे शिवम् ॥'

'समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके' तत्र श्रूयमाणविभक्त्यन्तं व्यक्तविभक्तिकम् समासान्तर्भूतविभक्त्यन्तमव्यक्तविभक्तिकम् । तत्रोदाहरणं [यथा—]

'यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु' (मे.सं. १।१) इत्यादि ।

'व्यक्ताव्यक्तविभक्तिके' इति 'यतिः सर्वत्र पादान्ते' इत्यनेन संबध्यते । तत्रोदाहरणम्—

'वशीकृतजगत्कालं कण्ठेकालं नमाम्यहम् ।
महाकालं कलाशेषशशिलेखाशिखामणिम् ॥'

अपि च ।

'नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे ।
त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे ॥'

'क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत् । यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ ॥' तत्रोदाहरणम्—

'पर्याप्तं तप्तचामी,—करकटकतटे श्लिष्टशीतेतरांशौ' इत्यादि । तथा—'कूज-त्कोयष्टिकोला, —हलमुखरभुवः प्रान्तकान्तारदेशाः' इत्यादि । तथा—'हासो हस्ताग्र-संवा,—हनमपि तुलिता, —द्रीन्द्रसारद्विषोऽसौ' इत्यादि । तथा—'वैरिञ्चानां तथोच्चा,—रितरुचिरत्रृचां चाननानां चतुर्णाम्' इत्यादि । तथा—'खड्गे पानीयमाह्ला,—दयति च महिषं पक्षपाती पृथक्कः' इत्यादि । समुद्रादाविति किम्?। पदमध्ये यतिः पादान्ते मा भूत् । तद्यथा—'प्रणमत भवबन्धक्लेशनाशाय नारा,-यणचरणसरोजद्वन्द्वमानन्दहेतुम्' इत्यादि ।

पूर्वोत्तरभागयोरेकाक्षरत्वे तु यतिर्दुष्यति । तत्रोदाहरणम्—

'एतस्या ग,—ण्डतलममलं गाहते चन्द्रकक्षाम्' इत्यादि । 'एतस्या रा,-जति सुमुखमिदं पूर्णचन्द्रप्रकाशम् ।' इत्यादि । तथा—'सुरासुरशिरोनिघृ,—ष्टचरणारविन्दः शिवः' इत्यादि ।

'पूर्वान्तवत्स्वरः संधौ क्वचिदेव परादिवत्' । अस्यार्थः—योऽयं पूर्वपरयोरेकादेशः स्वरसंधौ विधीयते, स क्वचित्पूर्वस्यान्तवद्भवति क्वचित्परस्यादिवत् । तथा च पाणिनेः स्मरणम्— 'अन्तादिवच्च' (पा०सू० ६।१।८५) । तत्र पूर्वान्तवद्भावे उदाहरणम्—

'स्यादस्थानो—पगतयमुनासंगमेवाभिरामा' (मे.सं. १।५१)। 'जम्भारातीभकुम्भोद्भवमिव दधतः' इत्यादि।

तथा—

'दिक्कालाद्यनवच्छिन्ना–नन्तचिन्मात्रमूर्तये ।
स्वानुभूत्येकमानाय नमः शान्ताय तेजसे ॥' (नौ.श.१) इत्यादि।

परादिवद्भावे उदाहरणम्—

'स्कन्धं विन्ध्याद्रिबुद्ध्या, निकषति महिष-स्याहितोऽसूनहार्षीत्' इत्यादि।

'शूलं शूलं तु गाढं प्रहर हर! हृषीकेश! केशोऽपि वक्र-श्चक्रेणाकारि किं ते' इत्यादि।

तत्र हि स्वरस्य परादिवद्भावे व्यञ्जनमपि तद्भक्तत्वात्तदादिवद्भवति।

'यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ' इत्यन्तादिवद्भावविधावपि संबध्यते। तेन 'अस्या वक्रा—ब्जमवजितपू-र्णेन्दुशोभं विभाति' इत्येवंविधा यतिर्न भवति।

'यणादेशः परादिवत्' इत्यस्योदाहरणम्—

'विततघनतुषारक्षोदशुभ्रांशुपूर्वा-
स्वविरलपदमालां श्यामलामुल्लिखन्तः' इत्यादि।

'नित्यं प्राक्पदसंबन्धाश्चादयः प्राक्पदान्तवत्'। तेभ्यः पूर्वा यतिर्न कर्तव्येत्यर्थः। तत्रोदाहरणम्—

'स्वादु स्वच्छं च हिमसलिलं प्रीतये कस्य न स्यात्'? इत्यादि।

नित्यं प्राक्पदसंबन्धा इति किम्?। अन्येषां पूर्वपदान्तवद्भावो मा भूत्। तद् यथा—

'मन्द्रायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः' (मे.सं. १।३८) इत्यादि।

तथा—'इत्यौत्सुक्यादपरिगणयन्गुह्यकस्तं ययाचे' (मे.सं. १।५) इत्यादि।

'परेण नित्यसंबन्धाः प्रादयश्च परादिवत्'। तेभ्यः परा यतिर्न भवतीत्यर्थः। तत्रोदाहरणम्—

'दुःखं मे प्र-क्षिपति हृदये दुःसहस्त्वद्वियोगः' इत्यादि।

परेण नित्यसंबन्धा इति किम्?। कर्मप्रवचनीयेभ्यः परापि यतिर्यथा स्यात् इति, तत्रोदाहरणम्—

'प्रियं प्रतिस्फुरत्पादे मन्दायन्ते नखत्विषः।'
'श्रेयांसि बहुविघ्नानि भवन्ति महतामपि' इत्यादि।

अयं तु चादीनां प्रादीनां चैकाक्षरत्वेनैकाक्षराणामेव पादान्ते यतावन्तादिवद्भाव

इष्यते, न त्वेनकाक्षराणां पदमध्ये यतौ। तत्र हि पदमध्येऽपि चामीकरादिष्विव यतेरभ्यनुज्ञातत्वात्। तत्र चादीनामुदाहरणम्—

'प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम्' (मे.सं. २।२८) इति।

प्रादीनामुदाहरणम्—

'द्वारारूढप्रमोदं हसितमिव परिस्पष्टमासा[1] सखीभिः' इत्यादि।

न पर्यन्तोऽस्ति वृत्तानां [2]प्रस्तारगणनाविधौ।
पूर्वाचार्यकृताभिख्याचिह्नं[3] किंचिदिहोच्यते॥

(उक्थायाम्) एकाक्षरायाम्—

**श्रीच्छन्दः (१।१)**— **श्री** सा।
जं गो॥ प्रा० पिं० सू० २।१॥

(अत्युक्थायाम्) द्यक्षरायाम्—

**कामच्छन्दः (२।१)**— दीहा वीहा।
**कामो** रामो॥ प्रा० पिं० सू० २।४॥
(**'स्त्री'** इति नामान्तरं **कामस्य** च्छन्दः कौस्तुभादौ।)

**महीच्छन्दः (२।२)**— लगो जहीं।
**मही** कही॥ प्रा० पिं० सू० २।८॥

**सारुच्छन्दः (२।३)**— **सारु** एह।
गो वि रेह॥ प्रा० पि० सू० २।१०॥
(**चारु**—वृत्तचन्द्रिकायाम्)

**मधुच्छन्दः (२।४)**— लहु जुअ।
**महु** धुअ। प्रा० पिं० सू० २।६॥

(मध्यायाम्[4]) त्र्यक्षरायाम्—

---

(१) 'परिस्पष्टमाशासखीभिः' इति क. मु. पुस्तके।

(२) प्रस्तारगणना त्वष्टमाध्याये प्रपञ्चयिष्यते। अत्र तु श्रीमता भगवता पिङ्गलाचार्येण गायत्र्यांद्युत्कृतिपर्यन्तच्छन्दोऽनुसारीणि वृत्तानि, दण्डकजातयश्च प्रदर्शिताः, न तूक्थादिच्छन्दः पञ्चकानुसारीणि वृत्तानि। तानि च्छन्दांसि प्राकृतपिङ्गलच्छन्दःकौस्तुभप्रभृतिग्रन्थोपलब्धानि प्रदर्श्यन्ते। यथा—

(३) 'पूर्वाचार्यकृतं वृत्तचिह्नं' इति क. मु. पुस्तके।

(४) 'प्राकृतेष्वष्टभिर्माद्यैर्गोकर्णा' च **'शशिप्रभा'**। **'रमणं'** चैव **'पाञ्चालं'** **'मृगेन्द्र'**श्चैव **'मन्दरः'**॥ **'कमलं'** चैव **'संज्ञाश्च'** वृत्ताष्टकमुदीरितम्॥

**तालीच्छन्दः (३।१)**— **ताली** ए जाणीए ।
गो कण्णो तिब्बण्णो ॥ प्रा० पिं० सू० २।१२ ॥
('नारी'—वृ०र०)

**शशीच्छन्दः (३।२)**— **ससी** यो जणीयो ।
फणींदो भणीओ ॥ प्रा० पिं० सू० २।१६ ॥
('केसा'—वृ०र०)

**प्रियाच्छन्दः (३।३)**— हे **पिए** लेक्खिए ।
अक्खरे तिण्णि रे ॥ प्रा० पिं० सू० २।१४ ॥
('**मृगी**' इति छन्दःकौस्तुभादौ ।)

**रमणच्छन्दः (३।४)**— सगणो **रमणो** ।
सहिओ कहिओ ॥ प्रा० पिं० सू० २।१८ ॥

**पञ्चालच्छन्दः (३।५)**— तक्कार जं दिट्ठ ।
**पंचाल** उक्किट्ठ ॥ प्रा० पिं० सू० २।२० ॥

**मृगेन्द्रच्छन्दः (३।६)**— णरेंद ठवेहु ।
**मिएंद** करेहु ॥ प्रा० पिं० सू० २।२२ ॥

**मन्दरच्छन्दः (३।७)**— भो जहि सो सहि ।
**मंदर** सुंदर ॥ प्रा० पिं० सू० २।२४ ॥

**कमलच्छन्दः (३।८)**— **कमल** पभण ।
सुमुहि णगण ॥ प्रा० पिं० सू० २।२६ ॥
(प्रतिष्ठायाम्) चतुरक्षरायाम्—

**तीर्णाच्छन्दः (४।१)**— चारी हारा इट्ठा कारा ।
वीए कण्णा जाणे **तिण्णा** ॥ प्रा० पिं० सू० २।२८ ॥

**व्रीडाच्छन्दः (४।२)**— यगौ **व्रीडा** । वृ०र० ३।७

**समृद्धिच्छन्दः (४।३)**— गौं **समृद्धिः** । वृ० र० ३।११

**सुमतिच्छन्दः (४।४)**— **सुमतिः** स्गौ । वृ० र० ३।१०

**लासिनीच्छन्दः (४।६)**— ज्ग **लासिनी** । वृ०र० ३।८
('नगाणिका'-प्रा०पिं०सू० २।३२)

**सुमुखीच्छन्दः (४।७)**— भ्गौ **सुमुखी** । वृ०र० ३।९

**धारीच्छन्दः (४।११)**— वण्ण चारि मुद्धि **धारि** ।
विण्णि हार दो स सार ॥ प्रा० पिं० सू० २।३० ॥

('धारि'-वा० भू०)

(सुप्रतिष्ठायाम्) पञ्चाक्षरायाम्—

**संमोहाच्छन्द: (५।१)**— **संमोहा**रूअं दिट्ठो सो भूअं।
ब कण्णा हारा भूअत्तासारा ॥ प्रा० पिं० सू० २।३४ ॥
('**पङ्क्ति:**' इति नामान्तरं **संमोहा**ख्यच्छन्दस:)
('कन्या'-ग० पु०, वृ० र०। 'कीर्णा'-वृ० चं०)

**हारीच्छन्द: (५।५)**— आईहि अंते हारे सुजुत्ते।
मज्झेक्कगंधो हारी अछंदो ॥ प्रा० पि० सू० २।३६॥
('**हारीतबन्ध**' इति नामान्तरं **हारी**च्छन्दस:)

**हंसच्छन्द: (५।७)**— पिंगलदिट्ठो भ दइ सिट्ठो।
कण्णइ दिज्जो **हंस** मुणिज्जो ॥ प्रा० पिं० सू० २।३८ ॥
('**पङ्क्ति:**' इति नामान्तरं **हंसस्य** छन्द:कौस्तुभादौ, छन्दोमञ्जर्यां न.)

**विदग्धकच्छन्द:(५।११)**—'रो लगौ यदा स्याद्विदग्धक:'।

**प्रियाच्छन्द: (५।१२)**— 'सलगै: **प्रिया**' इत्यधिकं छन्द:कौस्तुभवृत्तरत्नाकरादावुपलभ्यते, न प्राकृतपिङ्गले ॥ •

**यमकच्छन्द: (५।३२)**— सुपिअगण सरसुगुण।
सरह गण **जमअ** भण ॥ प्रा० पिं० सू० २।४० ॥

**शिवप्रसादिनी**—छन्द:शास्त्र में छन्दों से नियन्त्रित श्लोकाऽऽदिकों के पाद आदि के विभाग को 'यति' नाम से कहा जाता है। अर्थात् विभक्त, चरण, वा अर्ध छन्द आदिकों की विश्रान्ति को 'यति' कहा जाता है।

इसका विस्तार इस प्रकार समझना चाहिए—विच्छिद्यते = विभज्यते पद पाठो अस्मिन्निति विच्छेद: = विश्रामस्थानम् = अर्थात् पदसमूहाऽऽत्मकवाक्य से अलग किया जाय पदपाठ जिस विश्रामस्थल में, उस विश्रामस्थलविशेष का नाम विच्छेद है, जिसका अपर नाम यति है। **शंका**—प्रकृत छन्द: शास्त्र में यति शब्द से व्यवहार होते नहीं देखा जाता है, अत: निरर्थक होने से यति सञ्ज्ञा विधायक सूत्र नहीं बनाना चाहिए? **समाधान**—यति सञ्ज्ञा विधान की नैरर्थक्याऽऽपत्ति दोष नहीं है, क्योंकि प्रकृतशास्त्र में उसका प्रयोग न होने पर भी, वेदापुराणाऽऽदिशास्त्रों में आचार्य परम्परा से तनु-मध्य आदि सञ्ज्ञाओं के समान आयी हुई यह सञ्ज्ञा है, इस सञ्ज्ञा का प्रकृतशास्त्र में वर्णन शिष्य बुद्धि वैशद्याऽर्थ किया गया है, अन्यथा अन्यस्थल में आए हुए यति शब्द के अर्थ विषय में व्यामोह की प्रबलसम्भावना प्रकट होगी। अस्तु। अब सूत्र पर विचार करने

के लिए सूत्र का स्मरण करते हैं—यतिर्विच्छेद इति। लोक व्यवहार के शब्दों में, और प्रकृत शास्त्र से भिन्नशास्त्रीय ग्रन्थों में "यति" सञ्ज्ञा का व्यवहार होते देखा जाता है। दूसरी बात यह है कि इस सूत्र से विहित यति सञ्ज्ञा का अधिकार षष्ठाऽध्याय से आरम्भ होकर सप्तमाऽध्याय पर्यन्त तक जाता है। "यति" कहाँ किया जाना चाहिए? इस पर शास्त्र में कहा गया है कि सभी श्लोकों में पाद के अन्त में, श्लोकाऽर्धस्थल में तो विशेषरूप से यति को किया जाना चाहिए। पाद के अन्त में यति का उदाहरण है— "विशुद्ध ज्ञान देहाय," "नमस्तस्मै महादेव, "यःशशाऽर्ध धारिणे," श्लोकाऽर्ध में तो विशेष रूप से यति करने योग्य है। यहाँ पर सन्धि कार्य का अभाव, और स्पष्ट विभक्ति वाला होना ही विशेषता है। इन सब विचारों का विस्तार हलायुध वृत्ति में हुआ है, अतः सन्देह निवृत्ति आदि के लिए वहीं का ग्रन्थ देखना चाहिए ॥१॥

तत्र गायत्रे छन्दसि वृत्तम्—

## तनुमध्या[१] त्यौ ।।६।२।।

**मृतसञ्जीवनी**—यस्य पादे तकार (ऽऽ।) यकारौ (।ऽऽ), तत् 'तनुमध्या' नाम वृत्तम्। तत्रोदाहरणम्—

तगणः यगणः तगणः यगणः

ऽ ऽ । । ऽ ऽ ऽ ऽ । । ऽ ऽ

ध-न्या त्रि-षु नी-चा; क-न्या त-नु-म-ध्या।

---

(१) षडक्षरचतुष्पादार्षगायत्रीच्छन्दसः प्रस्तारे क्रियमाणे चतुःषष्टिभेदा जायन्ते तत्र त्रयोदशोऽयं भेदः, प्राकृतपिङ्गले नायं वर्णितः।

अत्र त्वेकमेव वृत्तं दर्शितम्, प्राकृतपिङ्गलच्छन्दःकौस्तुभादावुपलब्धानि वृत्तानि प्रदर्श्यन्ते। यथा—

**शेषाच्छन्दः (६।१)**— 'बाराहा मत्ता जं कण्णा तीआ होतं।
हारा छक्का बंधो **सेसा** राआ छंदो' ॥
प्रा० पिं० सू० २।४२ ॥

(**'शेषराज'** इत्यपि नामान्तरं रविदासमते, **'विद्युल्लेखा'** इति च नामान्तरं वृत्तरत्नाकरादौ **शेषाख्यच्छन्दसः**)।

**शङ्खनारीच्छन्दः (६।१०)**—'खडावण्णबद्धो भुअंगापअद्धो।
पआ पाअ चारी कही **संखणारी** ॥'
प्रा०पिं०सू० २।५३ ॥

(**'सोमराजी, शङ्खधारी'** इति नामान्तरे छन्दःकौस्तुभादौ **शङ्खनार्याख्यच्छन्दसः**)।

तगणः यगणः तगणः यगणः

ऽ ऽ । । ऽ ऽ ऽ ऽ । । ऽ ऽ

श्रो-णी-स्त—न-गु-र्वी[1]; उ-र्वी-प-ति-भो-ग्या ॥

अत्र तु पादान्ते विशेषेण विश्रामः कर्तव्य इत्याम्नायः ॥

---

**चतुरंसाच्छन्दः (६।१६)**— 'ठउ **चउरंसा** फणिबइभासा।
दिअवरकण्णो फुल रसवण्णो ॥'
प्रा० पिं० सू० २।४८ ॥

('**शशिवदना, चण्डरसा, चतुर्वर्णा**' इति नामान्तराणि छन्दः कौस्तुभादौ **चतुरंसाख्यच्छन्दसः**। गारुडे (पू० खं० २०९।२) तु '**बालललिता**' इति।

**विज्जोहाच्छन्दः (६।१९)**— 'अक्खरा जे छआ पाअ पाअ ठ्ठिआ।
मत्त पंच हुणा विण्णि **जोहा**गणा' ॥
प्रा० पिं० सू० २।४६ ॥

('**विमोहा**' इति नामान्तरं वाणीभूषणे, '**वल्लरी**' इति छन्दःकौस्तुभादौ **विज्जोहाख्यच्छन्दसः**)।

**अनघच्छन्दः (६।२५)**— 'मो सश्चेदनघः ॥' अ० वृ० र०

**तिलकाच्छन्दः (६।२८)**— 'पिअ **तिल्ल** धुअं सगणेण जुअं।
छअ वण्ण पओ कल अट्ठ धओ ॥'
प्रा० पिं० सू० २।४४ ॥

(रविदासमते '**डिल्ला, भद्र**' इति नामान्तरे **तिलकाच्छन्दसः**)।

**वसुमतीच्छन्दः (६।२९)**— 'त्सौ चेद्व**सुमती**' इत्यधिकं छन्दःकौस्तुभादौ।

**मन्थानच्छन्दः (६।३७)**— 'कामावआरेण अद्धेण पाएण।
मत्ता दहा सुद्ध **मंथाण** सो मुद्ध ॥'
प्रा० पिं० सू० २।५१ ॥

**मालतीच्छन्दः (६।४६)**— 'धअं सरवीअ मणीगुण तीय।
दई लहु अंत स **मालइ** कंत ॥'
प्रा० पिं० सू० २।५५ ॥

('**सुमालतिका**' इति नामान्तरं वाणीभूषणे **मालत्याख्यच्छन्दसः**)।

**दमनकच्छन्दः (६।६४)**— दिअवर किअ भणहि सुपिअ।
**दमणअ** गुणि फणिवइ भणि ॥'
प्रा० पिं० सू० २।५७ ॥

(१) 'इकोऽसवर्णे—'(पा० सू० ६।१।१२७) इति प्रकृतिभावः। 'भूयात् पतिभोग्या' इति पाठः।

**शिवप्रसादिनी**—जिस गायत्री वृत्त के प्रत्येक पाद में तकार (ऽऽ।) और यकार (।ऽऽ) उपलब्ध हों, वह वृत्त 'तनुमध्या' कही जाती है ॥२॥

([1]उष्णिहि)

## [2]कुमारललिता ज्सौ ग् ।।६।३।।

**मृतसञ्जीवनी**—यस्य पादे जकार (।ऽ।) सकारौ (।।ऽ) गकार (ऽ) श्च तद्वृतं 'कुमारललिता' नाम । त्रिभिश्चतुर्भिश्च यत्युपदेशं वर्णयन्ति । तत्रोदाहरणम्—

जगणः सगणः गु० जगणः सगणः गु०

। ऽ । । । ऽ ऽ । ऽ । । । ऽ ऽ

(३) (४) (३) (४)

य-दी-य,-र-ति-भू-मौ वि-भा-ति,-ति-ल-का–ङ्कः ।

जगणः सगणः गु० जगणः सगणः गु०

। ऽ । । । ऽ ऽ । ऽ । । । ऽ ऽ

(३) (४) (३) (४)

कु-मा-र,-ल-लि-ता-सौ कु-ला-न्य,-ट-ति ना-री ॥

---

(१) 'अत्र त्वेकमेव वृत्तं दर्शितम्, प्राकृतपिङ्गलच्छन्दः कौस्तुभप्रभृतिग्रन्थोपलब्धानि वृत्तानि प्रदर्श्यन्ते यथा—

(२) उक्त सप्ताक्षरप्रस्तारस्य त्रिंशत्तमो (३०) भेदः **'कुमारललिता'** इति प्रसिद्धः ।

**शीर्षाच्छन्दः (७।१)**— 'सत्ता दीहा जाणेही कण्णा तीं गो माणेही ।
चाउद्दाहा मत्ताणा **सीसारूअं** छंदाणा ॥'
प्रा० पिं० सू० २।६५ ॥

**हंसमालाच्छन्दः (७।२०)**—'सरगा **हंसमाला** ॥'

**मदलेखाच्छन्दः (७।२५)**—'म्सौ गः स्यात् **मदलेखा** ॥'

**समानिकाच्छन्दः (७।४३)**—'चारि हार किज्जही तिण्णि गंध दिज्जही ।
सत्त अक्खरा ठिआ सा **समाणिआ** पिआ' ।
प्रा० पिं० सू० २।५९ ॥

**चूडामणिच्छन्दः (७।५३)**—'**चूडामणि**स्तभगाः ॥'

**मधुमतीच्छन्दः (७।९०)**—'ननगा **मधुमती** ॥'

**करहञ्चीच्छन्दः (७।९६)**—'चरण गण विप्प पढम लइ थप्प ।
जगण तसु अंत मुणइ **करहंच** ॥
प्रा० पिं० सू० २।६३ ॥

**सुवासच्छन्दः (७।११२)**—'भणउ **सुवासउ** लहु सुविसेसउ ।
रचि चतुमत्तह भगणइ अंतह ॥'
प्रा० पिं० सू० २।६१ ॥

अत्र केचिद् द्वाभ्यां (२) पञ्चभि(५)श्च यतिमिच्छन्ति । तत्रोदाहरणम्—

जगणः सगणः गु० जगणः सगणः गु०
। ऽ । । । ऽ ऽ । ऽ । । । ऽ ऽ
इ-दं(२), व-द-न-प-द्मं(५) प्रि-ये(२), त-व वि-भा-ति (५) ।

जगणः सगणः गु० जगणः सगणः गु०
। ऽ । । । ऽ ऽ । ऽ । । । ऽ ऽ
इ-ह(२), व्र-ज-ति मु-ग्धे(५) म-नो(२), भ्र-म-र-तां मे(५) ॥

**शिवप्रसादिनी**—जिस उष्णिक् छन्द के प्रत्येक पाद में जगण (।ऽ।) सगण (।।ऽ) गुरू (ऽ) अक्षर मिलता हो, वह छन्द (वृत्त) ''कुमारललिता'' कहलाती है ॥३॥

(अनुष्टुभि[१])

## [२]माणवकाक्रीडितकं भ्तौ ल्गौ ।।६।४।।

**मृतसञ्जीवनी**—यस्य पादे भकार (ऽ।।) तकारौ (ऽऽ।) लकार(।)गकारौ (ऽ) च,

---

(१) 'अत्र तु चत्वार्येव वृत्तानि दर्शितानि, परंतु प्राकृतपिङ्गलच्छन्दः कौस्तुभप्रभृतिच्छन्दोग्रन्थेष्वन्यान्यपि छन्दांस्युपलभ्यन्ते ।' यथा—

**पद्ममालाच्छन्दः (८।१९)**—'**पद्ममाला** च रौ गौ' (छन्दः कौस्तुभादौ ।।)

**मोदच्छन्दः (८।५२)**—'स भगा गो यदि **मोदः** ।' अ० वृ० र०

**तुङ्गाच्छन्दः (८।६४)**—'तरलणअणि **तुंगो** पढमगणसुरंगो ।
णगणजुअलबद्धो गुरुजुअलपसिद्धो ॥'
प्रा० पिं० सू० २।७३ ॥

**मृत्युञ्जयच्छन्दः (८।६९)**—'तो मोगला **मृत्युञ्जयः** ।' अ० वृ० र०

**लताच्छन्दः (८।७५)**—'रौ यलौ गुरुः **स्याल्लता**' (क्वचित्)

**कमलच्छन्दः (८।९६)**—'पढम गण विप्पओ विहु तह णरेंदओ ।
गुरुसहित अंतिणा **कमल** एम भत्तिणा ॥'
प्रा० पिं० सू० २।७५ ॥

**गजगतिच्छन्दः (८।१२०)**—'नभलगा **गजगतिः**' (छन्दोमञ्जर्याम्) ॥

**सुविलासाच्छन्दः (८।१३२)**—'**सुविलासा** सरौ ग्लौ हि (छन्दः कौस्तुभादौ) ॥

**सुचन्द्राभाच्छन्दः (८।१४६)**—'**सुचन्द्राभा** य्रौ ग्लौ' (छन्दः कौस्तुभादौ ।।)

**अचलच्छन्दः (८।२५६)**—'वसुलम**चल**मिति' (क्वचित्)

(२) उक्ताष्टाक्षरप्रस्तारस्य त्र्यधिकशततमोऽयं (१०३) भेदो **'माणवकाक्रीडितकं'** इति प्रसिद्धः ।

तत् 'माणवकाक्रीडितकं'[1] नाम वृत्तम् ।। तत्रोदाहरणम्—

भगणः तगणः ल० गु० भगणः तगणः ल० गु०
ऽ । । ऽ ऽ । । ऽ ऽ । । ऽ ऽ । । ऽ

माणव-का(४), क्रीडि-त-कं(४) यः कुरु-ते(४), वृद्ध-व-याः ।

भगणः तगणः ल० गु० भगणः तगणः ल० गु०
ऽ । । ऽ ऽ । । ऽ ऽ । । ऽ ऽ । । ऽ

हास्यम-सौ(४), याति ज-ने(४) भिक्षुरि-व(४), स्त्रीच-प-लः ।।

अत्र चतुर्भि (४)श्चतुर्भिश्च यतिरित्याम्नायः ।।

**शिवप्रसादिनी**—जिस अनुष्टुप् छन्द के प्रत्येक पाद में भगण (ऽ।।) तगण (ऽऽ।) लघु वर्ण (।) एवं गुरूवर्ण (ऽ) हों, तो वह 'मानवकाक्रीडितक' छन्द के नाम से जाना जाता है ।।४।।

## चित्रपदा[2] भौ गौ ।।६।५।।

**मृतसञ्जीवनी**—यस्य पादे भकारौ (ऽ।।.ऽ।।) गकारौ (ऽ.ऽ) च भवतस्तत् 'चित्रपदा' नाम वृत्तम् । तत्रोदाहरणम्—

भगणः भगणः गु० गु० भगणः भगणः गु० गु०
ऽ । । ऽ । । ऽ ऽ ऽ । । ऽ । । ऽ ऽ

यस्य मु-खे प्रिय-वा-णी चेतसि सज्जन-ता च ।

भगणः भगणः गु० गु० भगणः भगणः गु० गु०
ऽ । । ऽ । । ऽ ऽ ऽ । । ऽ । । ऽ ऽ

चित्रप-दापि च लक्ष्मी—स्तं पुरु-षं न ज-हा-ति ।।

अत्र पादान्ते यतिः ।।

**शिवप्रसादिनी**—जिस अनुष्टुप् छन्द के प्रत्येक पाद में दो भगण (ऽ।।-ऽ।।) तथा दो गुरू (ऽ-ऽ) विद्यमान हो, वह ''चित्रपद्य'' वृत्त कहा जाता है ।।५।।

## विद्युन्माला मौ गौ ।।६।६।।

---

(१) **'माणवकम्'** इति नामान्तरं छन्दः कौस्तुभवृत्तरत्नाकरादौ ।।

(२) उक्ताष्टाक्षरप्रस्तारभेदानां मध्ये पञ्चपञ्चाशत्तमो (५५) भेद**श्चित्रपदे**ति नाम्ना प्रसिद्धः । **'वितानम्'** इति नामान्तरं **चित्रपदायाः** 'वितानमन्यत्' पिं० सू० ५।८ इति रीत्या ।

**मृतसञ्जीवनी**—यस्य पादे मकारौ (ऽऽऽ.ऽऽऽ) गकारौ (ऽ.ऽ) च तद् 'विद्युन्माला'[१] नाम वृत्तम् ॥

तत्रोदाहरणम्—

मगणः मगणः गु० गु०
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
विद्युन्मा-ला(४), लोलान् भो-गान्

मगणः मगणः गु० गु०
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
मुक्त्वा मु-क्तौ(४), यत्नं कु-र्यात् ।

मगणः मगणः गु० गु०
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
ध्यानोत्प-न्नं(४), निःसा-मा-न्यं

मगणः मगणः गु० गु०
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
सौख्यं भो-(४), क्तुं यद्या-का-ङ्क्षेत् ॥

अत्र चतुर्भि (४) श्चतुर्भिश्च यतिरित्याम्नायः ॥

**शिवप्रसादिनी**—जिस अनुष्टुप् छन्द के प्रतिपाद में दो मगण (ऽऽऽ-ऽऽऽ) और दो गुरू (ऽ-ऽ) हो, उस छन्द को "विद्युन्माला" कहते हैं ॥६॥

**[ हंसरुतं[२] म्नौ गौ ।।६।७।। ]**

**मृतसञ्जीवनी**—यस्य पादे मगण (ऽऽऽ) नगणौ (।।।) गकारौ (ऽ.ऽ) च भवतस्तद् 'हंसरुतं' नाम ॥ तत्रोदाहरणम्—

---

(१) उक्ताष्टाक्षरप्रस्तारे सर्वगुर्वात्मक आद्यो भेदो **'विद्युन्माला'** इति नाम्ना प्रसिद्धः । **'विज्जूमाला** मत्ता सोला पाए कण्णा चारी लोला । एअंरूअं चारी पाआ भत्ती खत्ती विज्जू राआ ॥' (प्रा० पिं० सू० २।६७) **विद्युल्लेखा** इति नामान्तरम् । एतदतिरिक्तानि **'समानिका-प्रमाणिका-वितान-नाराचक'**-प्रभृतीनि च्छन्दांसि पञ्चमाध्याये समालोच्यानि ।

(२) उक्ताष्टाक्षरप्रस्तारभेदेषु सप्तपञ्चाशत्तमो भेदो (५७) **'हंसरुतं'** इति नाम्ना प्रसिद्धः- लिखितपुस्तकेऽस्य सूत्रस्य नवमत्वेन, भुजगशिशुसृतालक्षणात्मकस्याग्रिमसूत्रस्य चाष्टमत्वेन निर्देशः ।

मगणः नगणः गु० गु० मगणः नगणः गु० गु०
ऽ ऽ ऽ । । । ऽ ऽ ऽ ऽ ऽ । । । ऽ ऽ
लावण्यं वपुषि का-न्ते लोकाती-तमति-सौ-म्यम्।
मगणः नगणः गु०गु० मगणः नगणः गु०गु०
ऽ ऽ ऽ । । । ऽ ऽ ऽ ऽ ऽ । । । ऽ ऽ
नैष्ठुर्यं मनसि य-त्ते द्वैविध्यं किमिति ध-त्से? ॥

**शिवप्रसादिनी**—जिस श्लोक के प्रत्येक पाद में मगण (ऽऽऽ) नगण (।।।) तथा दो दीर्घ वर्ण उपलब्ध हों वह "हंसरूत" वृत्त कहलाता है ॥७॥

([१]बृहत्याम्)

---

(१) अत्र तु द्वावेव भेदौ संदर्शितौ, परन्तु **प्राकृतपिङ्गलच्छन्दःकौस्तुभ**प्रभृतिग्रन्थेषूपलब्धा भेदाः प्रकाश्यन्ते यथा—

**रूपामालीच्छन्दः (९।१)**—'णाआराआ जप्पे सारा ए चारी कृष्णा हंते हारा ए।
अट्ठादाहा मत्ता पाआए **रूआमाली** छंदा जंपीए॥
प्रा० २।८९॥

**'रूपामाला' 'कर्पूरम्'** इति नामान्तरे **रूपामाल्याः** क्वचित्॥

**स्निग्धाच्छन्दः (९।७)**—'**स्निग्धा** स्याद्भममा यत्र हराननयुगैर्यतिः।' (श्रीकृष्णः)

**बिम्बच्छन्दः (९।९६)**—'रइअ फणि **बिंब** एसो गुरुजुअल सव्वसेसो।
सिरहि दिअ मज्झ राओ गुणह गुणि एसहाओ॥'
प्रा० २।८५॥

**'बिम्बा'** इति नामान्तरं क्वचित्। **वाणीभूषणे** तु गणभेदेन **बिम्बलक्षणमुक्तम्**।

**महालक्ष्मीच्छन्दः (९।१४७)**—
'दिट्ठ जोहा गणा तिण्णिआ णाअराएण जा विण्णिआ।
मासअद्धेण पाअ ट्ठिअं जाण मुद्धे **महालच्छिअं**॥'
प्रा० २।७७॥ **'वीरलक्ष्मी'** नामान्तरमस्य।

**कुसुमिताच्छन्दः (९।१५२)**—'**कुसुमिता** नरौ रो यदा।' क्वचित्।

**भुजङ्गसंगताच्छन्दः (९।१७२)**—'सजरै**र्भुजङ्गसंगता**।' छन्दःकौस्तुभे।

**भद्रिकाच्छन्दः (९।१८७)**—'**भद्रिका** भवति रो नरौ' वृत्तरत्नाकरे।

**मणिमध्यच्छन्दः (९।१९९)**—'स्यान्**मणिमध्यं** चेद्भमसाः।' छन्दःकौस्तुभे।
**'मणिबन्ध'** इति श्रुतबोधे।

**सारङ्गिकाच्छन्दः (९।२०८)**—'दिअवर कण्णो सअणं पअ पअ मत्तागणणं।
सुरमुणिमत्ता लहिअं सहि **सरगिक्का** कहिअं॥'
प्रा० २।७९॥

## [१]भुजगशिशुसृता नौ म् ।।६।८।।

**मृतसञ्जीवनी**—यस्य पादे नकारौ (।।।.।।।) मकार (ऽऽऽ) श्च भवति, तत् 'भुजगशिशुसृता' नाम वृत्तम् ।। तत्रोदाहरणम्—

नगणः नगणः मगणः नगणः नगणः मगणः
। । । । । । ऽ ऽ ऽ । । । । । । ऽ ऽ ऽ
इयम-धिकत-रं(७),रम्या विकच—कुवल—य(७),-श्यामा ।
नगणः नगणः मगणः नगणः नगणः मगणः
। । । । । । ऽ ऽ ऽ । । । । । । ऽ ऽ ऽ
रमय—ति हृद-यं(७),यूनां भुजग-शिशुसृ-ता(७), नारी ।।

वक्रगतिरित्यर्थः ।। शिशुशब्दस्य सार्थकत्वात् । अन्यैरप्युक्तम्—

'अभ्यस्यता नु तरणीगतिवक्रभावा-
नुन्मूलिताः फणिशिशोर्भवतापराधाः ।' इति

**सप्तभिर्द्वाभ्यां च यतिरित्याम्नायः ।।**

**शिवप्रसादिनी**—जिस छन्द के प्रत्येक पाद में दो नगण (।।।-।।।) और एक

---

**'सारसा, शार्ङ्गिका'** इत्यपि नामान्तरे **सारङ्गिकायाः** क्वचित् ।

**पाइत्ताच्छन्दः (९।२४१)**—'कुंतीपुत्ताजुअ लहिअं तीए विप्पो धुअ कहिअं।
अंते हारो जह जणिअं **पाइत्तारू** फणिभणिअं ।।
प्रा० २।८१ ।।

**'कुसुमवती, 'पवित्रा,' 'पारन्तीयम्'** इति नामान्तराणि **पाइत्ताख्यस्य** ।

**तोमरच्छन्दः (९।३४४)**—'जसु आइ हत्थ विआण तह ब पओहर जाण।
पभणेइ णाअणरिंद इम माणु **तोमरछंद** ।।'
प्रा० २।८७ ।।

**कमलच्छन्दः (९।५१२)**—'सरसगणरमणिआ दिअगणजुअ पलिआ ।
गुरु धरिअ पइपउ दहकलअ **कमलउ** ।।'
प्रा० २।८३ ।।

**'कमला'** इत्यपि नामान्तरं **कमलस्य** क्वचित् ।

(१) चतुष्पादार्षबृहतीपादघटकीभूतानां नवाक्षराणां प्रस्तारे क्रियमाणे द्वादशाधिकपञ्च-शतभेदा (५१२) भवन्ति। तत्र (६४) चतुःषष्टितमोऽयं भेदो **'भुजगशिशुसृता'** इति नाम्ना प्रसिद्धः, अस्या एव **'भुजगशिशुभृता'**, **'भुजगशिशुयुता'**, **'भुजग-शिशुवृता'**, **'भुजगशिशुसुता'** इति नामान्तराणि छन्दःकौस्तुभादौ लभ्यन्ते। गारुडे तु **'शिशुभृता'** इत्येव, 'नौ मः **शिशुभृता** भवेत् ।' (१।२०९।५) इति।

मगण (ऽऽऽ) होते हैं, वह छन्द ''भुजगशिशुभृता'' नाम वाली होती है । इस छन्द में सात एवं दो अक्षरों पर यति हुआ करती है ॥८॥

## [1]हलमुखीर्नौ स् ॥६।९॥

**मृतसञ्जीवनी**—यस्य पादे रेफ (ऽ।ऽ) नकार (।।।) सकारा (।।ऽ) भवन्ति तद्वृत्तं 'हलमुखी' । तत्रोदाहरणम्—

रगणः नगणः सगणः रगणः नगणः सगणः
ऽ ।ऽ ।।। ।।ऽ ऽ।ऽ ।।। ।।ऽ
गण्डयो(३),-रतिश-यकृशं(६) यन्मुखं(३), प्रकट-दशनम् (६) ॥

रगणः नगणः सगणः रगणः नगणः सगणः
ऽ ।ऽ ।।। ।।ऽ ऽ।ऽ ।।। ।।ऽ
आयतं(३), कलह-निरतं(६) तां स्त्रियं(३), त्यज ह-लमुखीम्(६) ॥

**त्रिभिः षड्भिश्च यतिरित्याम्नायः ।**

**शिवप्रसादिनी**—जिस श्लोक के प्रत्येक पाद में रगण (ऽ।ऽ) नगण (।।।) एवं सगण (।।ऽ) मिलते हों, वह छन्द ''हलमुखी'' नाम वाला होता है । इस छन्द में तीन और छः अक्षरों पर यति होगा ॥९॥

([2]पङ्क्तौ)

---

(१) उक्तनवाक्षरप्रस्तारस्यैकपञ्चाशदधिकद्विशततमोऽयं भेदो (२५१) **'हलमुखी'** ति नाम्ना ख्यातः । कलिकातामुद्रिते प्राचीनपुस्तके हंसरुतलक्षणसूत्रस्यास्मात् सूत्रात् प्रथमं निर्देशः । ''हलमुखीति संज्ञात्वेऽपि पिप्पल्यादेराकृतिगणत्वात् ङीप् भवतीति 'नखमुखात् संज्ञायाम्—' (पा०सू० ४।१।५८) इत्यस्य न प्रवृत्तिः ।''–इति वेङ्कटाचलसूरिः ।

(२) **पङ्क्तिच्छन्दः**पादघटकीभूतानां दशाक्षराणां प्रस्तारे क्रियमाणे चतुर्विंशत्यधिकसहस्रभेदा (१०२४) जायन्ते । तेष्वत्र षडेव भेदाः प्रदर्शिताः सन्ति, परंतु प्राकृतपिङ्गलच्छन्दः कौस्तुभादिग्रन्थेषूपलभ्यमाना भेदा अपि प्रदर्श्यन्ते । यथा—

**कलगीतच्छन्दः (१०।१००)**—**'कलगीतं सतयगाः** शरैर्बाणैर्यतिर्भवेत्' । मं०म० ।

**आन्दोलिकाच्छन्दः (१०।१२९)**—'आन्दोलिका ततरगाः सायकैः सायकैर्यतिः ।' मं०म० ॥

**त्रयीच्छन्दः (१०।१४७)**—'रस्त्रयश्चेत्**त्रयी**नामकं गः ।' अ०वृ०र० ॥

**दीपकमालाच्छन्दः (१०।३२७)**—**'दीपकमाला** भो मजौ गुरुः ।' क्वचित् ।

**पथ्याच्छन्दः (१०।३३१)**—'रो यजौ च **पथ्या** गुरूत्तरा ।' **'लोचनं'** इति क्वचित् । **'मरालिका'** इति नामान्तरं 'शिवाननशरैर्यतिः' इति विशेषश्च कृष्णीये ।

## [1]शुद्धविराट् म्सौ ज्गौ ।।६।१०।।

**मृतसञ्जीवनी**—यस्य पादे मकार (ऽऽऽ) सकार (।।ऽ) जकार (।ऽ।) गकारा (ऽ) भवन्ति तद्वृतं 'शुद्धविराड्' नाम ।। तत्रोदाहरणम्—

मगणः सगणः जगणः गु० मगणः सगणः जगणः गु०
ऽ ऽ ऽ । । ऽ । ऽ । ऽ ऽ ऽ ऽ । । ऽ । ऽ । ऽ
विश्वं ति-ष्ठति कु-क्षिकोट-रे वक्रे य-स्य सर-स्वती स-दा ।
मगणः सगणः जगणः गु० मगणः सगणः जगणः गु०
ऽ ऽ ऽ । । ऽ । ऽ । ऽ ऽ ऽ ऽ । । ऽ । ऽ । ऽ
अस्मद्‌द्वं-शपिता-महा गु-रुर् ब्रह्मा शु-द्धविराट् पुनातु नः ।

---

**मनोरमाच्छन्दः (१०।३४४)**—'नरजगैर्भवेन्मनोरमा ।' छन्दःकौस्तुभे ।
'शास्त्रसागरैः ।' इति यतिरप्युक्तः कृष्णीये ।

**कमलाच्छन्दः (१०।३६४)**—'**कमला** स्यात्सज्ञगगा विच्छिन्ना सायकैः शरैः ।'
मं०म० ।

कमलाया एव '**संयुता**' इति नाम प्राकृतपिङ्गले ।

**सुषमाच्छन्दः (१०।३९७)**—
'कण्णो पढमो हत्थो जुअलो कण्णो तिअलो हत्थो पअलो ।
सोला कलआ छक्का वलआ एसा **सुसमा** दिट्ठासुसमा ।।'
प्रा० २।९७ ।।

**माणिक्यमालाच्छन्दः (१०।४००)**—
'न्यभा **माणिक्यमाला** गावृतुभिः सायकैर्यतिः ।' मं० म० ।।

**सारवतीच्छन्दः (१०।४३९)**—'दीह लहूजुअ दीहलहू **सारवई** धुअ छंद कहू ।
अंत पओहर ठानु धआ चोदहमत्तविरामकआ ।।'
प्रा० २।९५ ।।

'**हारवती**' इत्यपि नामान्तरं **सारवत्याः** ।

**अमृतगतिच्छन्दः (१०।४९६)**—'दिअवर हार पअलिआ पुण वि तह ट्ठिअ करिआ । वसुलहु वे गुरुसहिआ **अमिअगइ**, धुअ कहिआ ।' प्रा० २।९१।
'**त्वरितगतिः, अमृततिलका, अमृतगतिका**' इति नामान्तराणि अमृतगतेः । '**कुलटा**' इति कृष्णीये । 'कलटा स्यान्नजनगाः पञ्चभिः पञ्चभिर्यतिः ।' इति विशेषश्च तत्र ।

**हंसीच्छन्दः (१०।४९७)**—'**हंसी** मभनगैः प्रोक्ता यतिर्वेदैर्गुहाननैः ।' कृष्णीये ।

**रञ्जिताच्छन्दः (१०।७४७)**—'**रञ्जिता** रजसा लो गो विरामः सायकर्तुभिः । मं०म० ।।

(१) उक्तदशाक्षरप्रस्तारस्य पञ्चचत्वारिंशदुत्तरत्रिशततमोऽयं भेदः (३४५) '**शुद्ध विराट्**' नाम्ना प्रसिद्धः । '**विराट्**' इत्यपि नामान्तरं क्वचित् ।

**अत्र पादान्ते यतिः ।।**

**शिवप्रसादिनी**—जिस छन्द के प्रत्येक पाद में मगण (ऽऽऽ) सगण (।।ऽ) और अन्त्य गुरू (ऽ) वर्ण उपलब्ध हों वह वृत्त ''शुद्धविराम'' सञ्ज्ञा को धारण करता है। इस छन्द के पादान्त में यति होगी ।। १०।।

## [१]पणवो म्नौ यगौ ।।६।११।।

**मृतसञ्जीवनी**—यस्य पादे मकार (ऽऽऽ) नकार (।।।) यकार (।ऽऽ) गकारा (ऽ) भवन्ति तद्वृत्तं 'पणवो' नाम ।। तत्रोदाहरणम्—

मगणः　नगणः　यगणः　गु०　मगणः　नगणः　यगणः　गु०
ऽ ऽ ऽ　। । ।　। ऽ ऽ　ऽ　ऽ ऽ ऽ　। । ।　। ऽ ऽ　ऽ
मीमांसा-रस(५),-म-मृतं पी-त्वा　शास्त्रोक्तिः कटु(५),-रि-तरा भा-ति ।
मगणः　नगणः　यगणः　गु०　मगणः　नगणः　यगणः　गु०
ऽ ऽ ऽ　। । ।　। ऽ ऽ　ऽ　ऽ ऽ ऽ　। । ।　। ऽ ऽ　ऽ
एवं सं-सदि(५),-वि-दुषां म-ध्ये　जङ्गमो जय(५),-प-णबन्ध-त्वात् ।।

अत्र **पञ्चभिः पञ्चभिर्यतिरित्याम्नायः** ।।

**शिवप्रसादिनी**—जिस श्लोक के प्रत्येक पाद में मगण (ऽऽऽ) नगण (।।।) यगण (।ऽऽ) और एक गुरू (ऽ) वर्ण क्रमिक रूप में उपलब्ध हों, तो वह वृत्त ''पणव'' नाम वाला होता है । इस छन्द में पाँच-पाँच अक्षरों पर यति होती है ।।११।।

## [२]रुक्मवती भ्मौ स्गौ ।।६।१२।।

**मृतसञ्जीवनी**—यस्य पादे भकार (ऽ।।) मकार (ऽऽऽ) सकार (।।ऽ) गकारा (ऽ) भवन्ति तद्वृत्तं 'रुक्मवती' नाम ।। तत्रोदाहरणम्—

भगणः　मगणः　सगणः　गु०　भगणः　मगणः　सगणः　गु०
ऽ । ।　ऽ ऽ ऽ　। । ऽ　ऽ　ऽ । ।　ऽ ऽ ऽ　। । ऽ　ऽ
पादत-ले पद्मो-दरगौ-रे　राजति यस्या ऊ-र्ध्वगरे-खा ।

---

(१) उक्तदशाक्षरप्रस्तारस्यैकविंशत्यधिकशततमोऽयं भेदः (१२१) **'पणव'** नाम्ना ख्यातः । **'प्रणव'** इत्यपि नामान्तरम् । (२) उक्तदशाक्षरप्रस्तारस्य नवनवत्यधिकशततमोऽयं भेदो (१९९) **'रुक्मवती'** नाम्ना प्रसिद्धः । अस्या नामान्तराणि यथा—**'रूपवती'** इति छन्दोमञ्जरी, **'विलाश'** क्वचित्, **'चम्पकमाला'** प्राकृतपिङ्गले । तल्लक्षणं यथा—
'हार ठवीजे काहलदुज्जे कंतिअपुत्ता एगुरुजुत्ता ।
हत्थ करीजे हार ठवीजे **चंपकमाला** छंद कहीजे ।।' प्रा० २।९३ ।।
पादान्ते यतिः । 'शरैर्बाणैर्यतिर्भवेत् । इति मन्दारमरन्दे ।

भगणः मगणः सगणः गु० भगणः मगणः सगणः गु०

ऽ ।। ऽ ऽ ऽ ।। ऽ ऽ ऽ ।। ऽ ऽ ऽ ।। ऽ ऽ

सा भव-ति स्त्री ल-क्षणयु-क्ता रुक्मव-ती सौभा-ग्यवती च ॥

**शिवप्रसादिनी**—जिस श्लोक के प्रतिपाद में भगण (ऽ।।) मगण (ऽऽऽ) सगण (।।ऽ) और एक-एक दीर्घाऽक्षर हों, वह ''रूक्मवती'' वृत्त कहा जाता है। इस छन्द के पाद्यन्त में यति होती है ॥१२॥

## [१]मयूरसारिणी जौं गौं ।।६।१३।।

**मृतसञ्जीवनी**—यस्य पादे रेफ (ऽ।ऽ) जकारौ (।ऽ।) रेफ (ऽ।ऽ) गकारौ (ऽ) च, तद्वृत्तं 'मयूरसारिणी' नाम ॥ तत्रोदाहरणम्—

रगणः जगणः रगणः गु० रगणः जगणः रगणः गु०

ऽ।ऽ ।ऽ। ऽ।ऽ ऽ ऽ।ऽ ।ऽ। ऽ।ऽ ऽ

या वना-न्तराण्यु-पै-ति र-न्तुं या भुज-ङ्गभोग-सक्तचि-त्ता ।

रगणः जगणः रगणः गु० रगणः जगणः रगणः गु०

ऽ।ऽ ।ऽ। ऽ।ऽ ऽ ऽ।ऽ ।ऽ। ऽ।ऽ ऽ

या द्रुतं प्रयाति सन्नतां-सा तां मयू-रसारि-णीं विज-ह्यात् ॥

**अत्र पादान्ते यतिः ।।**

**शिवप्रसादिनी**—जिस वृत्त के प्रत्येक पाद में रगण (ऽ।ऽ) जगण (।ऽ।) रगण (ऽ।ऽ) तथा अन्तिम वर्ण गुरू सञ्ज्ञक उपलब्ध हो, वह वृत्त 'मयूरसारिणी' के नाम से व्यवहार किया जाता है। इस छन्द के पादान्त में यति होती है ॥१३॥

## [२]मत्ता म्भौ स्गौ ।।६।१४।।

**मृतसञ्जीवनी**—यस्य पादे मकार (ऽऽऽ) भकार (ऽ।।) सकार (।।ऽ) गकाराः (ऽ), तद्वृत्तं 'मत्ता' नाम । तत्रोदाहरणम्—

मगणः भगणः सगणः गु० मगणः भगणः सगणः गु०

ऽ ऽऽ ऽ ।। ।।ऽ ऽ ऽऽ ऽ ऽ ।। ।।ऽ ऽ

स्वैरोल्ला-पैः(४), श्रुति-पटुपे-यैर्(६) गीतक्री-डा(४),सुर-तविशे-षैः(६) ।

---

(१) उक्तदशाक्षरप्रस्तारस्यैकसप्तत्यधिकशततमोऽयं भेदो **'मयूरसारिणीनाम्ना'** प्रसिद्धः ।

(२) उक्तदशाक्षरप्रस्तारस्यैकचत्वारिंशाधिकद्विशततमोऽयं भेदो (२४१) **'मत्ता'** नाम्ना प्रसिद्धः ।

मगणः भगणः सगणः गु० मगणः भगणः सगणः गु०
ऽ ऽ ऽ ऽ ।। ।।ऽ ऽ ऽऽ ऽ ऽ ।। ।।ऽ ऽ
वासागा-रे(४), कृत-सुरता-नां(६) मत्ता ना-री(४), रम-यति चे-तः (६) ॥

**चतुर्भिः षड्भिश्च यतिरित्याम्नायः ॥**

**शिवप्रसादिनी**—जिसके प्रत्येक पाद में मगण (ऽऽऽ) भगण (ऽ।।) सगण (।।ऽ) तथा अन्त्यगुरू वर्ण हों, वह वृत्त "मत्ता" नाम वाला होता है। इस छन्द में चार अक्षरों एवं छः अक्षरों पर यति उपस्थित होती है ॥१४॥

## [१]उपस्थिता त्जौ ज्गौ ॥६।१५॥

**मृतसञ्जीवनी**—यस्य पादे तकार (ऽऽ।) जकारौ (।ऽ।), जकार (।ऽ।) गकारौ (ऽ) च, तद्वृत्तं 'उपस्थिता' नाम। तत्रोदाहरणम्—

तगणः जगणः जगणः गु० तगणः जगणः जगणः गु०
ऽ ऽ । ।ऽ। ।ऽ। ऽ ऽ ऽ । ।ऽ। ।ऽ। ऽ
एषा(२), ज-गदेक-मनोह-रा(८) कन्या(२), क-नकोज्ज्व-लदीधि-तिः(८)।

तगणः जगणः जगणः गु० तगणः जगणः जगणः गु०
ऽ ऽ । । ऽ। ।ऽ। ऽ ऽ ऽ । ।ऽ। ।ऽ। ऽ
लक्ष्मी(२),-रि-व दान-वसूद-नं(८) पुण्यै(२),-र्न-रनाथ-मुपस्थि-ता(८) ॥

**अत्र द्वाभ्यामष्टाभिश्च यतिरित्याम्नायः ॥**

**शिवप्रसादिनी**—जिस छन्द के प्रतिपाद में तगण (ऽऽ।) दो जगण (।ऽ।-।ऽ।) तथा अन्तिम में एक गुरू अक्षर हो, तो उसे "उपस्थिता" वृत्त के नाम से कहा जाता है। इस छन्द के अन्तर्गत दो और आठ अक्षरों पर यति होती है ॥१५॥

([२]त्रिष्टुभि)

## [३]इन्द्रवज्रा तौ ज्गौ ग् ॥६।१६॥

---

(१) उक्तदशाक्षरप्रस्तारस्य पञ्चषष्ट्यधिकत्रिशततमोऽयं भेदः (३६५) **'उपस्थिता'** नाम्ना प्रसिद्धः।

(२) त्रिष्टुप्पादघटकीभूतानामेकादशाक्षराणां प्रस्तारे कृतेऽष्टचत्वारिंशाधिका द्विसहस्रभेदा (२०४८) जायन्ते। तेषु द्वादश भेदा एवात्र निर्दिष्टाः, परं प्राकृतपिङ्गलच्छन्दः-कौस्तुभप्रभृतिग्रन्थेषूपलब्धा बहुशो भेदाः प्रकाश्यन्ते यथा—

(३) उक्तैकादशाक्षरप्रस्तारस्य सप्तपञ्चाशदधिकत्रिशततमोऽयं (३५७) भेदः **'इन्द्रवज्रा'** इति नाम्ना प्रसिद्धः। एतल्लक्षणं प्राकृतपिङ्गले यथा—

'दिज्जे तआराजुअला पएसु अंते णरेंदो गुरुजुग्ग सेसं।
जंपे फणिंदा धुअ **'इदंवज्जा'** मत्ता दहा अट्ठ समा सुसज्जा ॥' (२।११५)
'हरास्यर्तुभिर्यतिः ।' इति विशेषः कृष्णीये ।

**मालतीच्छन्दः (११।१)**—
'कुंतीपुत्ता पंचा दिण्णा जाणीआ अंते कंता एक्का हारा माणीआ ।
पाआ पाआ मत्ता दिट्ठा बाईसा **मालत्तीछंदा** जंपंता णाएसा ॥'
प्रा० २।११३ ॥

**राजहंसीच्छन्दः (११।१५२)**—'**राजहंसी** नरौ रो गौ यतिः स्यादृतुसायकैः ॥' कृष्णीये.

**कुपुरुषजनिताच्छन्दः (११।१९२)**—'**कुपुरुषजनिता** ननौर्गौ गः ॥'
वृ०र०परि०.

**उपस्थितच्छन्दः (११।२८६)**—'**उपस्थितमिदं** जः सस्तगौ गः ॥'
वृत्तसारप्रभृतिषु.

**'शिखण्डितम्'** इति नामान्तरम् **उपस्थितच्छन्दसः** छन्दःकौस्तुभादौ.

**विध्वङ्कमालाच्छन्दः (११।२९६)**—'**विध्वङ्कमाला** भवेत्तौ तगौ गः ॥'
वृ०र०परि०

**चन्द्रिकाच्छन्दः (११।३२०)**—'ननगगलगगैश्चन्द्रिका स्यात् ॥' वृत्तसारे.

**मेरुरूपाच्छन्दः (११।३४५)**—'मः सो जो गुरुयुग्म**मेरुरूपा**।' वृत्तसारे.

**गुणाङ्गीच्छन्दः (११।३५३)**—'म्तौ ज्गौ गः स्यादब्धिनगैर्**गुणाङ्गी** ॥' अ०वृ०र०

**वन्दिताच्छन्दः (११।३६३)**—'नरगजा गुरुर्**वन्दिता** मता ॥' वृत्तसारे. **'कामिनी'** **'भद्रिका'** इति नामान्तरे ।

**अनवसिताच्छन्दः (११।४००)**—'**अनवसिता** न्यौ भ्गौ गुरुरन्ते ॥' वृत्तरत्नाकरे.

**बन्धुच्छन्दः (११।४३९)**—
'णीलसरूअह एक करीजे तिण्णि भआगण तत्थ भणीजे ।
सोलह मत्तह पाअ ठवीजे दुग्गुरु अंतहि **बंधु** कहीजे ॥'
प्रा० २।१०१ ॥

**अनुकूलाच्छन्दः (११।४८७)**—'स्याद**नुकूला** भतनगगाश्चेत् ।'

अस्या एवानुकूलायाः **'मौक्तिकमाला'** इति वृत्तरत्नाकरे, **'श्रीः'** इति वृत्तसारे गारुडे च नामान्तरे । 'पञ्चभिः षड्भिरेव च' इति यतिरप्युक्ता गारुडे पू० २०९।१०॥

**मन्दाकिनीच्छन्दः (११।५८६)**—'त्रिभिर्यैर्लगाभ्यां च **मन्दाकिनी** ॥' अ०वृ०र०॥

**सुभद्रिकाच्छन्दः (११।७०४)**—'ननरलगुरुभिः **सुभद्रिका** ॥' छन्दः कौस्तुभादौ.

**उपचित्रच्छन्दः (११।७३२)**—'**उपचित्रमिदं** सससा लगौ ॥' वृत्तरत्नाकरे.

**नन्दिनीच्छन्दः (११।७४८)**—'**नन्दिनी** सजसैर्ल्गाभ्यां युक्ता बाणर्तुभेदिना ॥' कृष्णीये ।

**मृतसञ्जीवनी**—यस्य पादे तकारौ (ऽऽ।.ऽऽ।) जकार (।ऽ।) गकारौ (ऽ) गकार (ऽ) श्च, तद्वृत्तं 'इन्द्रवज्रा' तत्रोदाहरणम्—

तगणः तगणः जगणः गु० गु० तगणः तगणः जगणः गु० गु०
ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ
यस्यां त्रि-षट्सप्त-ममक्ष-रं स्याद् ह्रस्वं सु-जङ्घे! न-वमं च त-द्वत्।
तगणः तगणः जगणः गु० गु० तगणः तगणः जगणः गु० गु०
ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ
गत्या वि-लक्षीकृ-तहंस—का-न्ते! तामिन्द्र-वज्रां ब्रु-वते क-वी-न्द्राः ॥

(श्रु०बो० २१)

अपि च—

तगणः तगणः जगणः गु० गु० तगणः तगणः जगणः गु० गु०
ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ ऽऽ । ऽ ऽ । । ऽ । ऽ ऽ
ये दुष्ट-दैत्या इ–ह भूमि–लो–के द्वेषं व्य-धुर्गोद्वि—जदेव–स–ङ्घेः।
तगणः तगणः जगणः गु० गु० तगणः तगणः जगणः गु० गु०
ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ
तानिन्द्र-वज्राद-पि दारु-णा-ङ्गान् व्याजीव-यद्यः[1] स-ततं न-म-स्ते ॥

तथा—

---

**धारावलिकाच्छन्दः (११।७८९)**—'तोरस्तलौ गुरुर्धारावलिका ॥' वृत्तसारे

**मोटनकच्छन्दः (११।८७७)**—'स्यान्मोटनकं तजजाश्च लगौ ॥'

**सुमुखीच्छन्दः (११।८८०)**—

'दिअवर हार लहूजुअला वलअ परिट्ठिअ हत्थअला।
पअ कल चोदह जंप अही कइवर जाणइ सो **सुमुही** ॥'
प्रा० २।१०३ ॥

अस्यां 'पृषत्कत्र्त्तुभिर्यतिः।' इति कृष्णः।

**दमनकच्छन्दः (११।१०२४)**—

'दिअवरजुअ लहुजुअलं पअ पअ पअलिअवलअं।
चउपद चउवसुकलअं **दमणअ** फणि भण ललिअं ॥'
प्रा० २।१०९ ॥

**सान्द्रपदच्छन्दः (११।१५११)**—'**सान्द्रपदं** भ्तौ नगलघुभिश्च ॥' छन्दःकौस्तुभादौ।

(१) 'प्राजीजपत्' इति स्यात्। 'जि अभिभवे' (धा० पा० १।९४६) इत्यस्माण्णिजन्ताल्लुङ्।

तगण: तगण: जगण:गु०गु० तगण: तगण: जगण: गु०गु०

ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

[1]गोब्राह्म-णस्त्रीव्र-तिभिर्वि-रु-द्धं मोहात्क-रोत्यल्प-मतिर्नृ-पो य: ।

तगण: तगण: जगण: गु०गु० तगण: तगण: जगण: गु० गु०

ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

तस्येन्द्र-वज्राभि-हतस्य पा-त: क्षोणीध-रस्येव भवत्य-व-श्यम् ॥

पादान्ते यति: ॥

**शिवप्रसादिनी**—जिस छन्द के प्रतिपाद दो तगण (ऽऽ।-ऽऽ।) एक जगण (।ऽ।) तथा अन्त में दो गुरू वर्णों से समाविष्ट हो, वह ''इन्द्रवज्रा'' नामक वृत्त होता है । इस छन्द के पादान्त में यति लगता है ॥१६॥

## [2]उपेन्द्रवज्रा ज्तौ ज्गौ ग् ।।६।१७।।

**मृतसञ्जीवनी**—यस्य पादे जकार (।ऽ।) तकार (ऽऽ।) जकारा (।ऽ।) गकारो (ऽ.ऽ) च, तद्वृतम् 'उपेन्द्रवज्रा' नाम ॥ तत्रोदाहरणम्—

जगण: तगण: जगण: गु०गु० जगण: तगण: जगण:गु० गु०

। ऽ । ऽ ऽ । । ऽ । ऽ ऽ । ऽ । ऽ ऽ । । ऽ । ऽ ऽ

भवन्न-खा: कुन्द-दलश्रि-यो ये नमन्ति लक्ष्मीस्त-नलेख-ने-ऽपि ।

जगण: तगण: जगण: गु०गु० जगण: तगण: जगण: गु० गु०

। ऽ । ऽ ऽ । । ऽ । ऽ ऽ । ऽ । ऽ ऽ । । ऽ । ऽ ऽ

उपेन्द्र!-वज्राधि-ककर्क-श-त्वं कथं ग—तास्ते रि-पुदार-णा-याम्? ॥

अत्र पादान्ते यति: ॥

**शिवप्रसादिनी**—जिस छन्द के प्रत्येक पाद जगण (।ऽ।) तगण (ऽऽ।) जगण (।ऽ।) और अन्त में दो दीर्घ वर्णों से समन्वित हो, वह छन्द ''उपेन्द्रवज्रा'' कहलाता है । यहाँ पर भी पादान्त यति का नियम है ॥१७॥

## आद्यन्तावुपजातय: ।।६।१८।।

---

(१) 'गोब्राह्मणस्त्री' इत्यादि पद्यमेकमेवोदाहृतं लि. पुस्तके ।

(२) उक्तैकादशाक्षरप्रस्तारस्याष्टपञ्चाशदधिकत्रिशततमोऽयं (३५८) भेद: **'उपेन्द्रवज्रा'** इति नाम्ना प्रसिद्ध: । एतल्लक्षणं प्राकृतपिङ्गले यथा—

'णरेंद एक्का तअणा सुसज्जा पओहरा कण्णगणा मुणिज्जा ।

**उविंदवज्जा** फणिराअदिट्ठा पढंति छेआ सुहवण्णसट्ठा ॥' (२।११७)

'बाणऋतुभिर्यति: ।' इति मन्दारमरन्दे । **'उपेन्द्रमाला'** इति नामान्तरमुपजाते: कृष्णीये ।

**मृतसञ्जीवनी**—'आद्यन्तौ'-इति अनन्तरोक्तौ इन्द्रवज्रोपेन्द्रवज्रयोः पादावाह। तौ यदा विकल्पेन यथेष्टं भवतस्तदा 'उपजातयः'[१] प्रस्तारवशाच्चतुर्दशप्रकारा जायन्ते। तत्रोदाहरणम्—

उपेन्द्रवज्रा — उपेन्द्रवज्रा

जगणः तगणः जगणः गु० गु० जगणः तगणः जगणः गु० गु०

ऽऽ। ऽऽ। । ऽ। ऽ ऽ ऽऽ। ऽऽ। ।ऽ। ऽ ऽ

अत्रोप-जातिर्वि-विधा वि-द-ग्धैः संयोज्य[२]-ते तु व्य-वहार-का–ले।

इन्द्रवज्रा — इन्द्रवज्रा

जगणः तगणः जगणः गु० गु० जगणः तगणः जगणः गु० गु०

।ऽ। ऽऽ। ।ऽ। ऽ ऽ ।ऽ। ऽऽ। ।ऽ। ऽ ऽ

अतः प्र-यत्नः प्र-थमं वि-धे-यो नृपेण पुंरत्न–परीक्ष—णा—य॥

एवमन्यान्यप्युपजात्युदाहरणानि कुमारसम्भवादिकाव्येषु द्रष्टव्यानि। समवृत्तप्रस्तावे प्रसङ्गादुपजातीनामुपन्यासो लाघवार्थः। केचिदिदं सूत्रं न्यायोपलक्षणपरं व्याचक्षते। तेन

---

(१) उपजायतश्च प्रस्तारगत्या चतुर्दश भवन्ति. तन्नामलक्षणोदाहरणादीनि प्रदर्श्यन्ते यथा—

(२) 'प्रयोज्यते तव्द्यवहारकाले' इति षष्ठः।

'**कीर्ति** (१) **वाणी** (२) **माला** (३) **शाला** (४)
**हंसी** (५) **माया** (६) **जाया** (७) **वाला** (८)।
**आर्द्रा** (९) **भद्रा** (१०) **प्रेमा** (११) **रामा** (१२)
**ऋद्धि** (१३) **बुद्धि** (१४) स्तासां नामानि (प्रा०पि०सू० २।१२२)—

**(१) कीर्तिः—**

यथा—

उपेन्द्रवज्रा — इन्द्रवज्रा

जगणः तगणः जगणः गु० गु० तगणः तगणः जगणः गु० गु०

।ऽ। ऽऽ। ।ऽ। ऽ ऽ ऽ ऽ। ऽऽ। ।ऽ। ऽ ऽ

स मानु-षीं मेरु-सखः पि-तृ-णां तद्व्या कु-लस्यस्थि-तये स्थि-ति-ज्ञः।

इन्द्रवज्रा — इन्द्रवज्रा

तगणः तगणः जगणः गु० गु० तगणः तगणः जगणः गु० गु०

ऽऽ। ऽऽ। । ऽ। ऽ ऽ ऽऽ। ऽऽ। ।ऽ। ऽ ऽ

मेनां मु-नीनाम-पि मान-नी–या- मात्मानु-रूपां वि-धिनोप-ये-मे॥

(कुमारसं० १।१८)

(२) **वाणी**—यथा—

इन्द्रवज्रा — उपेन्द्रवज्रा

तगणः तगणः जगणः गु० गु० — जगणः तगणः जगणः गु० गु०

ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ — । ऽ । ऽ ऽ । । ऽ । ऽ ऽ

यः पूर-यन्कीच-करन्ध्र-भा-गान् दरीमु-खोत्थेन समीर-णे-न ।

इन्द्रवज्रा — इन्द्रवज्रा

तगणः तगणः जगणः गु० गु० — तगणः तगणः जगणः गु० गु०

ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ — ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

उद्गास्य-तामिच्छ-ति किन्न-रा-णां तानप्र-दायित्व-मिवोप-ग-न्तुम् ॥

(कुमारसं० १।८)

(३) **माला**—यथा—

उपेन्द्रवज्रा — उपेन्द्रवज्रा

जगणः तगणः जगणः गु० गु० — जगणः तगणः जगणः गु० गु०

। ऽ । ऽ ऽ । । ऽ । ऽ ऽ — । ऽ । ऽ ऽ । । ऽ । ऽ ऽ

कपोल-कण्डूः क-रिभिर्वि-ने-तुं विघट्टि-तानां स-रलद्रु-मा-णाम् ।

इन्द्रवज्रा — इन्द्रवज्रा

तगणः तगणः जगणः गु० गु० — तगणः तगणः जगणः गु० गु०

ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ — ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

यत्र स्नु-तक्षीर-तया प्र-सू-तः सानूनि गन्धः सु-रभीक-रो-ति ॥

(कुमारसं० १।९)

(४) **शाला**—यथा—

इन्द्रवज्रा — इन्द्रवज्रा

तगणः तगणः जगणः गु० गु० — तगणः तगणः जगणः गु० गु०

ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ — ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

उद्वेज-यत्यङ्गु-लिपार्ष्णि-भा-गान् मार्गे शि-लीभूत-हिमेऽपि य-त्र ।

उपेन्द्रवज्रा — इन्द्रवज्रा

जगणः तगणः जगणः गु० गु० — तगणः तगणः जगणः गु० गु०

। ऽ । ऽ ऽ । । ऽ । ऽ ऽ — ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

न दुर्व-हश्रोणि-पयोध-रा-र्ता भिन्दन्ति मन्दां ग-तिमश्व-मु-ख्यः ॥

(कुमारसं० १।११)

**(५) हंसी—**

यथा—

उपेन्द्रवज्रा — जगणः तगणः जगणः गु० गु० — । ऽ । ऽ ऽ । । ऽ । ऽ ऽ

इन्द्रवज्रा — तगणः तगणः जगणः गु० गु० — ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

पदं तु-षारस्रु-तिधौत-र-क्तं यस्मिन्न-दृष्ट्वापि हतद्वि-पा—नाम्।

उपेन्द्रवज्रा — जगणः तगणः जगणः गु० गु० — । ऽ । ऽ ऽ । । ऽ । ऽ ऽ

इन्द्रवज्रा — तगणः तगणः जगणः गु० गु० — ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

विदन्ति मार्गं न खरन्ध्र-मु-क्तै मुर्क्ताफ-लैः केस-रिणां कि-रा-ताः ॥

(कुमारसं० १।६)

'विपरीताख्यानिकी—' (पिं०सू० ५।४८) इत्यनुसारेण 'विपरीताख्यानिकी' इति नामान्तरं हंसीच्छन्दसः।

**(६) माया—**

यथा—

उपेन्द्रवज्रा — जगणः तगणः जगणः गु० गु० — । ऽ । ऽ ऽ । । ऽ । ऽ ऽ

उपेन्द्रवज्रा — जगणः तगणः जगणः गु० गु० — । ऽ । ऽ ऽ । । ऽ । ऽ ऽ

प्रसीद विश्राम्य-तु वीर! व-ज्रं शरैर्म-दीयैः क-तमः सु-रा-रिः ?।

उपेन्द्रवज्रा — जगणः तगणः जगणः गु० गु० — । ऽ । ऽ ऽ । । ऽ । ऽ ऽ

इन्द्रवज्रा — तगणः तगणः जगणः गु० गु० — ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

बिभेतु मोघीकृ-तबाहु-वी-र्यः स्त्रीभ्योऽपि कोपस्फु-रिताध-रा-भ्यः ॥

(कुमारसं० ३।९)

**(७) जाया—**

यथा—

इन्द्रवज्रा — तगणः तगणः जगणः गु० गु० — ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

उपेन्द्रवज्रा — जगणः तगणः जगणः गु० गु० — । ऽ । ऽ ऽ । । ऽ । ऽ ऽ

कालक्र-मेणाथ तयोः प्र-वृ-त्ते स्वरूप-योग्ये सु-रतप्र—स-ङ्गे।

उपेन्द्रवज्रा — उपेन्द्रवज्रा

जगणः तगणः जगणः गु० गु० — जगणः तगणः जगणः गु० गु०

।ऽ। ऽऽ। ।ऽ। ऽ ऽ — ।ऽ। ऽऽ। ।ऽ। ऽ ऽ

मनोर-मं यौव-नमुद्व-ह-न्त्या गर्भोऽभ-वद्भूध-रराज-प-त्न्याः ॥

(कुमारसं० १।१९)

(८) बाला—यथा—

इन्द्रवज्रा — इन्द्रवज्रा

तगणः तगणः जगणः गु०गु० — तगणः तगणः जगणः गु० गु०

ऽऽ। ऽऽ। ।ऽ। ऽ ऽ — ऽऽ। ऽऽ। ।ऽ। ऽ ऽ

यं सर्व-शैलाः प-रिकल्प्य व-त्सं मेरौ स्थि-ते दोग्ध-रि दोह-द-क्षे।

इन्द्रवज्रा — उपेन्द्रवज्रा

तगणः तगणः जगणः गु० गु० — जगणः तगणः जगणः गु० गु०

ऽऽ। ऽऽ। ।ऽ। ऽ ऽ — ।ऽ। ऽऽ। ।ऽ। ऽ ऽ

भास्वन्ति रत्नानि महौष-धी-श्च पृथूप-दिष्टां दु-दुहुर्ध—रि-त्रीम् ॥

(कुमारसं० १।२)

(९) आर्द्रा—यथा—

उपेन्द्रवज्रा — इन्द्रवज्रा

जगणः तगणः जगणः गु०गु० — तगणः तगणः जगणः गु०गु०

।ऽ। ऽऽ। ।ऽ। ऽ ऽ — ऽऽ। ऽऽ। ।ऽ। ऽ ऽ

दिवाक-राद्रक्ष-ति यो गु-हा-सु लीनं दि-वाभीत-मिवान्ध-का-रम्।

इन्द्रवज्रा — उपेन्द्रवज्रा

तगणः तगणः जगणः गु०गु० — जगणः तगणः जगणः गु० गु०

ऽऽ। ऽऽ। ।ऽ। ऽ ऽ — ।ऽ। ऽऽ। ।ऽ। ऽ ऽ

क्षुद्रेऽपि नूनं श-रणं प्र-प-न्ने ममत्व-मुच्चैःशि-रसां स-ती-व ॥

(कुमारसं० १।१२)

(१०) भद्रा—यथा—

इन्द्रवज्रा — उपेन्द्रवज्रा

तगणः तगणः जगणः गु० गु० — जगणः तगणः जगणः गु०गु०

ऽऽ। ऽऽ। ।ऽ। ऽ ऽ — ।ऽ। ऽऽ। ।ऽ। ऽ ऽ

अस्त्युत्त-रस्यां दि-शि देव-ता-त्मा हिमाल-यो नाम नगाधि-रा-जः।

इन्द्रवज्रा — उपेन्द्रवज्रा

तगणः तगणः जगणः गु० गु० — जगणः तगणः जगणः गु० गु०

ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ — । ऽ । ऽ ऽ । । ऽ । ऽ ऽ

पूर्वाप-रौ तोय-निधी व-गा-ह्य स्थितः पृ-थिव्या इ-व मान-द-ण्डः ॥

(कुमारसं० १।१)

'आख्यानिकी-' (पिं०सू० ५।३७) इत्यनुसारेण 'आख्यानिकी' इति नामान्तरं भद्राच्छन्दसः।

**(११) प्रेमा—**

यथा—

उपेन्द्रवज्रा — उपेन्द्रवज्रा

जगणः तगणः जगणः गु०गु० — जगणः तगणः जगणः गु०गु०

। ऽ । ऽ ऽ । । ऽ । ऽ ऽ — । ऽ । ऽ ऽ । । ऽ । ऽ ऽ

अनन्त-रत्नप्र-भवस्य य-स्य हिमं न सौभाग्य-विलोपि जा-तम्।

इन्द्रवज्रा — उपेन्द्रवज्रा

तगणः तगणः जगणः गु०गु० — जगणः तगणः जगणः गु०गु०

ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ — । ऽ । ऽ ऽ । । ऽ । ऽ ऽ

एको हि दोषो गु-णसंनि-पा-ते निमज्ज-तीन्दोः कि-रणेष्वि-वा-ङ्कः ॥

(कुमारसं० १।३)

**(१२) रामा—**

यथा—

इन्द्रवज्रा — इन्द्रवज्रा

तगणः तगणः जगणः गु०गु० — तगणः तगणः जगणः गु० गु०

ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ — ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

यश्चाप्स-रोविभ्र-ममण्ड-ना-नां संपाद-यित्रीं शि-खरैर्बि-भ—र्ति।

उपेन्द्रवज्रा — उपेन्द्रवज्रा

जगणः तगणः जगणः गु०गु० — जगणः तगणः जगणः गु० गु०

। ऽ । ऽ ऽ । । ऽ । ऽ ऽ — । ऽ । ऽ ऽ । । ऽ । ऽ ऽ

बलाह-कच्छेद-विभक्त-रा-गा- मकाल-सन्ध्यामि-व धातु-म-त्ताम् ॥

(कुमारसं० १।४)

वंशस्थ-इन्द्रवंशापादयोरपि संकरादु[१]पजातयो भवन्ति। शालिनी-वातोर्मीपादयोः, अन्येषामपि स्वल्पभेदानां प्रयोगानुसारेणोपजातयो ज्ञेयाः।

---

(१३) ऋद्धिः—

यथा—

उपेन्द्रवज्रा — इन्द्रवज्रा

जगणः तगणः जगणः गु० गु० — तगणः तगणः जगणः गु० गु०

ISI SSI ISI S S — SSI SSI ISI S S

प्रसन्न-दिक्पांसु विविक्त-वा-तं शङ्खस्व-नानन्त-रपुष्प-वृ-ष्टि।

उपेन्द्रवज्रा — उपेन्द्रवज्रा

जगणः तगणः जगणः गु० गु० — जगणः तगणः जगणः गु० गु०

ISI SSI ISI S S — ISI SSI ISI S S

शरीरि-णां स्थाव-रजङ्ग-मा-नां सुखाय तज्जन्म-दिनं ब-भू-व॥

(कुमारसं० १।२३)

(१४) बुद्धिः—

यथा—

इन्द्रवज्रा — उपेन्द्रवज्रा

तगणः तगणः जगणः गु० गु० — जगणः तगणः जगणः गु० गु०

SSI SSI ISI S S — ISI SSI ISI S S

यत्रांशु-काक्षेप-विलज्जि-ता-नां यदृच्छ-या किंपु-रुषाङ्ग-ना-नाम्।

उपेन्द्रवज्रा — उपेन्द्रवज्रा

जगणः तगणः जगणः गु० गु० — जगणः तगणः जगणः गु० गु०

ISI SSI ISI S S — ISI SSI ISI S S

दरीगृ-हद्वार-विलम्बि-बि-म्बा- स्तिरस्क-रिण्यो ज-लदा भ-व-न्ति॥

(कुमारसं० १।१४)

(१) अत्र वंशस्थेन्द्रवंशयोरपि प्रस्तारे कृते चतुर्दशधा उपजातयो भवन्ति. तासां स्वरूपोदाहरणादीनि यथाक्रमं प्रकाश्यन्ते, यथा—

प्रथमो भेदः—यथा—

इन्द्रवंशा — वंशस्थम्

तगणः तगणः जगणः रगणः — जगणः तगणः जगणः रगणः

SSI SSI ISI SIS — ISI SSI ISI SIS

किं ब्रूथ रे! व्योम-चरा म-हासुराः स्मरारि—सूनुप्र—तिपक्ष—वर्तिनः।

वंशस्थम् — वंशस्थम्

जगणः तगणः जगणः रगणः — जगणः तगणः जगणः रगणः

।ऽ। ऽऽ। ।ऽ। ऽ।ऽ — ।ऽ। ऽऽ। ।ऽ। ऽ।ऽ

मदीय-बाणव्र-णवेद-ना हि साऽ धुना क-थं विस्मृ-तिगोच-रीकृता? ॥

(कुमारसं० १५।४०)

द्वितीयो भेदः—यथा—

वंशस्थम् — इन्द्रवंशा

जगणः तगणः जगणः रगणः — तगणः तगणः जगणः रगणः

।ऽ। ऽऽ। ।ऽ। ऽ।ऽ — ऽऽ। ऽऽ। ।ऽ। ऽ।ऽ

पुरोग-तं दैत्य-चमूम-हार्णवं दृष्ट्वाभि-तश्चुक्षु-भिरे म-हा-सुराः ।

वंशस्थम् — वंशस्थम्

जगणः तगणः जगण रगणः — जगणः तगणः जगणः रगणः

।ऽ। ऽऽ। ।ऽ। ऽ।ऽ — ।ऽ। ऽऽ। ।ऽ। ऽ।ऽ

स्मरारि-सूनोर्न-यनैक-कोणके ममुर्भ-टास्तस्य-रणेऽव—हेलया ॥

(कुमारसं० १५।४९)

तृतीयो भेदः—यथा—

इन्द्रवंशा — इन्द्रवंशा

तगणः तगणः जगणः रगणः — तगणः तगणः जगणः रगणः

ऽऽ। ऽऽ। ।ऽ। ऽ।ऽ — ऽऽ। ऽऽ। ।ऽ। ऽ।ऽ

निम्नाः प्र-देशाः स्थ-लतामु-पागमन् निम्नत्व-मुच्चैर-पि सर्व-तश्च ते ।

वंशस्थम् — वंशस्थम्

जगणः तगणः जगण रगणः — जगणः तगणः जगणः रगणः

।ऽ। ऽऽ। ।ऽ। ऽ।ऽ — ।ऽ। ऽऽ। ।ऽ। ऽ।ऽ

तुरङ्ग-माणां व्र-जतां खु-रैः क्षता रथैर्ग-जेन्द्रैः प-रितः स-मीकृताः ॥

(कुमारसं० १४।४४)

चतुर्थो भेदः—यथा—

वंशस्थम् — वंशस्थम्

जगणः तगणः जगण रगणः — जगणः तगणः जगणः रगणः

।ऽ। ऽऽ। ।ऽ। ऽ।ऽ — ।ऽ। ऽऽ। ।ऽ। ऽ।ऽ

परस्प-रं वज्र-धरस्य सैनिका द्विषोऽपि योद्धुं प्र-वरोद्ध-तायुधाः ।

इन्द्रवंशा — वंशस्थम्

तगणः तगणः जगणः रगणः — जगणः तगणः जगणः रगणः

ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ — । ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

वैतालि-कश्रावि-तमान-सत्क्रमा- भिधान-मीयुर्वि-जयैषि-णो रणे ॥

(कु०सं० १५।५२)

पञ्चमो भेदः—यथा—

इन्द्रवंशा — वंशस्थम्

तगणः तगणः जगणः रगणः — जगणः तगणः जगणः रगणः

ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ — । ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

ऊर्ध्वीकृ-तास्या र-विदत्त-दृष्टयः समेत्य सर्वे सु-रविद्वि-षः पुरः ।

इन्द्रवंशा — वंशस्थम्

तगणः तगणः जगणः रगणः — जगणः तगणः जगणः रगणः

ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ — । ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

श्वानः स्व-रेण श्र-वणान्त-शातिना मिथो रु-दन्तः क-रुणेन निर्ययुः ॥

(कु०सं० १५।२४)

षष्ठो भेदः—यथा—

इन्द्रवंशा — इन्द्रवंशा

तगणः तगणः जगणः रगणः — तगणः तगणः जगणः रगणः

ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ — ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

अभ्याज-तोऽभ्याग-ततूर्ण-तर्णका- न्निर्याण-हस्तस्य पुरो दु-धुक्षतः ।

इन्द्रवंशा — वंशस्थम्

तगणः तगणः जगणः रगणः — जगणः तगणः जगणः रगणः

ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ — । ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

वर्गाद्ग-वां हुंकृ-तिचारु निर्यती- मरिर्म-धोरैक्ष-त गोम-तल्लिकाम् ॥

(शिशुपा० १२।४१)

सप्तमो भेदः—यथा—

वंशस्थम् — इन्द्रवंशा

जगणः तगणः जगणः रगणः — तगणः तगणः जगणः रगणः

। ऽ । ऽ ऽ । । ऽ । ऽ । ऽ — ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

न जाम-दग्न्यः क्ष-यकाल-रात्रिकृत् स क्षत्रि-याणां स-मराय वल्गति

| इन्द्रवंशा | | | | वंशस्थम् | | | |
|---|---|---|---|---|---|---|---|
| तगणः | तगणः | जगणः | रगणः | जगणः | तगणः | जगणः | रगणः |
| ऽऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ | ।ऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ |

येन त्रि-लोकीस-भटेन तेन ते कुतोऽव-काशः स-ह विग्र—हग्रहे? ॥

(कु०सं० १५।३७)

अष्टमो भेदः— यथा—

| वंशस्थम् | | | | वंशस्थम् | | | |
|---|---|---|---|---|---|---|---|
| जगणः | तगणः | जगणः | रगणः | जगणः | तगणः | जगणः | रगणः |
| ।ऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ | ।ऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ |

निवार्य-माणैर-भितोऽनु-यायिभि- ग्रहीतु-कामैरि-व तं मु-हुर्मुहुः ।

| वंशस्थम् | | | | इन्द्रवंशा | | | |
|---|---|---|---|---|---|---|---|
| जगणः | तगणः | जगणः | रगणः | तगणः | तगणः | जगणः | रगणः |
| ।ऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ | ऽऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ |

अपाति गृध्रैर-भिमौलि चाकुलै- र्भविष्य-देतन्म–रणोप–देशिभिः ॥

नवमो भेदः—

यथा—

| इन्द्रवंशा | | | | वंशस्थम् | | | |
|---|---|---|---|---|---|---|---|
| तगणः | तगणः | जगणः | रगणः | जगणः | तगणः | जगणः | रगणः |
| ऽऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ | ।ऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ |

खातं खु-रै रथ्य-तुरङ्ग-पुङ्गवै- रुपत्य-कानां क-नकस्थ-लीरजः ।

| वंशस्थम् | | | | इन्द्रवंशा | | | |
|---|---|---|---|---|---|---|---|
| जगणः | तगणः | जगणः | रगणः | तगणः | तगणः | जगणः | रगणः |
| ।ऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ | ऽऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ |

गतं दि-गन्तान् प्र-खरैः स-मीरणै- र्दाहभ्र-मं भूरि बभार भूयसा ॥

(कु०सं० १४।२०)

दशमो भेदः—यथा—

| वंशस्थम् | | | | इन्द्रवंशा | | | |
|---|---|---|---|---|---|---|---|
| जगणः | तगणः | जगणः | रगणः | तगणः | तगणः | जगणः | रगणः |
| ।ऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ | ऽऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ |

नितान्त–मुत्तुङ्ग–तुरङ्ग–हेषितै- रुद्दाम-दानद्वि—पबृंहि—तैः शतैः ।

वंशस्थम् — इन्द्रवंशा

जगणः तगणः जगणः रगणः — तगणः तगणः जगणः रगणः

। ऽ । ऽ ऽ । । ऽ । ऽ । ऽ — ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

चलद्ध्व-जस्यन्द-ननेमि-निःस्वनै- श्चाभून्नि-रुच्छ्वास-मथाकु-लं नभः ॥

(कुमारसं० १४।४१)

एकादशो भेदः—यथा—

इन्द्रवंशा — इन्द्रवंशा

तगणः तगणः जगणः रगणः — तगणः तगणः जगणः रगणः

ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ — ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

श्रुत्वेति वाचं वि-यतो ग-रीयसीं क्रोधाद—हंकार—परो म—हासुरः ।

वंशस्थम् — इन्द्रवंशा

जगणः तगणः जगणः रगणः — तगणः तगणः जगणः रगणः

। ऽ । ऽ ऽ । । ऽ । ऽ । ऽ — ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

प्रकम्पि-ताशेष-जगत्र-योऽपि स- न्ना-कम्प-तोच्चैर्दि-वमभ्य-धाच्च सः ॥

(कु०सं० १५।३९)

द्वादशो भेदः—यथा—

वंशस्थम् — वंशस्थम्

जगणः तगणः जगणः रगणः — जगणः तगणः जगणः रगणः

। ऽ । ऽ ऽ । । ऽ । ऽ । ऽ — । ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

कटुस्व-रैः प्राल—पथाम्ब—रस्थिताः शिशोर्ब-लात्षड्दि-नजात-कस्य किम्? ॥

इन्द्रवंशा — इन्द्रवंशा

तगणः तगणः जगणः रगणः — तगणः तगणः जगणः रगणः

ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ — ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

श्वानः प्र-मत्ता इ-व कार्ति-के निशि स्वैरं व—नान्ते मृ—गधूर्त-का इव ॥

(कुमारसं० १५।४१)

त्रयोदशो भेदः—यथा—

इन्द्रवंशा — वंशस्थम्

तगणः तगणः जगणः रगणः — जगणः तगणः जगणः रगणः

ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ — । ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

पद्मै-र-नन्वीत—वधूमु-खद्युतो गता न हंसैः श्रि-यमात-पत्रजाम् ।

तथा शालिनीवातोर्मीपादयोरन्येषामपि[१] स्वल्पभेदानां प्रयोगानुसारेणोपजातयो ज्ञेयाः ।

| इन्द्रवंशा | | | | इन्द्रवंशा | | | |
|---|---|---|---|---|---|---|---|
| तगणः | तगणः | जगणः | रगणः | तगणः | तगणः | जगणः | रगणः |
| ऽ ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ | ऽ ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ |

दूरेऽभ-वन्भोज-बलस्य गच्छतः शैलोप–मातीत-गजस्य निम्नगाः ॥

(शिशुपा० १२।६१)

चतुर्दशो भेदः—

यथा—

| वंशस्थम् | | | | इन्द्रवंशा | | | |
|---|---|---|---|---|---|---|---|
| जगणः | तगणः | जगणः | रगणः | तगणः | तगणः | जगणः | रगणः |
| । ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ | ऽ ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ |

महाच-मूनाम-धिपाः स-मन्ततः संनह्य सद्यः सु-तरामु-दायुधाः ।

| इन्द्रवंशा | | | | इन्द्रवंशा | | | |
|---|---|---|---|---|---|---|---|
| तगणः | तगणः | जगणः | रगणः | तगणः | तगणः | जगणः | रगणः |
| ऽ ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ | ऽ ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ |

तस्थुर्वि-नम्रक्षि-तिपाल–सङ्कुले तस्याङ्ग-णद्वारि बहिः प्र-कोष्ठके ॥

(कुमारस० १५।६)

(१) तुल्यसंख्याकवर्णपादयोरेवोपजातित्वमिति न नियमः, किंतु भिन्नसंख्याकवर्णपादयोरपि । यथा—

रामं लक्ष्मणपूर्वजं रघुवरं सीतापतिं सुन्दरं
काकुत्स्थं करुणामयं गुणनिधिं विप्रप्रियं धार्मिकम् ।
राजेन्द्रं सत्यसन्धं दशरथतनयं श्यामलं शान्तमूर्तिम्,
वन्दे रामाभिरामं रघुकुलतिलकं राघवं रावणारिम् ॥

इति पद्ये ऊनविंशत्यक्षरपादकेन (१९) शार्दूलविक्रीडितेन सहैकविंशत्यक्षरपादकस्रग्धरावृत्तस्य पादद्वयेन मिश्रणादुपजातित्वम् । एवमेवानुष्टुब्बृहत्योरपि संकरादुपजातिः इति **नव्याः** । वस्तुतस्तु–सर्वैरपि छन्दःशास्त्रकारैरुपजातेः समवृत्ताधिकार एवाम्नानात्, विषमाक्षरवृत्तमिश्रणस्याप्युपजातित्वेऽर्धसमविषमवृत्तेष्वतिव्याप्तेः, 'अत्रानुक्तं गाथा' (पि०सू० ८।१) इति सूत्रवैयर्थ्यप्रसङ्गात्, छन्दोभङ्गदोषस्य निर्विषयत्वापत्तेश्च समाक्षरयोर्द्वयोर्मिश्रणमेवोपजातित्वमिति युक्तम् । तथा च रत्नाकरे- 'इत्थं' पदप्रयोगोऽपि स्वरसतः सङ्गच्छते । यत्तु–'रामं लक्ष्मणपूर्वजं' इत्युदाहृतम्, तत्र गाथात्वमेव सुवचम् । अत एव—

**शिवप्रसादिनी**—आद्यन्तौ = यहाँ आद्यन्तौ शब्द से अव्यवहित पूर्व में कहे गये क्रमशः 'इन्द्रवज्रा' और 'उपेन्द्रवज्रा' छन्दों के पाद कहे जाते हैं। उन दोनों के पाद जब विकल्प से प्रयोक्ता के इच्छाऽनुसार प्रयुक्त होने लगते है, तब वह छन्द ''उपजाति'' के नाम से कहा जाता है। अर्थात् जिस छन्द का कोई पाद, इन्द्रवज्रा छन्द के लक्षण से युक्त हो, तथा कोई पाद उपेन्द्रवज्रा छन्द के लक्षण से युक्त हो, तो उस छन्द को ''उपजाति'' कहते हैं। इसी प्रकार वंशस्थवृत्त के साथ इन्द्रवज्रा लक्षण और शालिनी के साथ वातोर्मि के लक्षण मिलने पर भी उपजाति छन्द होता है॥ उपजाति छन्द अनेक प्रकार का हुआ करता है। इन्द्रवज्रा से उपेन्द्रवज्रा के मिलने पर जो जाति छन्द होता है, उसके भेद प्रस्तावाऽनुसार चौदह प्रकार के हुआ करते हैं॥१८॥

## दोधकं भौ भ्गौ ग्॥६।१९॥

**मृतसञ्जीवनी**—यस्य पादे भगणास्त्रयो (ऽ॥.ऽ॥.ऽ॥) गकारौ (ऽ.ऽ) च भवतस्तद् 'दोधकं'[१] नाम वृत्तम्। तत्रोदाहरणम्—

भगणः भगणः भगणः गु० गु० — भगणः भगण भगणः गु० गु०
ऽ । । ऽ । । ऽ । । ऽ ऽ — ऽ । । ऽ । । ऽ । । ऽ ऽ
दोधक-मर्थवि-रोधक-मु-ग्रं — स्त्री-चप-लं युधि कातर-चि-त्तम्।
भगणः भगणः भगणः गु० गु० — भगणः भगणः भगणः गु० गु०
ऽ । । ऽ । । ऽ । । ऽ ऽ — ऽ । । ऽ । । ऽ । । ऽ ऽ
स्वार्थप-रं मति-हीनम-मा-त्यं — मुञ्चति यो नृप-तिः स सु-खी स्यात्॥

---

'यो विश्वात्मा विधिजविषयान् प्राश्य भोगान् स्थविष्ठान्
पश्चाच्चान्यान् स्वमतिविभवाञ्ज्योतिषा स्वेन सूक्ष्मान्।
सर्वानेतान् पुनरपि शनैः स्वात्मनि स्थापयित्वा
हित्वा सर्वान् विशेषान् विगतगुणगणः पात्वसौ नस्तुरीयः॥'
(मां० उ० भा० २)

इति शङ्करभगवत्पादीयश्लोके 'न च चतुर्थपादे वृत्तलक्षणाभावादसाङ्गत्य-माशङ्कनीयम्, गाथालक्षणस्य तत्र सुसम्पादत्वात्।' इत्यानन्दज्ञानोक्तः। एतेन-'कल्लोलवेल्लितदृषत्परुषप्रहारै रत्नानि रत्नाकर! मावमंस्थाः।' इत्याद्यपि व्याख्या-तम्। भागवताद्युदाहरणानि त्वार्षत्वाल्लौकिके नातीवोपयुज्यन्ते। क्वचिल्लौकिके तथा दर्शनं तु दोष एवेति 'समाक्षरजातिद्वयमिश्रणमेवोपजातित्वमि' ति प्राचां मतमेव निर्बाधम्॥

(१) उक्तैदशाक्षरप्रस्तारस्योनचत्वारिंशदधिकचतुः शततमो (४३९) भेदो **'दोधक'** इति नाम्ना' प्रसिद्धः। **'बन्धुः'** इति नामान्तरं वा०भू०।

अत्र पादान्ते यतिः । दोग्धीति दोधकः । केनाप्युपायेन राजानं दोग्धि ।

**शिवप्रसादिनी**—जिस छन्द का प्रथम पाद तीन भगण (ऽ।।-ऽ।।-ऽ।।) के साथ-साथ अन्त के दो दीर्घ वर्णों से युक्त हो, उस छन्द को "दोधक" कहते हैं । पादान्त यति का नियम है ॥१९॥

## शालिनी म्तौ त्गौ ग् समुद्रऋषयः ॥६।२०॥

**मृतसञ्जीवनी**—यस्य पादे मगणतगणौ, (ऽऽऽ. ऽऽ।) तगणो, (ऽऽ।) गकारौ (ऽ.ऽ) च भवतस्तद्वृतं [१]'शालिनी' नाम । चतुर्षु, सप्तसु च यतिः । तत्रोदाहरणम्—

मगणः तगणः तगणः गु० गु०
ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ
शस्त्रश्या-मा(४)स्निग्ध-मुग्धाय-ता-क्षी(७)

मगणः तगणः तगणः गु० गु०
ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ
पीनश्रो-णि(४)र्दक्षि-णावर्त-ना-भिः(७) ।

मगणः तगणः तगणः गु० गु०
ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ
मध्ये क्षा-मा(४)पीव-रोरुस्त-नी या(७)

मगणः तगणः तगणः गु० गु०
ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ
श्लाघ्या भ-र्तुः (४)शालि-नी कामि-नी स्यात्(७) ॥

**शिवप्रसादिनी**—जिस छन्द के प्रत्येक पाद में एक मगण (ऽऽऽ) दो तगण (ऽऽ।-ऽऽ।) एवं अन्त में दो दीर्घ उपलब्ध हों, वह वृत्त "शालिंनी" नाम वाला होता है । इस छन्द के चार और सांत अक्षरों पर यति होती है ॥२०॥

## वातोर्मी म्भौ त्गौ ग् च[२] ॥६।२१॥

**मृतसञ्जीवनी**—यस्य पादे मगणभगणतगणाः (ऽऽऽ.ऽ।।.ऽऽ।) गकारौ (ऽ.ऽ) च भवतस्तद्वृत्तं 'वातोर्मी'[३] नाम। चतुर्भिः सप्तभिश्च यतिः । चकारो यत्यनुकर्षणार्थः ।

(१) उक्तैकादशाक्षरप्रस्तारस्योननवत्यधिकद्विशततमोऽयं (२८९) भेदः **'शालिनी'** इति नाम्ना ख्यातः ।

(२) 'गश्चतुःस्वरा' इति लि. पुस्तकेऽधिकः पाठः ।

(३) उक्तैकादशाक्षरप्रस्तारस्य पञ्चाधिकत्रिशततमो (३०५) भेदो **'वातोर्मी'** इति नाम्ना ख्यातः । वातोर्मीशालिन्योर्भगणतगणस्थान एव भेदः । अतएवानयोर्मिश्रणात्पूर्व-

तथोदाहरणम्—

मगण: भगण: तगण: गु० गु०

ऽ ऽ ऽ ऽ । । ऽ ऽ । ऽ ऽ

यात्युत्से–कं(४)सप–दि प्राप्य–किं–चि(७)-

मगण: भगण: तगण: गु०गु०

ऽ ऽ ऽ ऽ । । ऽ ऽ । ऽ ऽ

त्स्याद्वा य-स्या(४)श्चप-ला चित्त-वृ-त्ति:(७)।

मगण: भगण: तगण: गु०गु०

ऽ ऽ ऽ ऽ । । ऽ ऽ । ऽ ऽ

या दीर्घा-ङ्गी(४)स्फुट-शब्दाट्ट-हा-सा (७)

मगण: भगण: तगण: गु०गु०

ऽ ऽ ऽ ऽ । । ऽ ऽ । ऽ ऽ

त्याज्या सा स्त्री(४) द्रुत-वातोर्मि-मा-ला (७)॥

वातोर्मीति स्त्रियां 'कृदिकारादक्तिन:' (व्या.वार्ति.) इति ङीष्।

**शिवप्रसादिनी**—जिस वृत्त का समस्त पाद मगण (ऽऽऽ) भगण (ऽ।।) तगण (ऽऽ।) वाला हो, वह वृत्त "वातोर्मि" नाम वाला होता है। इस छन्द के चार और सात अक्षरों पर यति होती है॥२१॥

## भ्रमरविलसितं म्भौ न्लौ ग्॥६।२२॥

**मृतसञ्जीवनी**—यस्य पादे मगणभगणनगणलकारगकारा: (ऽऽऽ.ऽ।।.।।।.।.ऽ) भवन्ति तद् "[1]भ्रमरविलसितं' नाम। चतुर्भि: सप्तभिश्च यति:। तत्रोदाहरणम्—

मगण: भगण: नगण: ल० गु०

ऽ ऽ ऽ ऽ । । । । । । ऽ

किं ते व-क्त्रं(४)चल-दलक–चि–तं?(७)

मगण: भगण: नगण: ल० गु०

ऽ ऽ ऽ ऽ । । । । । । ऽ

किं वा प-द्मं(४)भ्रम-रविल–सि-तम्?(७)।

---

वदुपजातयो भवन्ति। एकलघुविभिन्नतायामिव लघुद्वयविभिन्नतायामप्युपजातयो भवन्तीति वृत्तिकृता 'तथा शालिनी' (पृ० १३१ पं० १) त्यादिना सिद्धान्तितत्वात्।

(१) उक्तैकादशाक्षरप्रस्तारस्य नवाधिकसहस्रतमो (१००९) भेदो **'भ्रमरविलसितम्'** इति नाम्ना प्रसिद्ध:। अत्र चतुर्थपादान्ते 'सि' इति वर्णस्य 'गन्ते' (१।१०) इति सूत्राद्गुरुत्वातिदेश:।

मगणः भगणः नगणः ल०गु०

ऽ ऽ ऽ ऽ ।। ।।। । ऽ

इत्येवं मे(४)जन-यति म-न-सि(७)

मगणः भगणः नगणः ल०गु०

ऽ ऽ ऽ ऽ ।। ।।। । ऽ

भ्रान्तिं का-न्ते!(४)परि-सरस-र-सि (७) ॥

**शिवप्रसादिनी**—जिस वृत्त के समस्त पाद में मगण (ऽऽऽ) भगण (ऽ।।) नगण (।।।) तथा अन्त में क्रम से एक लघु-गुरु अक्षर हो, वह "भ्रमरविलासिता" वृत्त कहा जाता है, जहाँ पर चार और सात अक्षरों के उपरान्त यति की स्थिति होती है ॥२२॥

## रथोद्धता र्नौ र्लौ ग् ॥६।२३॥

**मृतसञ्जीवनी**—यस्य पादे रगणनगणरगणलकारगकारा (ऽ।ऽ.।।।.ऽ।ऽ.।.ऽ) भवन्ति तद्वृत्तं '[१]रथोद्धता' नाम ।

तत्रोदाहरणम्—

रगणः नगणः रगणः ल०गु० रगणः नगणः रगणः ल० गु०

ऽ ।ऽ ।।। ऽ।ऽ । ऽ ऽ।ऽ ।।। ऽ।ऽ । ऽ

या करो-ति विवि-धैर्विटैः स-मं सङ्गतिं परगृ-हे रता च या ।

रगणः नगणः रगणः ल० गु० रगणः नगणः रगणः ल० गु०

ऽ।ऽ ।।। ऽ । ऽ । ऽ ऽ।ऽ ।।। ऽ।ऽ । ऽ

म्लानय-त्युभय-तोऽपि बा-न्ध-वान् मार्गधू-लिरिव सा रथो-द्ध-ता ॥

पादान्ते यतिः ।

**शिवप्रसादिनी**—जिस छन्द के समस्त पादों में रगण (ऽ।ऽ) नगण (।।।) रगण (ऽ।ऽ) के उपरान्त एक लघु अक्षर, और उसके बाद पादान्त में एक गुरू वर्ण विद्यमान हो, तो उस छन्द की "रथोद्धता" सञ्ज्ञा होती है । यहाँ पर यति का स्थान पादान्त मे निर्धारित है ॥२३॥

## स्वागता र्नौ भ्गौ ग् ॥६।२४॥

**मृतसञ्जीवनी**—यस्य पादे रगणनगणौ (ऽ।ऽ.।।।) भगणो (ऽ।।) गकारौ (ऽ.ऽ) च

---

(१) उक्तैकादशाक्षरप्रस्तारस्यैकोनशताधिकषट्शततमो (६९९) ऽयं भेदो **'रथोद्धता'** इति नाम्ना प्रसिद्धः ।

तद्वृत्तं '[1]स्वागता' नाम । तत्रोदाहरणम्—

रगणः नगणः भगणः गु० गु० रगणः नगणः भगणः गु० गु०
ऽ।ऽ ।।। ऽ।। ऽ ऽ ऽ।ऽ ।।। ऽ।। ऽ ऽ

आहवं प्रविश-तो यदि रा-हुः पृष्ठत-श्चरति वायुस—मे—तः ।

रगणः नगणः भगणः गु० गु० रगणः नगणः भगणः गु० गु०
ऽ।ऽ ।।। ऽ।। ऽ ऽ ऽ।ऽ ।।। ऽ।। ऽ ऽ

प्राणवृ-त्तिरपि यस्य श-री-रे स्वागता भवति तस्य ज-य-श्रीः ॥

पादान्ते यतिः ।

**शिवप्रसादिनी**—जिस छन्द के समस्त पाद में रगण (ऽ।ऽ) नगण (।।।) भगण (ऽ।।) तथा अन्त में दो दीर्घ वर्ण उपलब्ध हो, तो उस छन्द की "स्वागता" सञ्ज्ञा मानी गयी है । इस छन्द में भी पादान्त यति होने का नियम है ॥२४॥

## वृन्ता नौ स्गौ ग् ।।६।२५।।

**मृतसञ्जीवनी**—यस्य पादे नगणौ (।।।.।।।) सगणः (।।ऽ) गकारौ (ऽ.ऽ) च तद्वृत्तं '[2]वृन्ता' नाम । अत्र मण्डूकप्लुतिन्यायेन 'समुद्रऋषय' इत्यनुवर्तन्ते । तेन चतुर्भिः सप्तभिश्च यतिः । तत्रोदाहरणम्—

नगणः नगणः सगणः गु० गु०
।।। ।।। ।।ऽ ऽ ऽ

द्विजगु-रु(४)परि-भवका—री-यो(७)

नगणः नगणः सगणः गु० गु०
।।। ।।। ।।ऽ ऽ ऽ

नरप-ति(४)रति-धनलु-ब्धा-त्मा (७) ।

नगणः नगणः सगणः गु० गु०
।।। ।।। ।।ऽ ऽ ऽ

ध्रुवमि-ह(४)निप-तति पा-प्पो-ऽसौ (७)

नगणः नगणः सगणः गु० गु०
।।। ।।। ।।ऽ ऽ ऽ

फलमि-व(४)पव-नहतं-वृ-न्तात् (७) ॥

---

(१) उक्तैकादशाक्षरप्रस्तारस्य त्रिचत्वारिंशदधिकचतुःशततमो (४४३) भेदः **'स्वागता'** इति नाम्ना ख्यातः । **'पद्मिनी'** इति चन्द्रिकायाम् ।

(२) उक्तैकादशाक्षरप्रस्तारस्य षट्पञ्चाशदधिकद्विशततमो (२५६) भेदो **'वृन्ता'** इति नाम्ना प्रसिद्धः । **'वृत्ता'** इति वैदिकपाठः । **'पृथ्वी'** इति क्वचित् ।

**शिवप्रसादिनी**—जिस श्लोक के प्रत्येक पाद में दो नगण (।।।-।।।) एक सगण (।।ऽ) और अन्त में दो दीर्घ वर्ण उपस्थित रहे, तो उस छन्द को "वृन्ता" कहते हैं। यहाँ पर मण्डुक प्लुति न्याय से "समुद्र ऋषयः" (पि० सू० ६।२०) चार संख्या के उपलक्षक समुद्र एवं सात संख्या के स्मारक "ऋषि" शब्द अनुवृत्त होते हैं। अतः इस छन्द में चार तथा सात अक्षरों के अनन्तर यति उपस्थित होता है ॥२५॥

## श्येनी र्जौ र्लौ ग् ।।६।२६।।

**मृतसञ्जीवनी**—यस्य पादे रगणजगणौ (ऽ।ऽ.।ऽ।) रगणलकारौ (ऽ।ऽ.।) गकार (ऽ) श्च तद्वृत्तं '[1]श्येनी' नाम। तत्रोदाहरणम्—

रगणः जगणः रगणः ल० गु० रगणः जगणः रगणः ल० गु०
ऽ।ऽ ।ऽ। ऽ।ऽ । ऽ ऽ।ऽ ।ऽ। ऽ।ऽ । ऽ
क्रूरदृ-ष्टिराय-ताग्रना—सि-का चञ्चला-कठोर-तीक्ष्णना-दि-नी ।
रगणः जगणः रगणः ल०गु० रगणः जगणः रगणः ल० गु०
ऽ।ऽ ।ऽ। ऽ।ऽ । ऽ ऽ।ऽ ।ऽ। ऽ।ऽ । ऽ
युद्धका-ङ्क्षिणी स-दामिष-प्रि-या श्येनिके-व सा वि-गर्हिता-ङ्ग-ना ॥

अत्र पादान्ते यतिः ।

**शिवप्रसादिनी**—जिस छन्द के प्रत्येक पादों में एक रगण (ऽ।ऽ) एक जगण (।ऽ।) पुनः एक रगण (ऽ।ऽ) तथा अन्त में क्रमशः एक लघु एवम् एक गुरु वर्ण हो, तो वह वृत्त 'श्येनी' नाम वाला होता है ॥२६॥

## [2]विलासिनी ज्रौ ज्गौ ग् ।।६।२७।।

**मृतसञ्जीवनी**—यस्य पादे जगणरगणौ (।ऽ।.ऽ।ऽ) जगणो (।ऽ।) गकारौ (ऽ.ऽ) च तद्वृत्तं '[3]विलासिनी' नाम। तत्रोदाहरणम्—

जगणः रगणः जगणः गु०गु० जगणः रगणः जगणः गु० गु०
।ऽ। ऽ।ऽ ।ऽ। ऽ ऽ ।ऽ। ऽ।ऽ ।ऽ। ऽ ऽ
विलासि-नी विलो-कितैः स-का-मं दधाति-कामस-त्त्वचेष्टि-तं या ।

---

(१) उक्तैकादशाक्षरप्रस्तारस्य त्र्यशीत्यधिकषट्शततमो (६८३) भेदः **'श्येनी'** इति नाम्ना प्रसिद्धः । **'सेनिका'** वा० भू० । **'वैतिका'** वृ० र० ।

(२) सूत्रमेतद्वैदिकैर्न पठ्यते ।

(३) उक्तैकादशाक्षरप्रस्तारस्य द्विचत्वारिंशदुत्तरत्रिशततमो (३४२) भेदो **'विलासिनी'** इति नाम्ना प्रसिद्धः ।

जगणः रगणः जगणः गु० गु० जगणः रगणः जगणः गु० गु०

। ऽ । ऽ । ऽ । ऽ । ऽ ऽ । ऽ । ऽ । ऽ । ऽ । ऽ ऽ

करोति चञ्चला-क्षिदृष्टि-पा-तै- र्यतात्म-नश्च यो-गिनोऽपि म-त्तान् ॥

**शिवप्रसादिनी**—जिस छन्द के सभी पादों में जगण (।ऽ।) रगण (ऽ।ऽ) और दो गुरू वर्ण हों, वह "विलासिनी" वृत्त (छन्द) होता है। इस छन्द में यति का नियम नहीं है ॥२७॥

(१जगत्याम्)

---

(१) जगतीछन्दः पादघटकीभूतानां द्वादशसंख्यकानामक्षराणां प्रस्तारे कृते षण्णवत्यधिकचतुःसहस्रभेदा (४०९६) जायन्ते। तेषु चात्र षोडशभेदा एव निर्दिष्टाः, परं प्राकृत-पिङ्गलादिग्रन्थेष्वन्येऽपि भेदा उपलभ्यन्ते; ते चात्र विनिर्दिश्यन्ते। यथा—

**विद्याधरच्छन्दः (१२।१)**—

'चारी कण्णा पाए दिण्णा सव्वासारा पाआअंते दिज्जे कंता चारी हारा।
छण्णावेआ मत्ता गण्णा चारी पाआ **विज्जाहारा** जंपे सारा णाआराआ ॥'
प्रा० पि०सू० २।१२८ ॥

**जलधरमालाच्छन्दः (१२।२४१)**—'अब्ध्यष्टाभि**र्जलधरमाला** म्भौ स्मौ' वृत्तरत्नाकरे।

**अभिनवतामरसच्छन्दः (१२।८८०)**—'**अभिनवतामरसं** नजजाद्यः'। एतदेव '**ललितं**' पदनाम्ना प्रसिद्धं वृत्तरत्नाकरे।

**मालतीच्छन्दः (१२।१३९२)**—'भवति नजावथ **मालती** जरौ' वृत्तरत्नाकरे।

**दुग्धच्छन्दः (१२।१३९५)**—'**दुग्धवृत्तं** रभजरैरुदीरितम्।'

**ललिताच्छन्दः (१२।१३९७)**—'धीरैरभाणि **ललिता** तभौ जरौ' वृत्तरत्नाकरादिषु।

**प्रियंवदाच्छन्दः (१२।१४००)**—'भुवि भवेन्नभजरैः **प्रियंवदा** वृत्तरत्नाकरादिषु।

**महितोज्ज्वलाच्छन्दः (१२।१४७२)**—'ननभरसहिता **महितोज्ज्वला**' वृत्तरत्नाकरे।

**मताच्छन्दः (१२।१४९६)**—'**मता** नरौ नरौ भिन्ना वज्रकोणैर्गुहाननैः।'
'बहुमता' इति वृ० म० को०

**जलमालाच्छन्दः (१२।१५९९)**—'**जलमाला** भभमसाः सागरैर्वसुभिर्यतिः।'

**चन्द्रवर्त्मच्छन्दः (१२।१९७१)**—
'**चन्द्रवर्त्म** गदितं तु रनभसैः' वृत्तरत्नाकरछन्दोमञ्जर्यादिषु।

**ललनाच्छन्दः (१२।२०२३)**—'**ललना** स्याद्भतनसैश्छिन्ना स्वर्द्रुमहीधरैः।'

**सारङ्गच्छन्दः (१२।२३४१)**—

'जा चारितक्कारसंभेअउक्किट्ठ **सारंगरूअक्क** सो पिंगले दिट्ठ।
जा तीअवीसामसंजुत्त पाएहि णाजाणिए कांति अण्णोण्णभाएहि ॥'
प्रा० पि०सू० २।१३७ ॥

## जगती ।।६।२८।।

**मृतसञ्जीवनी**—अधिकारोऽयमाध्यायपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्याम-स्तज्जगतीत्येवं वेदितव्यम्। वक्ष्यति च "तोटकं सः" (६।३२) तज्जगतीपादस्य लक्षणं भवति ।।

**शिवप्रसादिनी**—छठवें अध्याय की समाप्ति पर्यन्त जगती सञ्ज्ञा का अधिकार चलेगा। अतः इस जगती सञ्ज्ञा के लक्षणों से लक्षित प्रकृत अध्याय की समाप्तिपर्यन्त तत् तत् सूत्रों द्वारा विहित सकल छन्द एक होकर जगती सञ्ज्ञा वाले होगें। इसलिए आगे कहे जाने वाले जो "तोटकं सः" (पि० सू० ६।३३) इत्यादिसूत्रों द्वारा तोटक आदि छन्दों के लक्षण कहने वाले हैं वे सब के सब वे सभी जगती पाद के अक्षरों की सञ्ज्ञा के बोधक होंगे। तोटक लक्षण का तात्पर्य तोटक लक्षण के अवसर पर व्यक्त होगा ।।२८।।

## वंशस्था ज्तौ ज्रौ ।।६।२९।।

**मृतसञ्जीवनी**—यस्य पादे जगणतगणौ (।ऽ।.ऽऽ।) जगणरगणौ (।ऽ।.ऽ।ऽ) च भवतस्तद्वृत्तं '[१]वंशस्था' नाम। तत्रोदाहरणम्—

जगणः तगणः जगणः रगणः जगणः तगणः जगणः रगणः

। ऽ । ऽ ऽ । । ऽ । ऽ । ऽ । ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

विशुद्ध-वंशस्थ-मुदार-चेष्टितं गुणप्रि-यं मित्र-मुपास्स्व सज्जनम्।

---

**मौक्तिकदामच्छन्दः (१२।२९२६)**—

'चतुर्जगणं वद मौक्तिकदाम' वृ० र० परिशिष्टे, प्रा० पि०सू० २।१३९ ।।

**भामिनीच्छन्दः (१२।३५११)**—'भामिनी स्याद्भभभास्त्रिभिर्यतिचतुष्टयम्।'

**मोदकच्छन्दः (१२।३८९५)**—

'तोडअछं विपरीअ ट्ठविज्जु **मोदह**छंदह णाम करिज्जसु।
चारि गणा भगणा सुपसिद्धउ पिंगल जंपउ कित्तिहिलुद्धउ ।।'

प्रा० पि०सू० २।१४१ ।।

**तोटक**च्छन्दसो विपरीतस्थापनेन **मोदक**च्छन्दो जायते।

**तरलनयनीच्छन्दः (१२।४०९६)**—

'णगण णगण कर चउगुण सुकइ कमलमुहि फणि भण।
**तरलणअणि** सब करु लहु सब गुरु जवउ णवरि कहु ।।'

प्रा० पि०सू० २।१४३ ।।

(१) उक्तद्वादशाक्षरप्रस्तारस्य त्रिशतद्व्यशीत्यधिकैकसहस्रतमो भेदो (१३८२) **'वंशस्था'** इति नाम्ना ख्यातः। छन्दोमञ्जरीप्रभृतिषु च ग्रन्थेष्वेतद्वृतं **'वंशस्थविलम्'** इति नाम्ना प्रसिद्धम्। अत्र 'गुहास्यऋतुभिर्यतिः।' मं०म०।

जगणः तगणः जगणः रगणः जगणः तगणः जगणः रगणः
। ऽ । ऽ ऽ । । ऽ । ऽ । ऽ । ऽ । ऽ ऽ । । ऽ । ऽ । ऽ
विपत्ति-मग्नस्य कराव-लम्बनं करोति यत्प्राण-परिक्र-येण सः ॥

पादान्ते यतिः ।

**शिवप्रसादिनी**—जिस छन्द में जगण (।ऽ।) तगण (ऽऽ।) एवं जगण (।ऽ।) रगण (ऽ।ऽ) हो, वह "वंशस्था" वृत्त कहलाता है ॥२९॥

## इन्द्रवंशा तौ ज्रौ ॥६।३०॥

**मृतसञ्जीवनी**—यस्य पादे तगणौ (ऽऽ।.ऽऽ।) जगणरगणौ (।ऽ।.ऽ।ऽ) च तद्वृत्तं '[१]इन्द्रवंशा' नाम तत्रोदाहरणम्—

तगणः तगणः जगणः रगणः तगणः तगणः जगणः रगणः
ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ
कुर्वीत यो देव-गुरुद्वि-जन्मना- मुर्वीप-तिः पाल-नमर्थ-लिप्सया ।
तगणः तगणः जगणः रगणः तगणः तगणः जगणः रगणः
ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ
तस्येन्द्र-वंशेऽपि गृहीत-जन्मनः संजाय-ते श्रीः प्र-तिकूल-वर्त्तिनी ॥

अत्रापि पादान्ते यतिः ।

**शिवप्रसादिनी**—जिस वृत्त के प्रत्येक पादों में दो तगण (ऽऽ।-ऽऽ।) तथा जगण (।ऽ।) रगण (ऽ।ऽ) विद्यमान हों, वह "इन्द्रवंशा" नामक वृत्त होता है। इस छन्द के पादान्त में यति उपस्थित होता है ॥३०॥

## द्रुतविलम्बितं न्भौ भ्रौ ॥६।३१॥

**मृतसञ्जीवनी**—यस्य पादे नगणभगणौ (।।।.ऽ।।) भगणरगणौ (ऽ।।.ऽ।ऽ) च भवतस्तद्वृत्तं '[२]द्रुतविलम्बितं' नाम। तत्रोदाहरणम्—

नगणः भगणः भगणः रगणः नगणः भगणः भगणः रगणः
। । । ऽ । । ऽ । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ । ऽ
द्रुतग-तिः पुरु-षो धन-भाजनं भवति मन्दग-तिश्च सु-खोचितः ।

---

(१) उक्तद्वादशाक्षरप्रस्तारस्य त्रिशतैकाशीत्यधिकैकसहस्रतमो (१३८१) भेदः **'इन्द्रवंशा'** नाम्ना प्रसिद्धः ।

(२) उक्ताद्वादशाक्षरप्रस्तारस्य चतुःशतचतुःषष्ठ्यधिकैकसहस्रतमो (१४६४) भेदो **'द्रुतविलम्बित'** नाम्ना ख्यातः, **'उज्ज्वला'** इति नामान्तरम् मं० म०। **'सुन्दरी'** इति प्रा० पि०सू० २।१४५ ।

नगणः भगणः भगणः रगणः नगणः भगणः भगणः रगणः

। । । ऽ । । ऽ । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ । ऽ

द्रुतवि-लम्बित-खेलग-तिर्नृपः सकल-राज्यसु-खं प्रिय-मश्नुते ॥

**शिवप्रसादिनी**—जिस छन्द के प्रत्येक पादों में नगण (।।।) भगण (ऽ।।) तथा भगण (ऽ।।) एवं रगण (ऽ।ऽ) हों, वह वृत्त "द्रुतविलम्बित" कहलाता है, जहाँ पादाऽन्त में यति होने का नियम है ॥३१॥

## तोटकं सः ।।६।३२।।

**मृतसञ्जीवनी**—जगतीत्यधिकारे यावद्भिः सकारै (।।ऽ)र्जगतीपादः पूर्यते, तावन्त एकपादे सकारा भवन्ति तद्वृत्तं 'तोटकं'[१] नाम । तत्रोदाहरणम्—

सगणः सगणः सगणः सगणः सगणः सगणः सगणः सगणः

। । ऽ । । ऽ । । ऽ । । ऽ । । ऽ । । ऽ । । ऽ । । ऽ

त्यज तो-टकम-र्थनियो-गकरं प्रमदा-धिकृतं व्यसनो-पहतम् ।

सगणः सगणः सगणः सगणः सगणः सगणः सगणः सगणः

। । ऽ । । ऽ । । ऽ । । ऽ । । ऽ । । ऽ । । ऽ । । ऽ

उपधा-भिरशु-द्धमतिं सचिवं नरना-यक! भी-रुकमा-युधिकम् ॥

पादान्ते यतिः ।[२]

**शिवप्रसादिनी**—जगतीछन्द के अधिकाराऽनुसार जब तक बारह अक्षर पूर्ण न हो जाय, तब तक वहाँ सगण का व्यवहार किया जाना उचित होता है । अर्थात् जिसके प्रत्येक पाद में चार सगण एक साथ उपस्थित हों, वह 'तोटक वृत्त' कहलाता है । इसमें भी पादान्त यति का नियम है ॥३२॥

## पुटो नौ म्यौ वसुसमुद्राः ।।६।३३।।

**मृतसञ्जीवनी**—यस्य पादे नगणौ (।।।.।।।) मगणयगणौ (ऽऽऽ.।ऽऽ) च तद्वृत्तं

---

(१) उक्तद्वादशाक्षरप्रस्तारस्य सप्तशतषट्पञ्चाशदधिकैकसहस्रतमो (१७५६) भेदः **'तोटक'** इति नाम्ना प्रसिद्धः ।

(२) इतः परं "अस्य चोदाहरणान्तरमपि यथा—

अमुना यमुनाजलकेलिमृता सहसा तरसा परिरभ्य धृता ।
हरिणा हरिणाकुलनेत्रवती न ययौ नवयौवनभारवती" ॥

इति क्वचिद्दृश्यते । एतत्प्रक्षिप्तमिव प्रतिभाति; भेदान्तराभाव उदाहरणान्तरस्य वैयर्थ्यात् ।

'[1]पुटो' नाम । अष्टभिश्चतुर्भिश्च यतिः । तत्रोदाहरणम्—

नगणः नगणः मगणः यगणः
। । । । । । ऽ ऽ ऽ । ऽ ऽ
न विच-लति क-थ ञ्चि (८)न्न्या-यमार्गा(४)-
नगणः नगणः मगणः यगणः
। । । । । । ऽ ऽ ऽ । ऽ ऽ
द्रसुनि शिथिल-मुष्टिः(८)पा-र्थिवो यः(४)।
नगणः नगणः मगणः यगणः
। । । । । । ऽ ऽ ऽ । ऽ ऽ
अमृत-पुट इ—वासौ(८)पु—ण्यकर्मा(४)-
नगणः नगणः मगणः यगणः
। । । । । । ऽ ऽ ऽ । ऽ ऽ
भवति जगति सेव्यः(८)स—र्वलोकैः(४) ॥

**शिवप्रसादिनी**—जिस छन्द के प्रतिपाद में दो नगण (।।।-।।।) एक मगण (ऽऽऽ) तथा एक यगण (।ऽऽ) उपलब्ध हो वह "पुट" वृत्त होता है । यहाँ पर आठ अक्षरों के अनन्तर और चार अक्षरों के अनन्तर यति होता है ।।३३।।

## जलोद्धतगतिर्ज्सौ ज्सौ रसर्तवः ।।६।३४।।

**मृतसञ्जीवनी**—यस्य पादे जगणसगणौ (।ऽ।.।।ऽ) पुनरपि तावेव (।ऽ।.।।ऽ) तद्वृत्तं 'जलोद्धतगति[2]' र्नाम । षड्भिः षड्भिश्च यतिः ।

जगणः सगणः जगणः सगणः जगणः सगणः जगणः सगणः
। ऽ । । । ऽ । ऽ । । । ऽ । ऽ । । । ऽ । ऽ । । । ऽ
भनक्ति समरे(६) बहून-पि रिपून् (६) हरिः प्र-भुरसौ(६)भुजोर्जि-तबलः(६) ।
जगणः सगणः जगणः सगणः जगणः सगणः जगणः सगणः
। ऽ । । । ऽ । ऽ । । । ऽ । ऽ । । । ऽ । ऽ । । । ऽ
जलोद्ध-तगति-(६)र्यथैव मकर-(६) स्तरङ्ग-निकरं(६) करेण परितः (६) ॥

**शिवप्रसादिनी**—जिस वृत्त के प्रत्येक पाद में जगण (।ऽ।) सगण (।।ऽ) एक बार

---

(१) उक्तद्वादशाक्षरप्रस्तारस्य षट्सप्तत्यधिकपञ्चशततमो (५७६) भेदः **'पुट'** इति नाम्ना ख्यातः । ग्रन्थान्तरेषु चास्यैव **'श्रीपुट'** इति नाम प्रसिद्धम् ।

(२) उक्तद्वादशाक्षरप्रस्तारस्याष्टशतषडशीत्यधिकैकसहस्रतमो (१८८६) भेदो **'जलोद्धत-गतिः'** इति नाम्ना ख्यातः ।

आकर पुनः जगण (।ऽ।) और सगण (।।ऽ) आवे, वह वृत्त ''जलोद्धतगति'' नाम से कहा जाता है। यहाँ पर छह अक्षरों के उपरान्त यति (उच्चारण विराम) की व्यवस्था मानी गयी है ॥३४॥

## [1]ततं नौ म्रौ ॥६।३५॥

**मृतसञ्जीवनी**—यस्य पादे नगणौ (।।।.।।।) मगणरगणौ (ऽऽऽ.ऽ।ऽ) च तत् [2]ततं नाम ॥

नगणः नगणः मगणः रगणः नगणः नगणः मगणः रगणः
। । । । । । ऽ ऽ ऽ ऽ । ऽ । । । । । । ऽ ऽ ऽ ऽ । ऽ
कुरु क-रुणमि-यं गाढो-त्कण्ठिका यदुत्त-नय! च-कोरीभा राधिका।
नगणः नगणः मगणः रगणः नगणः नगणः मगणः रगणः
। । । । । । ऽ ऽ ऽ ऽ । ऽ । । । । । । ऽ ऽ ऽ ऽ । ऽ
विरह–दहन—सङ्गाद—ङ्गैः कृशा पिबतु तव मु-खेन्दोर्बि-म्बं दृशा ॥

**शिवप्रसादिनी**—जिसके वृत्त के प्रतिपाद में दो नगण (।।।-।।।) एक मगण (ऽऽऽ) और एक रगण (ऽ।ऽ) उपस्थित हों, उस वृत्त को ''तत'' नाम से कहा जाता है। यहाँ पर यति (उच्चारण के विराम) का नियम नहीं होता है ॥३५॥

## कुसुमविचित्रा न्यौ-न्यौ ॥६।३६॥[3]

**मृतसञ्जीवनी**—यस्य पादे नगणयगणौ (।।।.।ऽऽ) पुनरपि तावेव (।।।.।ऽऽ) तत् '[4]कुसुमविचित्रा' नाम।

---

(१) एतदादीनि 'चञ्चलाक्षिका–' इत्यन्तानि सूत्राणि वैदिकैर्न पठ्यन्ते।

(२) उक्तद्वादशाक्षरप्रस्तारस्य अष्टाशीत्यधिकैकसहस्रतमभेदः (१०८८) **'ततम्'** इति नाम्ना प्रसिद्धः।

(३) अत्र क्वचित्—**मणिमाला त्यौ त्यौ।**

इति सूत्रमधिकं पठ्यते। व्याख्यातं चैतदन्यैः–'अत्र प्रतिपादं तगणः, यगणः, तगणः, यगणश्च एतद्वृत्तं मणिमालाख्यं भवति। अस्मिन् वृत्ते षड्भिः षड्भिर्यतिरि'ति। द्वादशाक्षरप्रस्तारस्य एकाशीत्यधिकसप्तशततमोऽयं भेदः (७८१) उदाहरणं तु—

वृन्दारकवृन्दामन्दीकृतवन्द्यं वन्दे जननन्दं स्कन्दं शिवकन्दम्।
चण्डीकृतसन्धं बन्धुं गुणसिन्धुं कुन्दं पदकुन्दं वन्देऽमरवन्द्यम् ॥

इति। **'त्यौ त्यौ मणिमाला** छिन्ना गुहवक्त्रैः' -वृ० र०।

(४) उक्तद्वादशाक्षरप्रस्तारस्य षट्सप्तत्यधिकनवशततमो (९७६) भेदः **'कुसुमविचित्रा'** इति नाम्ना प्रसिद्धः। अत्र 'भिद्रसै रसैः' मं० म०।

नगणः यगणः नगणः यगणः नगणः यगणः नगणः यगणः
। ।। ।ऽऽ ।।। ।ऽऽ ।।। ।ऽऽ ।।। ।ऽऽ
विगलि-तहारा सकुसु-ममाला सचर–णलाक्षा वलय–सुलक्षा ।
नगणः यगणः नगणः यगणः नगणः यगणः नगणः यगणः
। । । ।ऽऽ ।।। ।ऽऽ ।।। । ऽ ऽ ।।। ।ऽऽ
विरचि–तवेषं सुरत—विशेषं कथय-ति शय्या कुसुम-विचित्रा ॥

**शिवप्रसादिनी**—जिसके प्रत्येक पाद में नगण (।।।) यगण (।ऽऽ) पुनः नगण (।।।) और यगण (।ऽऽ) का विधान हुआ हो, वह ''कुसुमविचित्रा'' छन्द वृत्त होता है। इस वृत्त में प्रत्येक छह अक्षरों के अनन्तर यति होने का नियम है ॥३६॥

## चञ्चलाक्षिका नौ रौ ।।६।३७।।

**मृतसञ्जीवनी**—यस्य पादे नगणौ (।।।.।।।) रगणौ (ऽ।ऽ.ऽ।ऽ) च भवतस्तद्वृत्तं 'चञ्चलाक्षिका[१]' नाम।

नगणः नगणः रगणः रगणः नगणः नगणः रगणः रगणः
। । । ।।। ऽ । ऽ ऽ । ऽ ।।। ।।। ऽ। ऽ ऽ । ऽ
अति सु-रभिर-भाजि पु-ष्पश्रिया- मतनु-तरत-येव सं-तानकः ।
नगणः नगणः रगणः रगणः नगणः नगणः रगणः रगणः
।।। ।।। ऽ । ऽ ऽ । ऽ ।।। ।।। ऽ ।ऽ ऽ।ऽ
तरुण-परभृ-तः स्वनं रागिणा- मतनु-त रत-ये वसं-तानकः ॥
(शि०व० ६।६७)

**शिवप्रसादिनी**—जिस छन्द के प्रत्येक पाद में दो नगण (।।।-।।।) तथा दो रगण (ऽ।ऽ-ऽ।ऽ) हों, वह ''चञ्चलाक्षिका'' वृत्त कही जाती है। इसमें यति का नियम नहीं है ॥३७॥

## भुजङ्गप्रयातं यः ।। ६।३८।।

**मृतसञ्जीवनी**—यस्य पादे चत्वारो यगणा (।ऽऽ.।ऽऽ.।ऽऽ.।ऽऽ) भवन्ति, तद् '[२]भुजङ्गप्रयातं' नाम।

---

(१) उक्तद्वादशाक्षरप्रस्तारस्य द्विशतषोडशाधिकैकसहस्रतमो भेदः (१२१६) **'चञ्चलाक्षिका'** इति नाम्ना ख्यातः। इयमेव **'गौरी'**– (पि०सू० ८।५), **'मुदितवदना'**– ग०पु० **'प्रमुदितवदना'**- वृ० र० सप्तसु पञ्चसु च यतिनियमादियमेव **'प्रभा'** च। तदुक्तम्—'स्वरशरविरतिर्ननौ रौ **प्रभा**' वृ०र०। (२) उक्तद्वादशाक्षरप्रस्तारस्य षडशीत्युत्तरपञ्चशततमो भेदः (५८६) **'भुजङ्गप्रयातम्'** इति नाम्ना विख्यातः।

यगणः यगणः यगणः यगणः यगणः यगणः यगणः यगणः

।ऽऽ ।ऽऽ ।ऽऽ ।ऽऽ ।ऽऽ ।ऽऽ ।ऽऽ ।ऽऽ

पुनः सा-धुवद्व[1]-क्ति मिथ्या विनीतः परोक्षे करोत्य-र्थनाशं हताशः ।

यगणः यगणः यगणः यगणः यगणः यगणः यगणः यगणः

।ऽऽ ।ऽऽ ।ऽऽ ।ऽऽ ।ऽऽ ।ऽऽ ।ऽऽ ।ऽऽ

भुजङ्ग-प्रयातो-पमं य-स्य चित्तं त्यजेत्ता-दृशं दु-श्चरित्रं कुमित्रम् ॥

अत्र पादान्ते यतिः ।

**शिवप्रसादिनी**—जिस छन्द के प्रतिपाद में चार यगण (।ऽऽ-।ऽऽ-।ऽऽ-।ऽऽ) हों, वह छन्द "भुजङ्गप्रयात" नाम वालां होता है । यहाँ पर पादान्त में यति होने का नियम है ॥३८॥

## स्रग्विणी रः ॥ ६।३९ ॥

**मृतसञ्जीवनी**—यस्य पादे रगणा (ऽ।ऽ-ऽ।ऽ-ऽ।ऽ-ऽ।ऽ) श्चत्वारस्तत् 'स्रग्विणी[2]' नाम ।

रगणः रगणः रगणः रगणः रगणः रगणः रगणः रगणः

ऽ।ऽ ऽ।ऽ ऽ।ऽ ऽ।ऽ ऽ।ऽ ऽ।ऽ ऽ।ऽ ऽ।ऽ

यो रणे युध्यते निर्भरं निर्भय- स्त्यागिता यस्य स-र्वस्वदा-नावधिः ।

रगणः रगणः रगणः रगणः रगणः रगणः रगणः रगणः

ऽ।ऽ ऽ।ऽ ऽ।ऽ ऽ।ऽ ऽ।ऽ ऽ।ऽ ऽ।ऽ ऽ।ऽ

तं नरं वीरल-क्ष्मीर्यशः-स्रग्विणी नूनम-भ्येति स-त्कीर्तिशु-क्लांशुका ॥

**शिवप्रसादिनी**—जिसके प्रत्येक पाद में चार रगण (ऽ।ऽ-ऽ।ऽ-ऽ।ऽ-ऽ।ऽ) उपलब्ध होते हों, वह छन्द "स्रग्विणी" कहलाती है ॥३९॥

## प्रमिताक्षरा स्जौ सौ ॥ ६।४० ॥

**मृतसञ्जीवनी**—यस्य पादे सगणजगणौ (।।ऽ.।ऽ।) सगणौ (।।ऽ.।।ऽ) च भवतस्तद्वृत्तं '[3]प्रमिताक्षरा' नाम । तत्रोदाहरणम्—

---

(१) 'भाति' क० मु० पुस्तके ।

(२) उक्तद्वादशाक्षरप्रस्तारस्यैकशतैकसप्तत्यधिकैकसहस्रतमो (११७१) **'स्रग्विणी'** इति नाम्ना प्रसिद्धः । **'लक्ष्मीधर'** इति नामान्तरं प्रा० पि० सू० २।१३३ ।

(३) उक्तद्वादशाक्षरप्रस्तारस्य सप्तशतद्विसप्तत्यधिकैकसहस्रतमो भेदः (१७७२) **'प्रमिताक्षरा'** इति नाम्ना ख्यातः ।

सगणः जगणः सगणः जगणः सगणः जगणः सगणः जगणः

।।ऽ ।ऽ। ।।ऽ ।ऽ। ।।ऽ ।ऽ। ।।ऽ ।ऽ।

परिशु-द्धवाक्य-रचना-तिशयं परिषि-ञ्चती श्र-वणयो-रमृतम् ।

सगणः जगणः सगणः जगणः सगणः जगणः सगणः जगणः

।।ऽ ।ऽ। ।।ऽ ।ऽ। ।।ऽ ।ऽ। ।।ऽ ।ऽ।

प्रमिता-क्षरापि विपुला-र्थवती तव-भा-रती ह-रति मे हृदयम् ॥

अत्र पादान्ते यतिः ।

**शिवप्रसादिनी**—जिस छन्द के प्रत्येक पाद में सगण (।।ऽ) जगण (।ऽ।) पुनः सगण (।।ऽ) और जगण (।ऽ।) आते हों, वह छन्द "प्रमिताऽक्षरा" कहलाती है । यहाँ पर पादान्त में यति की स्थिति होती है ॥४०॥

## कान्तोत्पीडा भ्मौ स्मौ ।। ६।४१।।

**मृतसञ्जीवनी**—यस्य पादे भगणमगणौ (ऽ।।.ऽऽऽ) सगणमगणौ (ऽ।।.ऽऽऽ) च भवतस्तद्वृत्तं '[१]कान्तोत्पीडा' नाम । तत्रोदाहरणम्—

भगणः मगणः सगणः मगणः भगणः मगणः सगणः मगणः

ऽ।। ऽऽऽ ।।ऽ ऽऽऽ ऽ।। ऽऽऽ ।।ऽ ऽऽऽ

कामश-रैर्व्याप्ता खलु का-न्तोत्पीडा- माप्तव-ती दुःखैः परिमु-ह्यन्ती या ।

भगणः मगणः सगणः मगणः भगणः मगणः सगणः मगणः

ऽ।। ऽऽऽ ।।ऽ ऽऽऽ ऽ।। ऽऽऽ ।।ऽ ऽऽऽ

सा लभ-ते चेत्का-मुकयो-गं गाढ दुःखवि-मुक्ता स्या-त्परमा-नन्दाप्ता ॥

**शिवप्रसादिनी**—जिस छन्द के अन्तर्गत चारों पादों के मध्य प्रत्येक पाद में भगण (ऽ।।) मगण (ऽऽऽ) एवं सगण (।।ऽ) तथा मगण (ऽऽऽ) होते हों, वह छन्द "कान्तोत्पीडा" नाम से कहा जाता है । पादान्त में यति हुआ करता है ॥४२॥

## वैश्वदेवी मौ याविन्द्रियर्क्षयः ।।६।४२।।

**मृतसञ्जीवनी**—यस्य पादे मगणौ (ऽऽऽ.ऽऽऽ) यगणौ (।ऽऽ.।ऽऽ) च भवतस्तद्वृत्तं '[२]वैश्वदेवी' नाम । पञ्चसु सप्तसु च यतिः । तत्रोदाहरणम्—

---

(१) उक्तद्वादशाक्षरप्रस्तारस्य एकोनशताधिकैकशततमो भेदः (१९९) **'कान्तोत्पीडा'** इति नाम्ना ख्यातः ।

(२) उक्तद्वादशाक्षरप्रस्तारस्य सप्तसप्तत्यधिकपञ्चशततमो (५७७) भेदो **'वैश्वदेवी'** इति नाम्ना प्रसिद्धः ।

मगणः मगणः यगणः यगणः

ऽ ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ

धन्यः पु-ण्यात्मा(५)जा-यते क्वा-पि वंशे(७)

मगणः मगणः यगणः यगणः

ऽ ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ

तादृक्पु-त्रोऽसौ(५)ये—न गोत्रं पवित्रम् (७)।

मगणः मगणः यगणः यगणः

ऽ ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ

गोविप्र—ज्ञाति(५)स्वा—मिकार्ये प्रवृत्तः(७)

मगणः मगणः यगणः यगणः

ऽ ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ

शुद्ध श्रा—द्धादौ(५)वै—श्वदेवी भवेद्यः(७) ॥

**शिवप्रसादिनी**—जिसके प्रतिपति पाद में दो मगण (ऽऽऽ-ऽऽऽ) दो यगण (।ऽऽ-।ऽऽ) आते हों वह ''वैश्वदेवी'' छन्द कहलाता है। यहाँ पर पाँच एवं सात अक्षरों के अनन्तर यति होने का नियम है ॥४२॥

## वाहिनी त्यौ म्यावृषिकामशराः ।।६।४३।।

**मृतसञ्जीवनी**—यस्य पादे [१]तगणयगणौ (ऽऽ।.।ऽऽ) मगणयगणौ (ऽऽऽ.।ऽऽ) च भवतस्तद्वृत्तं 'वाहिनी[२]' नाम। सप्तभिः पञ्चभिश्च यतिः। तत्रोदाहरणम्—

तगणः यगणः मगणः यगणः

ऽ ऽ । । ऽ ऽ ऽ ऽ ऽ । ऽ ऽ

[शक्ता ज-गतीं कृ-त्स्नां (७)जेतुं सुयोधा(५)

तगणः यगणः मगणः यगणः

ऽ ऽ । । ऽ ऽ ऽ ऽ ऽ । ऽ ऽ

हस्त्यश्व-रथोदा—रा(७)सा वा—हिनी ते(५)।

तगणः यगणः मगणः यगणः

ऽ ऽ । । ऽ ऽ ऽ ऽ ऽ । ऽ ऽ

छत्रे र-जसा भा—नौ(७)यस्याः प्रयाणे(५)

(१) 'तकारयकारौ मकारगकारौ' क०मु० पुस्तके।

(२) उक्तद्वादशाक्षरप्रस्तारस्य एकोनसप्तत्यधिकद्विशततमो भेदः (२६९) **'वाहिनी'** इति नाम्ना ख्यातः।

तगणः यगणः मगणः यगणः

ऽ ऽ । । ऽ ऽ ऽ ऽ ऽ । ऽ ऽ

घस्त्रेऽपि निशाभ्रा—न्ति(७)धत्ते नृलोकः(५) ।।][1]

**शिवप्रसादिनी**—जिस छन्द के हरेक पादों में तगण (ऽऽ।) यगण (।ऽऽ) मगण (ऽऽऽ) एवं यगण (।ऽऽ) उपस्थित हों, वह "वाहिनी" वृत्त होता है । सात अक्षरों एवं पाँच अक्षरों के आगे यति होने का यहाँ पर नियम है ।।४३।।

## नवमालिनी न्जौ भ्याविति ।।६।४४।।

**मृतसञ्जीवनी**—यस्य पादे नगणजगणभगणयगणा (।।।.।ऽ।.ऽ।।.।ऽऽ) भवन्ति तद्वृत्तं 'नवमालिनी[2]' नाम । तत्रोदाहरणम्—

नगणः जगणः भगणः यगणः

। । । । ऽ । ऽ । । । ऽ ऽ

धवल-यशोंऽशु-केन(८)प-रिवीता(४)

नगणः जगणः भगणः यगणः

। । । । ऽ । ऽ । । । ऽ ऽ

सकल–जनानु–राग(८)घु–सृणाक्ता(४) ।

नगणः जगणः भगणः यगणः

। । । । ऽ । ऽ । । । ऽ ऽ

दृढगु–णबद्ध–कीर्ति(८)कु–सुमौघै(४)

नगणः जगणः भगणः यगणः

। । । । ऽ । ऽ । । । ऽ ऽ

स्तव न-वमालि-नीव(८)नृ-प लक्ष्मीः(४) ।।

**अत्र वसुसमुद्रैर्यति**रित्याम्नायः ।

---

(१) अत्र प्राचीनमुदाहरणं न लब्धमित्येतदस्माभिः स्वीयं निवेशितम् । केचित्तु—**'वाहिनी त्मौ म्या–'** विति सूत्रं पठन्ति । तत्रोक्तद्वादशाक्षरप्रस्तारस्य एकविंशत्यधिकपञ्चशततमो (५२१) ऽयं भेदः । उदाहरणं च—
'यो वाहिनीं क्रव्यादां त्रुट्यर्धमात्रात् हन्तुं हि शक्तोऽनन्तः सोऽप्यद्य मूर्च्छाम् ।
प्राप्तः किमेतच्चित्रं पौलस्त्यशक्त्या? ज्ञातुं न शक्यतेऽज्ञैश्चारित्र्यमेषाम् ।।'
इति द्रष्टव्यम् । वस्तुतस्तु-सूत्रमेतद्वैदिकैर्न पठ्यते, न चाग्नेयेऽनूद्यत इति प्रक्षिप्तमेवेत्यन्यदेतत् ।

(२) उक्तद्वादशाक्षरप्रस्तारस्य चतुश्चत्वारिंशदधिकनवशततमो (९४४) भेदो **'नव-मालिनी'** इति नाम्ना प्रसिद्धः । श्रीकृष्णेन तु 'अर्वसायकैश्छिन्ना ।' इत्यन्यथैव यतिरुक्ता ।

इति भट्टहलायुधविरचितायां छन्दोवृत्तौ षष्ठोऽध्यायः ।

**शिवप्रसादिनी**—जिस वृत्त (छन्द) के प्रत्येक पाद में नगण (।।।) जगण (।ऽ।) भगण (ऽ।।) एवं यगण (।ऽऽ) उपस्थित हों, वह वृत्त "नवमालिका" नामवाली हुआ करता है ।।४४।।

।। इति सांख्य-योग-न्याय-वैशेषिक-पद-वाक्य-पारावारीणेन मैथिलपण्डित-चित्तनारायणपाठकाऽऽह्वयेन कृतायां पिङ्गलछन्दःशास्त्रीय-शिवप्रसादिनीव्याख्यायां षष्ठोऽध्यायः ।।

# सप्तमोऽध्यायः

**मृतसञ्जीवनी**—इदानीमतिजगती शक्वर्यतिशक्वर्यष्टिरत्यष्टिर्धृतिरतिधृतिश्चेति सप्त अतिच्छन्दांसि एकैकाक्षरवृद्ध्या क्रमेणोदाह्रियन्ते ।

तत्र—

**शिवप्रसादिनी**—इस सप्तमाऽध्याय में एक-एक अक्षरों की वृद्धि क्रम से अतिजगती, शक्वरी, अतिशक्वरी, अष्टि, अत्यष्टि, धृति और अतिधृति–ये सात छन्द प्रदर्शित किये जा रहे हैं—

(अतिजगत्याम्[1])

---

(१) 'अतिजगतीच्छन्दःपादघटकीभूतानां त्रयोदशसंख्याकानामक्षराणां प्रस्तारे कृते एक-शतद्विनवत्यधिकाष्टसहस्र (८१९२) भेदा जायन्ते । तेषु च भेदचतुष्कमेवात्र समुप-दिष्टमिति ग्रन्थान्तरेभ्यः समुपलभ्यमाना भेदा अत्र विनिर्दिश्यन्ते । यथा—

**सुनन्दिनीच्छन्दः (१३।२३६)**—'**सुनन्दिनी** सजसा मगौ ।'
ग०पु० १।२०९।२१

**कन्दुकच्छन्दः (१३।५८६)**—'इदं **कन्दुकं** यत्र येभ्यश्चतुर्भ्यो गः ।'

**चञ्चरीकावलीच्छन्दः (१३।११५४)**—'यमौ रौ विख्याता **चञ्चरीकावली** गः ।' वृ०र० **'मञ्जरीकावली'** इति क्वचित् ।

**विश्वच्छन्दः (१३।११७१)**—'रैश्चतुर्भिर्युतं गेन युक्तं च **विश्वम्** ।' अ०वृ०र०

**चन्द्रलेखाच्छन्दः (१३।११८४)**—'नसरयुगगैश्चन्द्रलेखर्तुलोकैः ।'
वृत्तरत्नाकरपरिशिष्टे ।

**उर्वशीच्छन्दः (१३।१३२४)**—
'**उर्वशी** नस्ततरगा राज्याङ्कैर्र्ऋतुभिर्यतिः ।' मं०म०

**मोहप्रलापच्छन्दः (१३।१३२९)**—
'**मोहप्रलापः** श्रुतिभिर्ग्रहैर्भिन्नो भभत्रगाः ।' मं०म०

**चन्द्रिकाच्छन्दः (१३।१३४४)**—'ननतरगुरुभिश्चन्द्रिकाश्वषड्भिः ।' वृ०र०

**मृगेन्द्रमुखच्छन्दः (१३।१३९२)**—'भवति **मृगेन्द्रमुखं** नजौ जरौ गः ।'

**तारकच्छन्दः (१३।१७५६)**—'यदि तोटकवृत्तपदे गुरुरेको भवतीह तदा किल **तारकवृत्तम्**' वाणीभूषणे २।१५१

**चण्डीच्छन्दः (१३।१७९२)**—'नयुगलसयुगलरगैरिति **चण्डी** ।'
वृत्तरत्नाकरछन्दोमञ्जर्यादिषु ।

## प्रहर्षिणी म्नौ जरौ ग् त्रिकदशकौ ।।७।१।।

**मृतसञ्जीवनी**—यस्य पादे मगणनगणौ (ऽऽऽ.।।।) जगणरगणगकाराश्च (।ऽ।.ऽ।ऽ.ऽ) भवन्ति, तद्वृत्तं '[1]प्रहर्षिणी' नाम । त्रिभिर्दशभिश्च यतिः । तत्रोदाहरणम्—

मगणः नगणः जगणः रगणः गु०
ऽ ऽ ऽ । । । । ऽ । ऽ । ऽ ऽ
उत्तुङ्ग(३)स्तनक–लशद्व–योन्नता–ङ्गी(१०)
मगणः नगणः जगणः रगणः गु०
ऽ ऽ ऽ । । । । ऽ । ऽ । ऽ ऽ
लोलाक्षी(३)विपुल-नितम्ब-शालिनी च(१०)।
मगणः नगणः जगणः रगणः गु०
ऽ ऽ ऽ । । । । ऽ । ऽ । ऽ ऽ
बिम्बोष्ठी(३)नरव-र! मुष्टि–मेयम–ध्या(१०)

---

**उपस्थितच्छन्दः (१३।१८२२)**—'**उपस्थित**मिदं ज्सौ त्सौ सगुरुकौ चेत् ।'
**कुटजगतिच्छन्दः (१३।२०९६)**—'**कुटजगति**र्नजौ पञ्चर्तु भ्तौ गुरुः ।'
**क्षमाच्छन्दः (१३।२३६८)**—'तुरगरसयतिर्नौ ततौ गः **क्षमा** ।' वृ०र०
अस्यैव छन्दसः '**विद्युत्**', '**उत्पलिनी**'ति च नामान्तरे ।
**मञ्जुहासिनीच्छन्दः (१३।२७९०)**—'जतौ सजौ गो भवति मञ्जुहासिनी ।'
**मञ्जुभाषिणीच्छन्दः (१३।२७९६)**—'सजसा जगौ भवति मञ्जुभाषिणी ।' अस्यैव '**कलहंसः, प्रबोधितां, सिंहनादः, नन्दिनी,**' ति च नामान्तराणि वृत्तरत्नाकर-परिशिष्टादिषूपलभ्यन्ते ।
**कलहंसीच्छन्दः (१३।३२७७)**—
'**कलहंसी** तयसभाः गौ यती रससिद्धिभिः ।' मं०म० ।
**रतिच्छन्दः (१३।४०८४)**—'चतुर्भिर्नवभिश्छिन्ना **रतिः** सभनसा गुरुः ।' मं०म० ।
**कन्दच्छन्दः (१३।४६८२)**—
'धजा तूर हारो पुणो तूर हारेण गुरू सद्द किज्जे अ एक्का तआरेण ।
कएसा कला कंदु जंपिज्ज णाएणं असी होइ चउअग्गला सव्वा एण ।।'
प्राकृतपिङ्गलसूत्रे २।१६३
**पङ्क्तावलीच्छन्दः (१३।६९३९)**—
'चामर पढमहि पापगणो धुअ सल्ल चरणगण ठावहि तं जुअ ।
सोलह कलअ पआपअ जाणिअ पिंगल पभणइ **पंकअवालिअ** ।।' (प्र.पि.सू. २।१६५)

(१) उक्तत्रयोदशाक्षरप्रस्तारस्य चतुःशतैकाधिकैकसहस्रतमो भेदः (१४०१) '**प्रहर्षिणी**' इति नाम्ना ख्यातः ।

मगणः नगणः जगणः रगणः गु०

ऽ ऽऽ ।।। ।ऽ। ऽ।ऽ ऽ

सा नारी(३)भवतु मनःप्र-हर्षिणी ते(१०)॥

**शिवप्रसादिनी**—जिस वृत्त के प्रत्येक पाद में मगण (ऽऽऽ) नगण (।।।) जगण (।ऽ।) रगण (ऽ।ऽ) और अन्त में एक गुरू वर्ण हो, वह "प्रहर्षिणी" वृत्त होता है, जिसमें तीन अक्षरों और दश अक्षरों के अनन्तर यति के होने का नियम है ॥१॥

## रुचिरा ज्भौ स्जौ ग् चतुर्नवकौ ।।७।२।।

**मृतसञ्जीवनी**—यस्य पादे जगणभगणौ (।ऽ।.ऽ।।) सगणजगणौ (।।ऽ.।ऽ।) गुरुश्च (ऽ), तद्वृत्तं 'रुचिरा[१]' नाम। चतुर्भिर्नवभिश्च यतिः। तत्रोदाहरणम्—

जगणः भगणः सगणः जगणः गु०

।ऽ। ऽ।। ।।ऽ ।ऽ। ऽ

मृगत्व-चा(४)रुचि-रतरा-म्बरक्रि-यः(९)

जगणः भगणः सगणः जगणः गु०

।ऽ। ऽ।। ।।ऽ ।ऽ। ऽ

कपाल-भृ(४)त्कपि-लजटा-ग्रपल्ल-वः(९)।

जगणः भगणः सगणः जगणः गु०

।ऽ। ऽ।। ।।ऽ ।ऽ। ऽ

ललाट-दृ(४)ग्दह-नतृणी-कृतस्म-रः(९)

जगणः भगणः सगणः जगणः गु०

।ऽ। ऽ।। ।।ऽ ।ऽ। ऽ

पुनातु वः(४)शिशु-शशिशे-खरः शि-वः(९)॥

**शिवप्रसादिनी**—जिस छन्द के प्रतिपाद में जगण (।ऽ।) भगण (ऽ।।) सगण (।।ऽ) जगण (।ऽ।) एवं गुरु वर्ण उपलब्ध हो, वह वृत्त "रूचिरा" नाम वाला होता है। इसमें पुनः चार अक्षरों के उपरान्त तथा नौ अक्षरों के उपरान्त यति की उपस्थिति होती है ॥२॥

## मत्तमयूरं म्तौ य्सौ ग् समुद्रनवकौ ।।७।३।।

**मृतसञ्जीवनी**—यस्य पादे मगणतगणयगणसगणगकाराः (ऽऽऽ.ऽऽ।.।ऽऽ.।।ऽ.ऽ)

(१) उक्तत्रयोदशाक्षरप्रस्तारस्याष्टशतषडधिकद्विसहस्रतमो (२८०६) भेदः **'रुचिरा'** इति नाम्ना ख्यातः। अस्यैव **'अतिरुचिरा'** इत्यपि नाम।

भवन्ति, तद्वृत्तं 'मत्तमयूरम्[१]' नाम । पूर्वैव यतिः । तत्रोदाहरणम्—

मगणः तगणः यगणः सगणः गु०
ऽ ऽ ऽ ऽ ऽ । । ऽ ऽ । । ऽ ऽ
व्यूढोर-स्कः सिंह-समाना-नतम-ध्यः

मगणः तगणः यगणः सगणः गु०
ऽ ऽ ऽ ऽ ऽ । । ऽ ऽ । । ऽ ऽ
पीनस्क-न्धः सिन्धु-रहस्ता-यतबा-हुः ।

मगणः तगणः यगणः सगणः गु०
ऽ ऽ ऽ ऽ ऽ । । ऽ ऽ । । ऽ ऽ
कम्बुग्री-वः स्निग्ध-शरीर-स्तनुलो-मा

मगणः तगणः यगणः सगणः गु०
ऽ ऽ ऽ ऽ ऽ । । ऽ ऽ । । ऽ ऽ
भुङ्क्ते रा-ज्यं मत्त-मयूरा-कृति ने-त्रः ॥

**शिवप्रसादिनी**—जिस वृत्त के प्रतिपाद में मगण (ऽऽऽ) तगण (ऽऽ।) यगण (।ऽऽ) सगण (।।ऽ) एवम् अन्त में गुरु अक्षर का विधान हो, वह ''मत्तमयूर'' नामक वृत्त होता है । यहाँ पर भी क्रमशः चार और नौ अक्षरों पर यति होती है ॥३॥

## गौरी नौ नूसौ ग् ।।७।४।।

**मृतसञ्जीवनी**—यस्य पादे नगणत्रयं (।।।.।।।.।।।) सगणो (।।ऽ) गुरुश्च (ऽ), तद्वृतं 'गौरी[२]' नाम । तत्रोदाहरणम्—

नगणः नगणः नगणःसगणः गु० नगणः नगणः नगणः सगणः गु०
। । । । । । । । । । । ऽ ऽ । । । । । । । । । । । ऽ ऽ
सकल-भुवन-जगण-नतपा-दा निजप-दभंज-नशमि-त विषा-दा ।

नगणः नगणः नगणःसगणःगु० नगणः नगणः नगणः सगणः गु०
। । । । । । । । । । । ऽ ऽ । । । । । । । । । । । ऽ ऽ
विजित-सरसि-रुहन-यनप-द्मा भरतु सकल-मिह ज-गति गौ-री ॥

**शिवप्रसादिनी**—जिस वृत्त के प्रत्येक पाद में तीन नगण (।।।-।।।-।।।) एक

---

(१) उक्तत्रयोदशाक्षरप्रस्तारस्य षट्शतत्रयस्त्रिंशदधिकैकसहस्रतमो (१६३३) भेदः **'मत्तमयूरम्'** इति नाम्ना प्रसिद्धः ।

(२) उक्तत्रयोदशाक्षरप्रस्तारस्याष्टचत्वारिंशदधिकाद्विसहस्रतमो (२०४८) भेदो **'गौरी'** इति नाम्ना ख्यातः ।

सगण (।।ऽ) और अन्त्य गुरू वर्ण (ऽ) हो, वह वृत्त ''गौरी'' नाम से पुकारा जाता है ।।४।।

(शक्वर्याम्[१])

**असंबाधा म्तौ न्सौ गाविन्द्रियनवकौ ।।७।५।।**

---

(१) केषुचित् पुस्तकेषु एषैव शक्वरी 'शर्करी' इत्युद्दिश्यते। शक्वरीच्छन्दः पादघटकीभूतानां चतुर्दशसंख्याकानामक्षराणां प्रस्तारे कृते त्रिशतचतुरशीत्यधिकषोडशसहस्रभेदा (१६ ३८४) जायन्ते; परमत्र **असंबाधा, अपराजिता, प्रहरणकलिता, वसन्ततिलका** चेति भेदचतुष्टयमेव निर्दिष्टम्। ग्रन्थेष्वन्येष्वन्येऽपि भेदा उपलभ्यन्ते तेऽत्र क्रमशो विलिख्यन्ते—

**वासन्तीच्छन्दः (१४।४८१)**—'मात्तो नो मो गौ यदि गदिता **वासन्तीयम्**।'

**मध्यक्षामाच्छन्दः (१४।४९७)**—'**मध्यक्षामा** युगदशविरामा म्भौ न्मौ गौ।'

**'हंसश्येनी'** इति नामान्तरमन्यत्र।

**कुटिलच्छन्दः (१४।१००९)**—

'मो भो न्यौ गौ यदि **कुटिलक**मुक्तं वृत्तम्।' अ०वृ०र०

**गोवृषच्छन्दः (१४।१६३३)**—

'वेदैर्दिग्भिर्मात्तयसा **गोवृष** उक्तो गौ।' अ०वृ०र०

**नान्दीमुखीच्छन्दः (१४।२३६८)**—

'स्वरभिदि यदि नौ तौ च **नान्दीमुखी** गौ।'

**नदीच्छन्दः (१४।२८८०)**—'ननतजगुरुगैः सप्तयति**र्नदी** स्यात्।'

**कुमारीच्छन्दः (१४।२९९२)**—'नजभजगैर्गुरुश्च वसुषट् **कुमारी**।'

**अलोलाच्छन्दः (१४।३०९७)**—

'द्विसप्तच्छिद**लोला** म्सौ म्भौ गौ चरणे चेत्।'

**इन्दुवदनाच्छन्दः (१४।३८२३)**—'**इन्दुवदना** भजसनैः सगुरुयुग्मैः।'

**लक्ष्मीच्छन्दः (१४।३९२५)**—'**लक्ष्मी**रन्तविरामा म्सौ तनगुरुयुग्मम्।'

**सुपवित्रच्छन्दः (१४।४०९६)**—'त्रिननगगिति वसुयति **सुपवित्रम्**।'

**मञ्जरीच्छन्दः (१४।४८४४)**—'सजसा यलौ गिति शरग्रहै**र्मञ्जरी**।'

**पथ्याच्छन्दः (१४।४८४४)**—'**पथ्या** सजसयल्गैः स्यात्ककुब्भिः श्रुतिभिर्यतिः।'

इयं यतिभेदमात्रेण 'मञ्जर्या' भिद्यते। मं०म०

**चन्द्रौरसः (१४।५१०५)**—म्भौ न्यौ ल्गौ चेदिह भवति च **चन्द्रौरसः**।'

**सुकेशरच्छन्दः (१५।५५९२)**—'नरनरैर्लगौ च गदितं **सुकेशरम्**।'

**प्रमदाच्छन्दः (१४।७०८८)**—'नजभजला गुरुश्च भवति **प्रमदा**।'

**चक्रपदच्छन्दः (१४।८१९१)**—'**चक्रपद**मिह भननननलगुरुभिः।'

वृत्तरत्नाकरपरिशिष्टच्छन्दोमञ्जर्यादिषु।

**मृतसञ्जीवनी**—यस्य पादे मगणतगणनगणसगणा (ऽऽऽ.ऽऽ।.।।।.।।ऽ) गकारौ (ऽ.ऽ) च भवतस्तद्वृत्तम् 'असंबाधा[१]' नाम । पञ्चभिर्नवभिश्च यतिः । तत्रोदाहरणम्—

मगणः तगणः नगणः सगणः गु० गु०
ऽ ऽ ऽ ऽ ऽ । । । । । । ऽ ऽ ऽ
भङ्क्त्वा दु-र्गाणि(५)द्रु-भवन-मखिलं छि–त्त्वा (९)

मगणः तगणः नगणः सगणः गु० गु०
ऽ ऽ ऽ ऽ ऽ । । । । । । ऽ ऽ ऽ
हत्वा त-त्सैन्यं(५)क-रितुर-गबलं ह–त्वा(९)

मगणः तगणः नगणः सगणः गु० गु०
ऽ ऽ ऽ ऽ ऽ । । । । । । ऽ ऽ ऽ
येनासं-बाधा(५)स्थि-तिरज-नि विप–क्षा–णां(९)

मगणः तगणः नगणः सगणः गु० गु०
ऽ ऽ ऽ ऽ ऽ । । । । । । ऽ ऽ ऽ
सेर्वीवी-नाथः(५)स जयति नृपति–र्मु–ञ्जः(९) ।।

**शिवप्रसादिनी**—जिस वृत्त के प्रत्येक पाद में क्रमशः मगण (ऽऽऽ) तगण (ऽऽ।) नगण (।।।) सगण (।।ऽ) एवं दो गुरु वर्ण (ऽ-ऽ) मिलते हों, वह वृत्त ''असम्बाधा'' नाम से कही जाती है ।।५।।

## अपराजिता नौ र्सौ ल्गौ स्वरऋषयः ।।७।६।।

**मृतसञ्जीवनी**—यस्य पादे नगणौ (।।।.।।।) रगणसगणलकारा गकारश्च (ऽ।ऽ.।।ऽ.।.ऽ) तद्वृत्तम् 'अपराजिता[२]' नाम । सप्तभिः सप्तभिश्च यतिः । तत्रोदाहरणम्—

नगणः नगणः रगणः सगणः ल० गु०
। । । । । । ऽ । ऽ । । ऽ । ऽ
फणिप-तिवल-यं(७)जटा-मुकुटो–ज्व–लं(७)

नगणः नगणः रगणः सगणः ल० गु०
। । । । । । ऽ । ऽ । । ऽ । ऽ
मनसि-जमथ-नं(७)त्रिशू-लविभू–षि–तम्(७) ।

---

(१) उक्तचतुर्दशाक्षरप्रस्तारस्य सप्तदशाधिकद्विसहस्रतमो (२०१७) भेदः **'असंयाधा'** इति नाम्ना प्रसिद्धः ।

(२) उक्तचतुर्दशाक्षरप्रस्तारस्याष्टशतचतुर्विंशत्यधिकपञ्चसहस्रतमो (५८२४) भेदः **'अपराजिता'** इति नाम्ना ख्यातः ।

नगणः नगणः रगणः सगणः ल० गु०
| | | | | | ऽ | ऽ | | ऽ | ऽ
स्मरसि यदि स-खे(७)शिवं शशिशे-ख-रं(७)
नगणः नगणः रगणः सगणः ल० गु०
| | | | | | ऽ | ऽ | | ऽ | ऽ
भवति तव त-नुः(७)परै-रपरा-जि-ता(७) ॥

**शिवप्रसादिनी**—जिस वृत्त के प्रतिपाद में क्रमिकरूप से दो नगण (।।।-।।।) एक रगण (ऽ।ऽ) एक सगण (।।ऽ) तथा एक लघु (१) और एक गुरु वर्ण (ऽ) विद्यमान हो, वह वृत्त ''अपराजिता'' नाम का होता है । इस छन्द के सात-सात अक्षरों पर यति लगने का विधान है ॥६॥

## प्रहरणकलिता नौ भ्नौ ल्गौ च ।।७।७।।

**मृतसञ्जीवनी**—यस्य पादे नगणौ (।।।.।।।) भगणनगणौ, (ऽ।।.।।।) लकारो गकारश्च (।.ऽ) भवन्ति, तद्वृत्तं 'प्रहरणकलिता[१]' नाम । चकारात्पूर्वोक्तैव यतिः । तत्रोदाहरणम्—

नगणःनगणः भगणः नगणः ल०गु०
| | | | | | ऽ | | | | | | ऽ
सुरमु-निमनु-जै(७)रुप-चितच-र-णां (७)
नगणःनगणः भगणः नगणः ल०गु०
| | | | | | ऽ | | | | | | ऽ
रिपुभ-यचकि-त(७)त्रिभु-वनश-र-णाम् (७) ।
नगणः नगणः भगणः नगणः ल० गु०
| | | | | | ऽ | | | | | | ऽ
प्रणम-त महि-षा(७)सुर-वधकु-पि-तां(७)
नगणःनगणः भगणः नगणःल० गु०
| | | | | | ऽ | | | | | | ऽ
प्रहर-णकलि-तां(७)पशु-पतिद-यि-ताम् (७) ॥

**शिवप्रसादिनी**—जिस वृत्त के प्रत्येक पाद में क्रमशः दो नगण (।।।-।।।) एक भगण (ऽ।।) एक नगण (।।।) एक लघु और एक गुरू अक्षर उपलब्ध हों, तो वह वृत्त

(१) उक्तचतुर्दशाक्षरप्रस्तारस्यैकशताष्टाविंशत्यधिकाष्टसहस्रतमो (८१२८) भेदः **'प्रहरणकलिता'** इति नाम्ना ख्यातः । वृत्तरत्नाकरछन्दोमञ्जर्योस्तु 'प्रहरणकलिका' इति पाठः ।

"प्रहरणकलिता" कहलाती है । यहाँ पर भी सात अक्षरों के उपरान्त यति की उपस्थिति होती है ।।७।।

## वसन्ततिलका त्भौ जौ गौ ।।७।८।।

**मृतसञ्जीवनी**—यस्य पादे तगणभगणौ (ऽऽ।.ऽ।।) जगणौ (।ऽ।.।ऽ।) गकारौ (ऽ.ऽ) च तद्वृत्तं 'वसन्ततिलका[१]' नाम । तत्रोदाहरणम्—

तगणः भगणः जगणः जगणः गु० गु०
ऽ ऽ । ऽ । । । ऽ । । ऽ । ऽ ऽ
उद्धर्षि-णी जन-दृशां स्त-नभार-गु-र्वी

तगणः भगणः जगणः जगणः गु० गु०
ऽ ऽ । ऽ । । । ऽ । । ऽ । ऽ ऽ
नीलोत्प-लद्युति-मलिम्लु-चलोच-ना च ।

तगणः भगणः जगणः जगणः गु० गु०
ऽ ऽ । ऽ । । । ऽ । । ऽ । ऽ ऽ
सिंहोन्न-तत्रिक-तटी कु-टिलाल-का-न्ता

तगणः भगणः जगणः जगणः गु० गु०
ऽ ऽ । ऽ । । । ऽ । । ऽ । ऽ ऽ
कान्ता व-सन्तति-लका नृ-पवल्ल-भा-सौ ।।

पादान्ते यतिः[२] ।

**शिवप्रसादिनी**—जिस वृत्त के हरेक पाद में अनुक्रम से यदि तगण (ऽऽ।) भगण (ऽ।।) तथा दो जगण (।ऽ।-।ऽ।) और दो गुरूवर्ण (ऽऽ) उपलब्ध हों, तो वह वृत्त "वसन्ततिलका" नाम को धारण करता है ।।८।।

## सिंहोन्नता काश्यपस्य ।।७।९।।

**मृतसञ्जीवनी**—इयमेव वसन्ततिलका काश्यपस्याचार्यस्य मतेन 'सिंहोन्नता[३]' नाम भवति । पूर्वमेवोदाहरणम् ।

**शिवप्रसादिनी**—यही "वसन्ततिलका" वृत्त आचार्य काश्यप के मत से **'सिंहोन्नता'** कही जाती है ।।९।।

---

(१) उक्तचतुर्दशाक्षरप्रस्तारस्य नवशतत्रयस्त्रिंशदधिकद्विसहस्रतमो (२९३३) भेदो **'वसन्ततिलका'** इति नाम्ना विख्यातः ।

(२) 'विरतिः सप्तसप्ताक्षरैर्मता ।' इति कृष्णः ।

(३) **'सिंहोद्धता'** इति मं०म० ।

## उद्धर्षिणी सैतवस्य ।।७।१०।।

**मृतसञ्जीवनी**—इयमेव वसन्ततिलका सैतवस्याचार्यस्य मते 'उद्धर्षिणी[१]' नाम । पूर्वमेवोदाहरणम् ।

**शिवप्रसादिनी**—यह ही ''वसन्ततिलका'' वृत्त पुनः सैतवाऽऽचार्य के मताऽनुसार ''उद्घर्षिणी'' नाम से विभूषित होता है ।।१०।।

(अतिशक्वर्याम्[२])

---

(१) **'मधुमाधवी'** इति गोमानसः, **'चेतोहिता'** इति रामकीर्तिः । मं०म० ।

(२) अतिशक्वरीछन्दःपादघटकीभूतानां पञ्चदशसंख्याकानां वर्णानां प्रस्तारे कृते सप्तशताष्टषष्ट्यधिकद्वात्रिंशत्सहस्रभेदा (३२७६८) जायन्ते । तेष्वत्र द्वावेव भेदौ निर्दिष्टौ । अतोऽन्येभ्यो ग्रन्थेभ्य आकृष्योपलभ्यमाना भेदा निर्दिश्यन्ते । यथा—

**लीलाखेलच्छन्दः (१५।१)**—'एकन्यूनौ विद्युन्मालापादौ चेल्**लीलाखेलः** ।'
अस्यैव **'कामक्रीडा'** इति **'सारङ्गिका'** इति च नामान्तरे ।

**चित्राच्छन्दः (१५।४६०८)**—'**चित्रा**नामच्छन्दश्चित्रं चेत्रयो मा यकारौ ।'

**चन्द्रलेखाच्छन्दः (१५।४६२५)**—'म्रौ म्यौ यान्तौ भवेतां सप्ताष्टभि**श्चन्द्रलेखा** ।'
**'चन्द्रसेना'** इति नामान्तरं कृष्णीये ।

**चन्द्रकान्ताच्छन्दः (१५।५६५१)**—
'**चन्द्रकान्ता** मता रौ मः स्यौ विरतिः स्वराष्टौ ।'

**ऋषभच्छन्दः (१५।५८६८)**—'**ऋषभा**ख्यमेतदुदितं सजसाः सयौ चेत् ।'

**एलाच्छन्दः (१५।८१७२)**—'सजना नयौ शरदशयतिरिय**मेला** ।'
**'रेखा'** इत्यस्या नामान्तरम् ।

**विपिनतिलकच्छन्दः (१५।९६९६)**—'**विपिनतिलकं** नसनरेफयुग्मभवेत् ।'

**प्रभद्रकच्छन्दः (१५।११९८४)**—भवति नजौ भजौ रसहितौ **प्रभद्रकम्** ।'
अस्यैव **'सुखेलकम्'** इति नामान्तरम् ।

**उपमालिनीच्छन्दः (१५।११५८४)**—'ननतभरकृताष्टस्वरै**रुपमालिनी** ।'

**मानसहंसच्छन्दः (१५।११६२८)**—'कथयन्ति **मानसहंस**नाम सजौ जभर् ।'

**निशिपालकच्छन्दः (१५।१२००५)**—
'शंस **निशिपालक**मिदं भजसनाश्च रः ।'
वृत्तरत्नाकरतत्परिशिष्टछन्दोमञ्जर्यादिषु ।

**नलिनीच्छन्दः (१५।१३०४४)**—'सगणैः शिववक्रमितैर्गदिता **नलिनी** ।'

**भ्रमरावलीच्छन्दः (१५।१४०४४)**—
'कर पंच पसिद्ध विलद्धवरं रअणं पभणंति मणोहर छंदवरं रअणं ।

## चन्द्रावर्ता नौ नौ स् ।।७।११।।

**मृतसञ्जीवनी**—यस्य पादे नगणाश्चत्वारः (।।।.।।।.।।।.।।।) सगणश्च (।।ऽ), तद्वृत्तं 'चन्द्रावर्ता[१]' नाम । तत्रोदाहरणम्—

नगणः नगणः नगणः नगणः सगणः
पटुज–वपव–न(७)चलि–तजल–लहरी (८)
नगणः नगणः नगणः नगणः सगणः
तरलि–तविह–ग(७)निव–हरव–मुखरम् (८)।
नगणः नगणः नगणः नगणः सगणः
विकसि-तकम-ल(७)सुर-भिशुचि सलिलं (८)
नगणः नगणः नगणः नगणः सगणः
विचर-ति पथि-क(७)मन-सि-शर-दि सरः (८)।

अत्र स्वरैर्वसुभिश्च यतिरित्याम्नायः ।

**शिवप्रसादिनी**—जिस वृत्त के प्रत्येक पाद में क्रमशः चार नगण (।।।-।।।-।।।-।।।) और एक सगण (।।ऽ) उपलब्ध होते हों, उस वृत्त को ''चन्द्रावर्ता'' कहते हैं ।।११।।

## मालर्तुनवकौ चेत् ।।७।१२।।

**मृतसञ्जीवनी**—सैव चन्द्रावर्ता 'माला[१]' नाम भवति; यदा षष्ठे, नवमे च वर्णे

---

गुरु पंच दहा लहु एरिसिअं रइअं **भमरावलि** छंद पसिद्ध किअं ठइअ ।।'
(प्रा०पि०सू० २।१८५)

**तूणकच्छन्दः (१५।११०२३)**—'**तूणकं** समानिकापदद्वयं विनान्तिमम् ।' अत्र–'द्वीपवसुभिर्यतिः ।' इति कृष्णः । अस्यैव '**चामर**' इति नामान्तरम् ।

(१) उक्तपञ्चदशाक्षरप्रस्तारस्य त्रिशतचतुरशीत्यधिकषोडशसहस्रतमो (१६३८४) भेदः '**चन्द्रावर्ता**' इति नाम्ना ख्यातः । अत्रोदाहरणे 'चन्द्रावर्ता' इति चतुर्गुरुकं नाम प्रवेष्टुमशक्यमिति न प्रवेशितम् । अत एव वृत्तरत्नाकरादिषु '**शशिकला**' इत्येव नाम समुपलभ्यते । प्राकृतपिङ्गलसूत्रे च अस्यैव छन्दसः '**शरभः**' इति नाम ।

(१) अत्र यतिभेदादेव नामान्तरम् ।

यतिः । तत्रोदाहरणम्—

नगणः नगणः नगणः नगणः सगणः

।।। ।।। ।।। ।।। ।।ऽ

नववि–कसित(६)–कुवल–यदल–नयने (९)

नगणः नगणः नगणः नगणः सगणः

।।। ।।। ।।। ।।। ।।ऽ

निशम-य नव(६)-जलध-रमिह गगने (९)।

नगणः नगणः नगणः नगणः सगणः

।।। ।।। ।।। ।।। ।।ऽ

अपन–य रुष(६)-मुपस-र मम सविधं (९)

नगणः नगणः नगणः नगणः सगणः

।।। ।।। ।।। ।।। ।।ऽ

यदि र-तिसुख(६)-मभिल-षसि ब-हुविधम् (९) ॥

**शिवप्रसादिनी**—वही चन्द्रावर्ता वृत्त तब "माला" नाम वाला होता है, जब उस वृत्त के ऋतु = छठे और नौवें अक्षरों के आगे यति उपस्थित होता हो ॥१२॥

## [१]मणिगुणनिकरो वस्वृषयः ।।७।१३।।

**मृतसञ्जीवनी**—सैव चन्द्रावर्ता 'मणिगुणनिकरो[२]' नाम भवति, यदाष्टभिः, सप्तभिश्च यतिः । तत्रोदाहरणम्—

नगणः नगणः नगण नगणः सगणः

।।। ।।। ।।। ।।। ।।ऽ

कथम-पि निप-तित(८)म-तिमह-ति पदे(७)

नगणःनगणः नगणः नगणः सगणः

।।। ।।। ।।। ।।। ।।ऽ

नरम-नु-सर-ति न(८)फ-लमनु-पचितम् (७)।

नगणः नगणः नगणः नगणः सगणः

।।। ।।। ।।। ।।। ।।ऽ

अपि व-रयुव-तिषु(८)कु-चतट-निहितः (७)

---

(१) 'मणिगणनिकरो' क० मु० पुस्तके।

(२) अत्र यतिभेदादेव नामान्तरम्।

नगणः नगणः नगणः नगणः सगणः

। । । । । । । । । । । । । । ऽ

स्पृशति न वपु-रिह(८)म-णिगुण-निकरः (७) ॥

वही चन्द्रावर्ता उस अवस्था में "मणिगुणनिकर" नाम वाला होता है, जब क्रमशः आठ अक्षरों एवं सात अक्षरों के उपरान्त वहाँ के पाद में यति होता हो ॥१३॥

## मालिनी नौ म्यौ य् ।।७।१४।।

**मृतसञ्जीवनी**—यस्य पादे नगणौ, मगणयगणौ, यगणश्च (।।।.।।।.ऽऽऽ.।ऽऽ.।ऽऽ) भवति, तद्वृत्तं 'मालिनी[1]' नाम । पूर्वैव यतिः । तत्रोदाहरणम्—

नगणः नगणः मगणः यगणः यगणः

। । । । । । ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ

अतिवि–पुलल–लाटं(८)पी–वरोरः–कपाटं (७)

नगणः नगणः मगणः यगणः यगणः

। । । । । । ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ

सुघटि-त दश-नोष्ठं(८)व्या-प्रतुल्य-प्रकोष्ठम् (७)

नगणः नगणः मगणः यगणः यगणः

। । । । । । ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ

पुरुष-मशनि–लेखा(८)ल–क्षणं वी–रलक्ष्मी (७)

नगणः नगणः मगणः यगणः यगणः

। । । । । । ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ

रतिसु-रभिय-शोभि(८)र्मा-लिनी-वा-भ्युपैति (७) ॥

**शिवप्रसादिनी**—जिस वृत्त के हरेक पाद में क्रमिक रूप से दो नगण (।।।-।।।) एक मगण (ऽऽऽ) एवं दो यगण (।ऽऽ-।ऽऽ) हों, उसको "मालिनी" वृत्त कहते हैं। प्रतिपाद में पुनः आठ और सात अक्षरों पर यति की उपस्थिति होती है ॥१४॥

(अष्टौ[2])

---

(१) उक्तपञ्चदशाक्षरप्रस्तारस्य षट्शतद्विसप्तत्युत्तरचतुःसहस्रतमो (४६७२) भेदो **'मालिनी'** इति नाम्ना ख्यातः।

(२) अष्टिच्छन्दः पादघटकीभूतानां षोडशाक्षराणां वर्णप्रस्तारनियमेन प्रस्तारे कृते पञ्चशतषट्त्रिंशदधिकपञ्चषष्टिसहस्रभेदा (६५५३६) जायन्ते। तेष्वत्र ऋषभगजविलसितनामैक एव भेदो निर्दिष्टः। तदतिरिक्ता ग्रन्थान्तरेषूपलभ्यमानभेदा यथा—

**ब्रह्मरूपकच्छन्दः (१६।१)—**

'उम्मत्ता जोहा उट्ठे कोहा उप्पांउप्पी जुज्झंता
मेणक्का रंभा णाहे दंभा अप्पाअप्पी बुज्झंता।
धावंता राल्ला छिण्णाकंठा मत्थापिट्ठी सेक्खत्ता
संमग्गा भग्गा जाए अग्गा लुद्धा उद्धा हेरंता ॥'

प्रा० पि०सू० २।२०९

**प्रवरललितच्छन्दः (१६।१०१७८)—**

'यमौ नः स्रौ गश्च **प्रवरललितं** नाम वृत्तम्।'

**चञ्चलाच्छन्दः (१६।१०९२३)—**

'दिज्जिआ सुपण्ण आइ एक्क तो पओहराइँ
हिण्णिरूअ पंच वंकसव्वलो मणोहराइँ।
अंत दिज्ज गंधवण्ण अक्खराइ सोलहाइँ
**चंचला** विणिम्मिआ फणिंदु एहु दुल्लहाइँ ॥'

(प्रा० पि०सू० २।२०६)

**बाणिनीच्छन्दः (१६।११९८४)—**'नजभजरैर्यदा भवति **बाणिनी** गयुक्तैः ।'

**मन्दाकिनीच्छन्दः (१६।१७४७७)—**

'**मन्दाकिनी**त्मयर्ना गो वेदैर्वेदयतिर्भवेत्।' मं०म०।

**गरुडरुतच्छन्दः (१६।१९४०६)—**

'**गरुडरुतं** नजौ भजतगा यदा स्युस्तदा।' छन्दोमञ्जर्याम्।

**नराचच्छन्दः (१६।२१८४६)—**

'णरेंद जत्थ सव्वलो सुपण्ण वेवि दीसए पइक्क ठाम पंचमे कला चतूरुवीसए।
पलंत हारु चारु सारु अंत जस्स वट्ठए पसिद्ध ए **णराउ** जंपु गंधवंक अट्ठए ॥'

(प्रा० पि०सू० २।२०२)

अस्यैव ग्रन्थान्तरेषु **'पञ्चचामर'**मिति नामान्तरम्।

**प्रमदाच्छन्दः (१६।२६२१२)—**

'**प्रमदा** सत्यसभगा वर्णैर्वर्णयतिर्भवेत्।' मं०म०।

**मणिकल्पलताच्छन्दः (१६।२७८२४)—**

'नजरभभेन गेन च स्या**न्मणिकल्पलता**।'

**नीलच्छन्दः (१६।२८०८७)—**

'**णील**सरूअ विआणहु मत्तह बाइसही
पंच भगण्ण पणा पड आसिअ एरिसही।
अंत ठिआ जहिं हार मुणिज्जइ हे रमणी
बावण अग्गल तिण्णि सआ धुअ रूअ मुणी ॥' (प्रा०पि०सू०२।२०४)

**ऋषभगजविलसितं भ्रौ नौ न्गौ स्वरनवकौ ।।७।१५।।**

**मृतसञ्जीवनी**—यस्य पादे भगणरगणौ, नगणास्त्रयो, गकारश्च भवति (ऽ।।.ऽ।ऽ.।।।.।।।.।।।.ऽ) तद्वृत्तं "ऋषभगजविलसितं[१]" नाम। सप्तभिर्नवभिश्च यतिः। तत्रोदाहरणम्—

भगणः रगणः नगणः नगणः नगणः गु०
ऽ।। ऽ।ऽ ।।। ।।। ।।। ऽ
आयत-बाहुद-ण्ड(७)मुप-चितपृ-थुहृदं-यं(९)

भगणः रगणः नगणः नगणः नगणः गु०
ऽ।। ऽ।ऽ ।।। ।।। ।।। ऽ
पीनक-टिप्रदे-श(७)मृष-भगज-विलसि-तम् (९)।

भगणः रगणः नगणः नगणः नगणः गु०
ऽ।। ऽ।ऽ ।।। ।।। ।।। ऽ
वीरमु-दारस-त्त्व(७)मति-शयगु-णरसि-कं(९)

भगणः रगणः नगणः नगणः नगणः गु०
ऽ।। ऽ।ऽ ।।। ।।। ।।। ऽ
श्रीरति-चञ्चला-पि(७)न प-रिहर-ति पुरु-षम्(९) ॥

---

अस्या **'अश्वगतिः'** इति नामान्तरं वृ०र०प०।

**मदनललिताच्छन्दः (१६।२९१६९)—**

'म्भौ नो म्नौ गो **मदनललिता** वेदैः षड्ऋतुभिः।'

**धीरललिताच्छन्दः (१६।३०१५१)—**

'संकलिता भरौ नरनगाश्च **धीरललिता**।'

**चकिताच्छन्दः (१६।३०७५१)**—'भात्समतनगैरष्टच्छेदे स्यादिह **चकिता**।'

**वरयुवतिच्छन्दः (१६।३२३४३)—**

'भो रयना नगौ च यस्यां **वरयुवतिरियम्**।'

**सुललिताच्छन्दः (१६।३२४८८)—**

'न्मौजस्त्रगाः **सुललिता** युगैर्युगयतिर्भवेत्।' मं० म०।

**चित्रच्छन्दः (१६।४३६९१)**—**'चित्रसंज्ञमीरितं समानिकापदद्वयं तु।'**

**अचलधृतिच्छन्दः (१६।६५५३६)**—'द्विगुणितवसुलघुभिर**चलधृति**रिह।'

(१) उक्तषोडशाक्षरप्रस्तारस्य सप्तशतसप्तविंशत्यधिकद्वात्रिंशत्सहस्रतमो भेदः (३२७२७) **'ऋषभगजविलसितम्'** इति नाम्ना प्रसिद्धः। **'गजविलसितम्'** इति नामान्तरं मं०म०। **'ऋषभगजविजृम्भित'**मिति गरुडे।

**शिवप्रसादिनी**—जिस छन्द के प्रतिपाद में भगण (ऽ।।) रगण (ऽ।ऽ) दो नगण (।।।-।।।) एवं एक गुरू वर्ण क्रमशः उपलब्ध हो, तो वह वृत्त (छन्द) ''ऋषभगजविलसित'' नाम वाला होता है। जिसमें क्रमशः सात और नौ अक्षरों पर यति होती है ॥१५॥

(अत्यष्टौ[१])

## हरिणी न्सौ म्रौ स्लौ गृतुसमुद्रऋषयः ॥७।१६॥

**मृतसञ्जीवनी**—यस्य पादे नगणसगणमगणरगणसगणलकारगकाराश्च (।।।.।।ऽ. ऽऽऽ.ऽ।ऽ.।।ऽ.।ऽ), तद्वृत्तं 'हरिणी[२]' नाम। षड्भिः, चतुर्भिः, सप्तभिश्च यतिः।

---

(१) अत्यष्टिछन्दःपादघटकीभूतानां सप्तदशसंख्याकानामक्षराणां प्रस्तारे कृते एकसहस्र-द्विसप्तत्यधिकत्रयोदशलक्षसंख्याका (१३०१०७२) भेदा जायन्ते तेष्वत्र चतुर्णामेव भेदानां निर्देशः। ग्रन्थान्तरेषु निम्नलिखितनामानोऽन्येऽपि प्राप्यन्त इति तत उद्धृत्य लिख्यन्ते यथा—

**चित्रलेखाच्छन्दः (१७।२२९००)**—
'ससजा भजगा गुदिक्स्वरैर्भवति **चित्रलेखा**।'
वृत्तरत्नाकरतत्परिशिष्टछन्दोमञ्जर्यादिषु।

**मालाधरच्छन्दः (१७।३८७५२)**—
'पढम दिअ विप्पआ तहवि भूअइ त्थप्पिआ
चरणगण तीअओ तह अ भूअइ द्दीअओ।
चमरजुअअग्गला विमलगंध हारुज्जला
भणइ फणिणाहरा गुणहु छंद **मालाहरा**॥
(प्रा० पि०सू० २।२१९)

**घनमयूरच्छन्दः (१७।४२९४४)**—
'कथितं च **घनमयूरं** ननभसरलगं स्वरै रसैश्छिन्नम्।' मं०म०।

**हरिच्छन्दः (१७।४६१४४)**—'रसयुगहययुङ्नौ भ्रौ सो लगौ हि यदा **हरिः**।'

**कान्ताच्छन्दः (१७।४६५७६)**—'भवेत्**कान्ता** युगरसहयैर्यभौ न्रसा लगौ।' **'भाराक्रान्ता'** अ० वृ०र०।

**नर्कुटकच्छन्दः (१७।५६२४०)**—'हयदशभिर्नजौ भजजला सगु **नर्कुटकम्**।' वृ०र०—तत्कुटकम्—इति पा०।

**कोकिलकच्छन्दः (१७।५६२४०)**—'मुनिगुहकार्णवैः कृतयति वद **कोकिलकम्**।' नर्कुटमेव यतिभेदात् **'कोकिलकम्'**।

**कलातन्त्रच्छन्दः (१७।५९३६२)**—'**कलातन्त्रं** यो तनसभलघुभिर्गेन सहितम्।'

(२) उक्तसप्तदशाक्षरप्रस्तारस्यैकशतद्वादशाधिकषट्चत्वारिंशत्सहस्रतमो (४६११२) भेदो **'हरिणी'** इति नाम्ना ख्यातः।

नगणःसगणः मगणः रगणः सगणः ल० गु०
। । । । । ऽ ऽ ऽ ऽ ऽ । ऽ । । ऽ । ऽ
कुवल-यदल(६)-श्यामा पी-नो(४)न्नत-स्तनशा-लि-नी(७)
नगणः सगणः मगणः रगणः सगणः ल०गु०
। । । । । ऽ ऽ ऽ ऽ ऽ । ऽ । । ऽ । ऽ
चकित-हरिणी(६)नेत्रच्छा-या(४)मदा[१]-लसलो-च-ना(७)।
नगणः सगणः मगणः रगणः सगणः ल०गु०
। । । । । ऽ ऽ ऽ ऽ ऽ । ऽ । । ऽ । ऽ
मनसि-जधनु(२)-...र्पानिर्घो-षै(४)रिव-श्रुतिपे-श-लै(७)
नगणः सगणः मगणः रगणः सगणः ल० गु०
। । । । । ऽ ऽ ऽ ऽ ऽ । ऽ । । ऽ । ऽ
र्मनसि ललना(६)-लीलाला-पैः(४)करो-ति ममो-त्स-वम् (७)॥

एतदृषभविलसितमित्यपरे।

**शिवप्रसादिनी**—जिसके प्रतिपाद में क्रमशः नगण (।।।) सगण (।।ऽ) मगण (ऽऽऽ) रगण (ऽ।ऽ) सगण (।।ऽ) एक लघु अक्षर और अन्त में एक गुरूवर्ण उपस्थित हों, वह वृत्त "हरिणी" नाम से कहा जाता है। जिसके पाद में पुनः छह अक्षर, चार अक्षर और सात अक्षरों पर यति की व्यवस्था होती है ॥१६॥

## पृथ्वी ज्सौ ज्सौ यलौ ग् वसुनवकौ ॥७।१७॥

**मृतसञ्जीवनी**—यस्य पादे जगणसगणौ (।ऽ।.।।ऽ) पुनर्जगणसगणौ (।ऽ।.।।ऽ) यगणलकारगकाराश्च (।ऽऽ.।.ऽ), तद्वृत्तं 'पृथ्वी[२]' नाम। अष्टभिर्नवभिश्च यतिः। तत्रोदाहरणम्—

जगणः सगणः जगणः सगणः यगणः ल० गु०
। ऽ । । । ऽ । ऽ । । । ऽ । ऽ ऽ । ऽ
हताः स-मिति श-त्रव(८)स्त्रि-भुवने विकीर्णं य-शः (९)
जगणः सगणः जगणः सगणः यगणः ल०गु०
। ऽ । । । ऽ । ऽ । । । ऽ । ऽ ऽ । ऽ
कृतश्च गुणिनां गृहे(८)नि-रवधि-र्महानु-त्स-वः(९)।

---

(१) 'मलिम्लुचलोचना' इति पाठः।

(२) उक्तसप्तदशाक्षरप्रस्तारस्य सप्तशतपञ्चाशदधिकाष्टत्रिंशत्सहस्रतमो (३८७५०) भेदः **'पृथ्वी'** इति नाम्ना प्रसिद्धः।

जगणः सगणः जगणः सगणः यगणः ल० गु०

। ऽ । । । ऽ । ऽ । । । ऽ । ऽ ऽ । ऽ

त्वया कृ-तपरि-ग्रहे(८)क्षि[1]-तिप वी-र! सिंहा-स-ने(९)

जगणः सगणः जगणः सगणः यगणः ल० गु०

। ऽ । । । ऽ । ऽ । । । ऽ । ऽ ऽ । ऽ

नितान्त-निरव-ग्रहा(८)फ-लवती च पृथ्वी कृ-ता (९) ॥

**शिवप्रसादिनी**—जिस छन्द के हरेक पाद में अनुक्रम से जगण (।ऽ।) सगण (।।ऽ) जगण (।ऽ।) सगण (।।ऽ) यगण (।ऽऽ) एवं एक लघु (।) और गुरू वर्ण (ऽ) हों, वह वृत्त ''पृथ्वी'' नाम से कहा जाता है। जहाँ के पाद में आठ और नौ अक्षरों के क्रम से यति की स्थिति होती है ॥१७॥

## वंशपत्रपतितं भ्रौ न्भौ न्लौ ग् दिगृषयः ।।७।१८।।

**मृतसञ्जीवनी**—यस्य पादे भगणरगणनगणभगणनगणलकारगकारा (ऽ।।.ऽ।ऽ.।।।.ऽ।।.।।।.।.ऽ) भवन्ति, तद्वृत्तं '[2]वंशपत्रपतितम्' नाम। दशभिः सप्तभिश्च यतिः। तत्रोदाहरणम्—

भगणः रगणः नगणः भगणः नगणः ल० गु०

ऽ । । ऽ । ऽ । । । ऽ । । । । । । ऽ

अद्य कु-रुष्व क-र्म सुकृ-तं(१०)यद-परदि-व-से(७)

भगणः रगणः नगणः भगणः नगणः ल० गु०

ऽ । । ऽ । ऽ । । । ऽ । । । । । । ऽ

मित्र! वि-धेयम-स्ति भव-तः(१०)किमु चिरय-सि तत्?(७)।

भगणः रगणः नगणः भगणः नगणः ल० गु०

ऽ । । ऽ । ऽ । । । ऽ । । । । । । ऽ

जीवित-मल्पका-लकल-ना(१०)लघु-तरत-र-लं(७)

भगणः रगणः नगणः भगणः नगणः ल० गु०

ऽ । । ऽ । ऽ । । । ऽ । । । । । । ऽ

नश्यति वंशप-त्रपति-तं(१०)हिम-सलिल-मि-व (७) ॥

**शिवप्रसादिनी**—जिस छन्द के एक-एक पाद में क्रमिक रूप से भगण (ऽ।।)

---

(१) 'तुडिगवीरसिंहासने' इति लि० पुस्तके।

(२) उक्तसप्तदशाक्षरप्रस्तारस्य नवशतत्रिनवत्युत्तरैकषष्टिसहस्रतमो (६१९९३) भेदो **वंशपत्रपतितम्**' इति नाम्ना प्रसिद्धः।

रगण (ऽ।ऽ) नगण (।।।) भगण (ऽ।।) नगण (।।।) एवं लघु (।) गुरू (ऽ) मिलते हों, वह वृत्त ''वंशपत्रपतित'' कहलाता है। जिसके पाद में दश और सात अक्षरों पर यति होती है ॥१८॥

## मन्दाक्रान्ता म्भौ न्तौ त्गौ ग् समुद्रर्तुस्वराः ॥७।१९॥

**मृतसञ्जीवनी**—यस्य पादे मगणभगणनगणाः, (ऽऽऽ.ऽ।।.।।।) तगणौ, (ऽऽ।.ऽऽ।) गकारौ च (ऽ.ऽ) तद् 'मन्दक्रान्ता[1]' नाम चतुर्षु षट्सु सप्तसु च यतिः। तत्रोदाहरणम्—

मगणः भगणः नगणः तगणः तगणः गु० गु०
ऽ ऽ ऽ ऽ । । । । । ऽ ऽ । ऽ ऽ । ऽ ऽ
प्रत्यादि-ष्टं(४)सम-रशिर-सः(६)क्रान्दि-शीभूय न–ष्टं(७)

मगणः भगणः नगणः तगणः तगणः गु० गु०
ऽ ऽ ऽ ऽ । । । । । ऽ ऽ । ऽ ऽ । ऽ ऽ
त्वं निःशे-षं(४)कुरु रिपुब-लं(६)मार्ग-मासाद्य स–द्यः (७)।

मगणः भगणः नगणः तगणः तगणः गु० गु०
ऽ ऽ ऽ ऽ । । । । । ऽ ऽ । ऽ ऽ । ऽ ऽ
किं नाश्रौ-षीः(४)परि-णतधि-यां(६)नीति-मार्गोप–दे–शं?(७)

मगणः भगणः नगणः तगणः तगणः गु० गु०
ऽ ऽ ऽ ऽ । । । । । ऽ ऽ । ऽ ऽ । ऽ ऽ
मन्दाक्रा-न्ता(४)भव-ति फलि-नी(६)वारि-लक्ष्मीः क्ष–या–य(७) ॥

**शिवप्रसादिनी**—जिस छन्द के एक-एक पाद में क्रमशः मगण (ऽऽऽ) भगण (ऽ।।) नगण (।।।) दो तगण (ऽऽ।-ऽऽ।) तथा दो गुरू (ऽऽ) वर्ण उपस्थित हों, वह छन्द ''मन्दाक्रान्ता'' कहलाता है। वहाँ पर चार, छह एवं सात अक्षरों के क्रम में यति हुआ करता है ॥१९॥

## शिखरिणी यमौ न्सौ भ्लौ गृतुरुद्राः ॥७।२०॥

**मृतसञ्जीवनी**—यस्य पादे यगणमगणनगणसगणभगणलकारगकाराश्च (।ऽऽ.ऽऽऽ.।।।.।।ऽ.ऽ।।.।.ऽ) भवन्ति तद्वृत्तं 'शिखरिणी[2]' नाम। षट्स्वेकादशसु च यतिः। तत्रोदाहरणम्—

---

(१) उक्तसप्तदशाक्षरप्रस्तारस्य नवशतैकोनत्रिंशदुत्तराष्टादशसहस्रतमो (१८९२) भेदो **'मन्दाक्रान्ता'** इति नाम्ना प्रसिद्धः।

(२) तथैव चतुःशतत्रिंशदधिकोनषष्टिसहस्रतमो (५९४३०) भेदः **'शिखरिणी'** इति नाम्ना प्रसिद्धः।

यगणः मगणः नगणः सगणः भगणः ल० गु०

ISS SSS III IIS SII I S

यशःशे-षीभूते(६) जगति[१] वरना-थे गुण-नि-धौ (११)

यगणः मगणः नगणः सगणः भगणः ल० गु०

ISS SSS III IIS SII I S

प्रवृत्ते वैराग्ये(६) विषय-रसनि-क्रान्तम-न-साम् (११)।

यगणः मगणः नगणःसगणः भगणः ल० गु०

ISS SSS III IIS SII I S

इदानी-मस्माकं(६) घनत-रुलता-निर्झरं-व-तीं (११)

यगणः मगणः नगणः सगणः भगणः ल० गु०

ISS SSS III IIS SII I S

तपस्त-प्तुं चेतो (६) भवति गिरिमा-लां शिख-रि-णीम् (११)॥

**शिवप्रसादिनी**—जिस छन्द के प्रत्येक पाद में क्रमिक रूप से यगण (ISS) मगण (SSS) नगण (III) सगण (IIS) भगण (SII) और लघु (I) गुरू (S) हों, उस वृत्त (छन्द) को "शिखरिणी" नाम से कहा जाता है। जहाँ पर छः अक्षरों पर एवम् एकादश (११) अक्षरों पर यति की स्थिति होती है ॥२०॥

(धृत्याम्[२])

---

(१) 'तुडिगनरनाथे' इति लि० पुस्तके।

(२) धृतिच्छन्दः पादघटकीभूतानामष्टादशाक्षराणां प्रस्तारगत्या लक्षद्विकमेकशतश्चत्वारिंशदुत्तरद्विषष्टिसहस्राणि (२६२१४४) च भेदाः। तेषु 'कुसुमितलतावेल्लिता' नाम वृत्तमेकमेवात्र निर्दिष्टम्। प्राकृतपिङ्गलसूत्रछन्दोमञ्जरीवृत्तरत्नाकरपरिशिष्टेषु त्वधिका भेदा उदाहृताः सन्तीति तत् उद्धृत्य तेषां नामानि लिख्यन्ते—

**शार्दूलच्छन्दः (१८।१००७३)**—

'**शार्दूलं** वद मासषट्कयति मः सौ जसौ रो मश्चेत्।

**मञ्जीराच्छन्दः (१८।१२६७३)**—

'कुंतीपुत्ता तिण्णा दिण्णउ मंथा संठवि एक्का पाए
हारा हत्था दुण्णा कंकणु गंधा संठवि जुग्गा जाए।
चारी हारा भव्वाकारउ पाआअंतहि सज्जीआए
सप्पाराआ सुद्धाकाअउ जंपे पिंगल **मंजीरा** ए॥'

(प्रा०पि०सू० २।२२७)

**चित्रलेखाच्छन्दः (१८।१८८७७)**—

'वर्णाश्वैर्मननततमकैः कीर्तिता **चित्रलेखेयम्**।'

**क्रीडाचन्द्रच्छन्दः (१८।३७४५०)—**

'ज इंदासणा एक्क गण्णा सु होवेइ पाए हि पाए
दहा अट्ठ वण्णा सुहावेइ दंडा सुठाइ सुठाए।
दहा तिण्णिगुण्णा जहा सव्वला होइ मत्ता सुपाए
फणिंदा भणंता **किलाचंद** छंदा णिबद्धाइ जाए॥'

प्रा०पि०सू० २।२२९

**चित्ररेखाच्छन्दः (१८।३७८७३)—**

'मन्दाक्रान्ता नपरलघुयुता कीर्तिता **चित्ररेखा**।'

**नाराचच्छन्दः (१८।७४९४४)**—'इह ननरचतुष्कसृष्टं तु **नाराच**माचक्षते।' षोडशाक्षरप्रस्तारे नराचः, अत्र तु नाराच इत्यनयोर्भेदः। नाराचस्यैव **'सिंहविक्रीडितम्' 'महामालिका'** इति नामान्तरे अन्यत्र। अस्यैव यतिभेदात् **'लालसा'** इति नामोक्तमन्यैः-'दशवसुविरतिर्ननौ रेश्चतुर्भिर्युतौ **लालसा**' इति। **'निशा'** इति मं०म०

**विलासच्छन्दः (१८।७४९६९)—**

'**विलासो** मः ससौ राश्च गुणषड्वसुभिर्यतिः।' मं०म०

**नन्दनच्छन्दः (१८।७६७२०)**—'नजभजरैस्तु रेफसहितैः शिवैर्हयैर्**नन्दनम्**।'

**हरिणप्लुतच्छन्दः (१८।९२९५७)—**

'मात्सो जौ भरसंयुतौ करिबाणकैर्**हरिणप्लुतम्**।'

**चर्चरीच्छन्दः (१८।९२९५९)—**

'पाअ णेउर झंझणक्कइ हंससद्दसुसोहणा
थोलथोलथणग्ग णच्चइ मोत्तिदाम मणोहरा।
वामदाहिण वाण धावइ तिक्खचक्खुकडक्खआ
काहि पूरिस गेहमंडणि एह सुंदरि पेक्खआ॥'

(प्रा० पि०सू० २।२३२)

**'हरनर्तनम्'** इति नामास्या वृ० र०। **'विबुधप्रिया'** इति।

**हरनर्तनच्छन्दः (१८।९२९८९)**—'सौ जजौ भरसंयुतौ करिबाणकैर्**हरनर्तनम्**।'
- वृ०र० **'कुमुद्वती'** इति वृ० म० को०

**मल्लिकाच्छन्दः (१८।९३०११)—**

'**मल्लिका** स्याद्रसजजा भरौ छिन्नाष्टपङ्क्तिभिः।' मं०म०

**चलच्छन्दः (१८।९३१०९)—**

'म्भौ न्जौ भ्रौ चेच्चलमिदमुदितं युगैर्मुनिभिः स्वरैः।'

**शार्दूलललितच्छन्दः (१८।११६५०९)—**

'मः सो जः सतसा दिनेशऋतुभिः **शार्दूलललितम्**।' (छन्दोमञ्जर्याम्)

## कुसुमितलतावेल्लिता म्तौ न्यौ याविन्द्रियर्तुस्वराः ।।७।२१।।

**मृतसञ्जीवनी**—यस्य पादे मगणतगणनगणयगणा (ऽऽऽ.ऽऽ।.।।।.।ऽऽ) यगणौ (।ऽऽ.।ऽऽ) च तद्वृत्तं 'कुसुमितलतावेल्लिता[१]' नाम। पञ्चसु, षट्सु, सप्तसु च यतिः। तत्रोदाहरणम्—

मगणः तगणः नगणः यगणः यगणः यगणः
ऽ ऽऽ ऽऽ । ।।। ।ऽ ऽ ।ऽऽ ।ऽऽ
धन्याना-मताः(५)कु-सुमित-लता(६)वे-ल्लितोत्फु-ल्लवृक्षाः(७)

मगणः तगणः नगणः यगणः यगणः यगणः
ऽ ऽ ऽ ऽऽ । ।।। ।ऽ ऽ ।ऽऽ ।ऽऽ
सोत्कण्ठं कूज(५)त्प-रभृत-कला(६)ला-पकोला-हलिन्यः(७)।

मगणः तगणः नगणः यगणः यगणः यगणः
ऽ ऽऽ ऽऽ । ।।। ।ऽ ऽ ।ऽऽ ।ऽऽ
मध्वादौ माद्य(५)न्म-धुकर-कलो(६)द्गी-तझङ्का-ररम्या (७)

मगणः तगणः नगणः यगणः यगणः यगणः
ऽ ऽऽ ऽऽ । ।।। ।ऽ ऽ ।ऽऽ ।ऽऽ
ग्रामान्तः-स्रोतः(५)प-रिसर-भुवः(६)प्री-तिमुत्पा-दयन्ति (७) ॥

**शिवप्रसादिनी**—जिस वृत्त के प्रतिपाद में क्रमशः मगण (ऽऽऽ) तगण (ऽऽ।) नगण (।।।) और तीन यगण (।ऽऽ-।ऽऽ-।ऽऽ) हों, वह वृत्त "कुसुमितलतावेल्लिता" नाम से पुकारा जाता है। वहाँ पर क्रमशः पाँच, छः (६) एवं सात अक्षरों पर यति लगता है ॥२१॥

---

**सुधाच्छन्दः (१८।११६६१४)**—'सुधातर्कैस्तर्कैर्भवति ऋतुभिर्यो मो नसतसाः।'

**महासेनच्छन्दः (१८।११८६१३)**—

'म्रौ भ्रौ त्सौस्वररुद्रैर्यतिरिति **महासेन**मुदितम्।'

**अश्वगतिच्छन्दः (१८।१२६३३१)**—'पञ्चभकारकृताश्वगतिर्यदि चान्तसरचिता।'

**शुभच्छन्दः (१८।१२६८४४)**—'शुभं सनजना भः सः पापाङ्गाङ्गगुणैर्यतिः।'

मं०म०। **'शुभचरितं'** इति वृ०म०को०

**भ्रमरपदकच्छन्दः (१८।१३०९७१)**—

'भाद्रनना नसौ **भ्रमरपद**कमिदमभिहितम्।'

(१) उक्ताष्टादशाक्षरप्रस्तारस्याष्टशतसप्तपञ्चाशदधिकसप्तत्रिंशत्सहस्रतमो (३७८५७) भेदः **'कुसुमितलतावेल्लिता'** इति नाम्ना प्रसिद्धः।

(अतिधृतौ[1])

## शार्दूलविक्रीडितं म्सौ ज्सौ तौ गादित्यऋषयः ।।७।२२।।

---

(१) अतिधृतिच्छन्दःपादघटकीभूतानामूनाविंशत्यक्षराणां प्रस्तारे कृते लक्षपञ्चकम्, चतुर्विंशतिसहस्राणि, अष्टाशीत्यधिकद्विशतं (५२४२८८) भेदा जायन्ते तत्र शार्दूलविक्रीडितमन्तरा ग्रन्थान्तरेषूपलभ्यमाना भेदा यथा—

**शम्भुच्छन्दः (१९।३१७२)**—

'दशबाणाधैर्यतिधारी स्तौ यभमा मो गः **शम्भुः** प्रोक्तः ।'

अ० वृ०र०-'नवबाणाक्षैरि'ति पाठान्तरम् ।

**मेघविस्फूर्जिताच्छन्दः (१९।७५७१३)**—

'रसर्त्वश्वैर्य्मौ न्सौ ररगुरुयुतौ **मेघविस्फूर्जिता** स्यात् ।' वृ०र०

**पुष्पदामच्छन्दः (१९।७५७४५)**—'भूताश्वाश्वान्तं मतनसररगैः कीर्तितं **पुष्पदाम** ।'

अस्य **'फुल्लदाम'** इति संज्ञान्तरं छ०मं०

**छायाच्छन्दः (१९।८३९०५)**—

'भवेत्सैव **च्छाया** तयुगगयुता स्याद्द्वादशान्ते यदा ।'

**बिम्बच्छन्दः (१९।१४९४७३)**—

'वृत्तं **बिम्बाख्यं** शरमुनितुरगैर्म्तौ न्सौ ततौ चेद्गुरुः ।'

**छायाच्छन्दः (१९।१५७६३४)**—

'इयं **च्छाया** ख्याता ऋतुरसहयैर्यो मनसा भ्तौ गुरुः ।'

**पञ्चचामरच्छन्दः (१९।१७४८४८)**—

'नयुगललगुरु निरन्तरं यदा स **पञ्चचामरः** ।

**मणिमञ्जरीच्छन्दः (१९।१८५३३०)**—

'युगाश्वैः स्याद्यभनयजजगाः कीर्तिता **मणिमञ्जरी** ।'

**सरलच्छन्दः (१९।१८६०४०)**—

'नवभिर्दशभिश्छिन्नं **सरलं** न्भ्रसजा जगौ ।' मं०म०

**मकरन्दिकाच्छन्दः (१९।१८६३०६)**—

'रसैः षड्भिर्लोकैर्यमनसजजा गुरुर्**मकरन्दिका** ।'

**वरूथिनीच्छन्दः (१९।१९४९४)**—

'शरत्रयैर्युगैश्छिन्ना जन्मभस्रज्गा **वरूथिनी** ।' मं०म०

**समुद्रतताच्छन्दः (१९।२१४८७८)**—

'गजाब्धितुरगैर्जसौ जसतभा गश्चेत्**समुद्रतता** ।' (वृत्तरत्नाकरपरिशिष्टे)

**सुरसाच्छन्दः (१९।२३७४५७)**—

'म्रौ भ्नौ यो नो गुरुश्चेत्स्वरमुनिकरणैराह **सुरसाम्** ।'

**मृतसञ्जीवनी**—यस्य पादे मगणसगणौ (ऽऽऽ.।।ऽ) जगणसगणौ (।ऽ।.।।ऽ) तगणौ गकारश्च (ऽऽ।.ऽऽ।.ऽ), तद्वृत्तं "शार्दूलविक्रीडितं[1]" नाम। द्वादशभिः सप्तभिश्च यतिः। तत्रोदाहरणम्—

मगणः सगणः जगणः सगणः तगणः तगणः गु०
ऽ ऽ ऽ । । ऽ । ऽ । । । ऽ ऽ ऽ । ऽ ऽ । ऽ
कम्बुग्री–वमुद–ग्रबाहु–शिखरं(१२)रक्तान्त–दीर्घेक्ष–णं(७)

मगणः सगणः जगणः सगणः तगणः तगणः गु०
ऽ ऽ ऽ । । ऽ । ऽ । । । ऽ ऽ ऽ । ऽ ऽ । ऽ
शालप्रां-शुशरी-रमाय-तभुजं(१२)विस्तीर्ण-वक्षःस्थ–लम् (७)।

मगणः सगणः जगणः सगणः तगणः तगणः गु०
ऽ ऽ ऽ । । ऽ । ऽ । । । ऽ ऽ ऽ । ऽ ऽ । ऽ
कीलस्क-न्धमनु-द्धतं प–रिजने(१२)गम्भीर–सत्यस्व–रं (७)

मगणः सगणः जगणः सगणः तगणः तगणः गु०
ऽ ऽ ऽ । । ऽ । ऽ । । । ऽ ऽ ऽ । ऽ ऽ । ऽ
राज्यश्रीः समुपै-ति वीर-पुरुषं(१२)शार्दूल-विक्रीडि–तम् (७)।

इदानीं कृतिः प्रकृतिराकृतिर्विकृतिः संकृतिरभिकृतिरुत्कृतिश्चेति सप्त कृतयः क्रमेणैकाक्षरवृध्द्योदाह्रियन्ते—

---

**चन्द्रमालाच्छन्दः (१९।५२३२६४)**—

'ठइवि दिअवरजुअल मज्झ करअल करहिं
पुण वि दिअवरजुअल मज्झ करअल करहिं।
सरसगण विमल जहि सुण्णि ठवइ मनगइ
विमलमइ उरअवइ **चंदमल** कहइ सइ॥'
(प्रा० पि०सू० २।२४२)

**धवलाच्छन्दः (१९।२६२१४४)**—

'करइ वसु सुणि जुवइ विमलमइ महिअले
ठइअ ठइ रमणि सरसगण पअपअ पले।
दिअगण चउ चउपअहिं भण फणिवइ सही
कमलगण सरसमण सुमुहि **धवलअ** कही॥'
(प्रा० पि०सू० २।२४४)

(१) उक्तोनविंशत्यक्षरप्रस्तारस्य त्रिशतसप्तत्रिंशदुत्तरैकोनपञ्चाशत्सहस्राधिकैकलक्षतमो (१४९३३७) भेदः **'शार्दूलविक्रीडितम्'** इति नाम्ना प्रसिद्धः।

**शिवप्रसादिनी**—जिस वृत्त के प्रतिपाद में क्रमशः मगण (ऽऽऽ) सगण (।।ऽ) जगण (।ऽ।) सगण (।।ऽ) दो तगण (ऽऽ।-ऽऽ।) एक गुरू (ऽ) वर्ण उपस्थित हों, वह वृत्त ''शार्दूलविक्रीडित'' कहलाता है। इस वृत्त में पुनः बारह अक्षरों के ऊपर और सात अक्षरों पर यति लगती है ।।२२।।

(तत्र-कृतौ[१])

## सुवदना म्रौ भ्नौ य्भौ ल्गावृषिस्वरर्तवः ।।७।२३।।

**मृतसञ्जीवनी**—यस्य पादे मगणरगणभगणनगणयगणभगणलकारगकारा (ऽऽऽ. ऽ।ऽ.ऽ।।.।।।.।ऽऽ.ऽ।।.।.ऽ) भवन्ति, तद्वृत्तं 'सुवदना[२]' नाम। सप्तसु सप्तसु षट्सु च यतिः। तत्रोदाहरणम्—

---

(१) कृतिच्छन्दःपादघटकीभूतानां विंशतिवर्णानां प्रस्तारे कृते लक्षदशकम्, अष्टाचत्वारिंशत्सहस्राणि, षट्सप्तत्यधिकपञ्चशतं च (१०४८५७६) भेदा जायन्ते तेषु सुवदनावृत्ताख्यौ भेदावत्र निर्दिष्टौ। ग्रन्थान्तरेषु तु यथा—

**शोभाच्छन्दः (२०।१५१४९०)**—'रसैरश्वैरश्वैर्यमननततगैर्गे शोभेयमुक्ता।'

**मत्तेभविक्रीडितच्छन्दः (२०।२९८६२८)**—

'सभरा नम्य्लगिति त्रयोदशयतिर्**मत्तेभविक्रीडितम्**।' वृ०र०

**उत्पलमालिकाच्छन्दः (२०।३५५७९९)**—

'भ्रन्भभ्रल्गा ग्रहै रुद्रैर्विच्छिन्नोत्**पलमालिका**।' मं०म०

**गीतिकाच्छन्दः (२०।३७२०७६)**—

'संजजा भरौ सलगा यदा कथिता तदा खलु **गीतिका**।'

अस्यैव छन्दसः प्राकृतपिङ्गलसूत्रे **'गीता'** इति नाम। **'प्रमदाननम्'** इति वृ०र०

**मदकलनीच्छन्दः (२०।५०६८८०)**—

'**मदकलनी** नजनभसा नलगाश्छिन्ना शराङ्गबाणङ्गैः।' मं०म०

**कनकलताच्छन्दः (२०।५२४२८८)**—

'**कनकलता** सा कथिता षण्नैर्युक्ता तथा लगाभ्यां च।' मं०म०

**गण्डकाच्छन्दः (२०।६९९०५१)**—

'रग्गणा पलंतआ पुणो णरेंद कंतआ सुछक्कएण
हार एक्क दिज्झही सुसद्द पाअ किज्जही सुसक्कएण।
**गंडआ** गणेहु एहु वंकसंखसंखले फणिंद गाउ
तीस मत्त पाअ पत्त हार तीअभागए सुसद्द आउ ।।'

(प्रा० पि०सू० २।२५५)

(१) उक्तविंशत्यक्षरप्रस्तारस्य चतुःशतसप्तदशोत्तराष्टसप्ततिसहस्राधिकद्विलक्षतमो (२७८४१७) भेदः **'सुवदना'** इति नाम्ना प्रसिद्धः।

मगणः रगणः भगणः नगणः यगणः भगणः ल० गु०

ऽ ऽऽ ऽ।ऽ ऽ ।। ।।। ।ऽ ऽ ऽ।। । ऽ

या पीनो-द्राढतु-ङ्ग(७)स्तन-जघन-घना(७)भो-गालस-ग-ति(६)—

मगणः रगणः भगणः नगणः यगणः भगणः ल० गु०

ऽ ऽ ऽ ऽ।ऽ ऽ ।। ।।। ।ऽ ऽ ऽ।।। ऽ

र्यस्याः क-र्णावतं-सो(७)त्पल-रुचिज-यिनी(७)दी-र्घे च न-य-ने(६)।

मगणः रगणः भगणः नगणः यगणः भगणः ल० गु०

ऽ ऽ ऽ ऽ।ऽ ऽ ।। ।।।ऽ ऽ ऽ।।। ऽ

श्यामा सी-मन्तिनी-नां(७)तिल-कमिव मुखे(७)या च त्रिभु-व-ने (६)

मगणः रगणः भगणः नगणः यगणः भगणः ल० गु०

ऽ ऽ ऽ ऽ।ऽ ऽ ।। ।।। ।ऽ ऽ ऽ।। । ऽ

सम्प्राप्ता साम्प्रतं मे(७)नय-नपथ-मसौ(७)दै-वात्सुव-द-ना (६) ॥

**शिवप्रसादिनी**—जिस वृत्त के हरेक पाद में क्रम से मगण (ऽऽऽ) रगण (ऽ।ऽ) भगण (ऽ।।) नगण (।।।) यगण (।ऽऽ) भगण (ऽ।।) तथा लघु (।) गुरू (ऽ) वर्तमान हो, वह वृत्त "सुवदना" नाम से कहा जाता है। जिसमें पुनः सात-सात अक्षरों पर एवं छह अक्षरों पर यति (उच्चारण विराम) का नियम होता है ॥२३॥

## ग्लिति वृत्तम् ॥७।२४॥

**मृतसञ्जीवनी**—यस्य पादे गकारलकाराः (ऽ.।) क्रमेण भवन्ति, तद् 'वृत्तं[1]' नाम वृत्तम्। कृतिप्रकरणेन यावद्भिरेव विंशत्यक्षराणि पूर्यन्ते, तावतां ग्लां ग्रहणम्। तत्रोदाहरणम्—

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)(१४)(१५)(१६)(१७)(१८)(१९)(२०)

ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ ।

ज-न्तु-मा-त्र-दुः-ख-का-रि क-र्म-नि-र्मि-तं भ-व-त्य-न-र्थ-हे-तु

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)(१४)(१५)(१६)(१७)(१८)(१९)(२०)

ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ ।

ते-न स-र्व-मा-त्म-तु-ल्य-मी-क्ष-मा-ण उ-त्त-मं सु-खं ल-भ-स्व।

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)(१४)(१५)(१६)(१७)(१८)(१९)(२०)

ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ ।

वि-द्धि बु-द्धि-पू-र्व-कं म-मो-प-दे-श-वा-क्य-मे-त-दा-द-रे-ण

(१) उक्तविंशत्यक्षरप्रस्तारस्यैकपञ्चाशदुत्तरनवनवतिसहस्राधिकषड्लक्षतमो (६९९०५१) भेदो **'वृत्तम्'** इति नाम्ना प्रसिद्धः। 'वृत्तं रजौ रजौ पादे रजौ गो लः' इति गारुडे १।२०९।३५ अस्यैव **'मालवम्'** इति संज्ञा मं० म०।

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)(१४)(१५)(१६)(१७)(१८)(१९)(२०)
ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ ।
वृ-त्त-मे-त-दु-त्त-मं म-हा-कु-ल-प्र-सू-त-ज-न्म-नां हि-ता-य।

अत्र पादान्ते यतिः ।

**शिवप्रसादिनी**—जिस छन्द में गकार (ऽ) एवं लकार (।) से विंश अक्षरों की पूर्ति होती हो, वह ''वृत्त'' नाम का वृत्त (छन्द) हुआ करता है । अलङ्कार के प्रकरण में जितने अक्षरों से बीस संख्या की पूर्ति होती हो, उतने गुरू लघु सञ्ज्ञक वर्णों का ग्रहण होता है ॥२४॥

(प्रकृतौ[१])

## स्रग्धरा म्रौ भ्नौ यौ य् त्रिःसप्तकाः ।।७।२५।।

**मृतसञ्जीवनी**—यस्य पादे मगणरगणभगणनगणास्त्रयश्च यगणाः (ऽऽऽ.ऽ।ऽ.ऽ।।.।।।.।ऽऽ.।ऽऽ.।ऽऽ) तत् 'स्रग्धरा[२]' नाम वृत्तम् । सप्तसु सप्तसु च यतिः । तत्रोदाहरणम्—

मगणः रगणः भगणः नगणः यगणः यगणः यगणः
ऽऽऽ ऽ।ऽ ऽ।। ।।। ।ऽऽ ।ऽऽ ।ऽऽ
रेखा-भ्रूः शुभ्रद-न्त(७)द्युति-हसित-शर(७)च्च-न्द्रिकाचा-रुमूर्ति(७)-

---

(१) प्रकृतिच्छन्दःपादघटकीभूतानामेकविंशत्यक्षराणां प्रस्तारे कृते लक्षविंशतिः, सप्तनवतिसहस्राणि, एकशतद्विपञ्चाशच्च (२०९७१५२) भेदा जायन्ते। तेषु येऽत्र नोक्तास्ते ग्रन्थान्तरेभ्यः समुद्धृत्य लिख्यन्ते—

**नरेन्द्रच्छन्दः (२१।४५०५१९)—**

'आइहिँ जत्थ पाअगण पअलिअ जोहल अंत ठवीजे
काहल सद्द गंध एँम मुनिगण कंकण जाह करीजे।
सद्दइ एक्क तत्थ चल णरवइ पूरहु संख सुभव्वा
चामरजुग्ग अंत जहि पअलिअ एहु **णरेंदउ** कव्वा ॥'

प्रा० पि०सू० २।२६३ ॥

**सरसीच्छन्दः (२१।७११६००)—**

'नजभजजा जरौ यदि तदा गदिता **सरसी** कवीश्वरैः ॥'

सरसीवृत्तमेव 'सलिलनिधि' नाम्ना प्रसिद्धम् । अन्येषां मते 'सिद्धक' मिति संज्ञितमेतत् ।

**सुरनर्तकीच्छन्दः (२१।७६५६१७)—**

'**सुरनर्तकी** रनरना रनरा विरती रसर्तुशास्त्रगुणैः ।' मं०म०

(२) उक्तैकविंशत्यक्षरप्रस्तारस्य द्विसहस्रनवशतत्रिनवत्युत्तरत्रिलक्षतमो (३०२९९३) भेदः '**स्रग्धरा**' इति नाम्ना प्रसिद्धः ।

मगणः रगणः भगणः नगणः यगणः यगणः यगणः

ऽ ऽ ऽ ऽ । ऽ ऽ । । । । । । ऽ ऽ । ऽ ऽ । ऽ ऽ

र्माद्यन्मा-तङ्गली-ला(७)गति-रतिवि-पुला(७)भो-गतुङ्ग-स्तनी या(७)।

मगणः रगणः भगणः नगणः यगणः यगणः यगणः

ऽ ऽ ऽ ऽ । ऽ ऽ । । । । । । ऽ ऽ । ऽ ऽ । ऽ ऽ

रम्भास्त-म्भोपमो-रू(७)रलि-मलिन-घन(७)स्नि-ग्धधम्मि-ल्लहस्ता (४)

मगणः रगणः भगणः नगणः यगणः यगणः यगणः

ऽ ऽ ऽ ऽ । ऽ ऽ । । । । । । ऽ ऽ । ऽ ऽ । ऽ ऽ

बिम्बोष्ठी रक्तक[१]-ण्ठी(७)दिश-तु रति-सुखं(७)स्र-ग्धरा सु-न्दरीयम् (७) ॥

**शिवप्रसादिनी**—जिस वृत्त के प्रतिपाद में मगण (ऽऽऽ) रगण (ऽ।ऽ) भगण (ऽ।।) नगण (।।।) एवं तीन यगण (।ऽऽ-।ऽऽ-।ऽऽ) मिलते हों, तो वह वृत्त "स्रग्धरा" कहलाता है। इस छन्द में सात-सात की तीन संख्याओं में, अर्थात् इक्कीस अक्षरों में पाद की समाप्ति होती है, और प्रत्येक सात अक्षरों के उपरान्त यति का नियम है। अतः स्रग्धरा छन्द के इक्कीस अक्षरों वाले पाद में सात-सात अक्षरों पर तीन यति उपस्थित होगा। पाद चार और अक्षर संख्या ८४ होती है प्रत्येक पाद में तीन यति के क्रम से चारों पादों में कुल बारह यति होगें ॥२५॥

(आकृतौ[२])

## मद्रकं भ्रौ न्रौ न्रौ न्गौ दिगादित्याः ॥७।२६॥

---

(१) 'चारुकण्ठी' लि० पुस्तके।

(२) आकृतिच्छन्दः पादघटकीभूतानां द्वाविंशत्यक्षराणां प्रस्तारे कृते (४१९४३०४) भेदा जायन्ते। तेष्वत्र ये नोक्ताः, परत्र चोक्तास्ते तत आकृष्य लिख्यन्ते—

**हंसीच्छन्दः (२२।१०४८३२१)**—

णेत्ताणंदा उग्गे चंदा धवलचमरसमसिअकरविंदा

उग्गे तारा तेआ हारा विअसु कमलवण परिमलकंदा।

भासा कासा सव्वा आसा महुरपवण लहलहिअ करता

हंसा सहू फुल्लावंधू सरअ समअ सहि हिअअ हरंता ॥'

(प्रा० पि०सू० २।२६८)

**मत्तेभच्छन्दः (२२।१९१५७६५)**—

'मत्तेभाख्यं तभजजसरनगयुक्तं स्वरार्वफणिभिन्नम्।' मं०म०।

**मदिराच्छन्दः (२२।१७९७५५९)**—

'सप्तभकारयुतैकगुरुर्गदितेयमुदारतरा **मदिरा**।'

**मृतसञ्जीवनी**—यस्य पादे भगणरगणौ, (ऽ।।.ऽ।ऽ) नगणरगण, (।।।.ऽ।ऽ) पुनर्नगणरगणौ (।।।.ऽ।ऽ) नगणो गकारश्च (।।।.ऽ) भवतस्तद्वृत्तं 'मद्रकम्[1]' नाम। दशभिर्द्वादशभिश्च यतिः। तत्रोदाहरणम्—

भगणः रगणः नगणः रगणः नगणः रगण नगणः गु०
ऽ।। ऽ।ऽ ।।। ऽ ।ऽ ।।। ऽ।ऽ ।।। ऽ

मद्रक-गीतिभिः सकृद-पि(१०)स्तुव-न्ति भव! ये भव-न्तमभ-वं (१२)

भगणः रगणःनगणः रगणः नगणः रगण नगणः गु०
ऽ।। ऽ।ऽ ।।। ऽ ।ऽ ।।। ऽ।ऽ ।।। ऽ

भक्तिभ-रावन-म्रशिर-सः(१०)प्रण-म्य तव पादयोः सुकृति–नः (१२)।

भगणः रगणः नगणः रगणः नगणः रगण नगणः गु०
ऽ।। ऽ।ऽ ।।। ऽ ।ऽ ।।। ऽ।ऽ ।।। ऽ

ते पर-मेश्वर-स्य पद-वी(१०)मवा-प्य सुख-माप्नुव-न्ति विपु–लं

भगणः रगणः नगणः रगणः नगणः रगण नगणः गु०
ऽ।। ऽ।ऽ ।।। ऽ ।ऽ ।।। ऽ।ऽ ।।। ऽ

मर्त्यभु–वं स्पृश–न्ति न पु–न(१०)र्मनो–हरसु–राङ्गना–परिवृ–ताः (१२)॥

**शिवप्रसादिनी**—जिस वृत्त के प्रत्येक पाद में भगण (ऽ।।) रगण (ऽ।ऽ) नगण (।।।) रगण (ऽ।ऽ) नगण (।।।) एवं रगण (ऽ।ऽ) और अन्त में पुनः नगण (।।।) तथा एक गुरु (ऽ) वर्ण हो, वह वृत्त ''मद्रक'' कहा जाता है। चार पादों वाले इस छन्द के प्रत्येक पाद में (२२) बाईस-बाईस अक्षर होते हैं, तथा (१०) दश अक्षरों के अनन्तर और बारह अक्षरों के उपरान्त इसमें यति का होने का नियम है ॥२६॥

(विकृतौ[2])

---

(१) उक्तद्वाविंशत्यक्षरप्रस्तारस्य (१९३०७११) तमो भेदो 'मद्रकम्' इति नाम्ना प्रसिद्धः। अस्यैव 'प्रभद्रकम्' इति नामान्तरं रत्नाकरे।

(२) अस्य छन्दसः त्र्यशीतिलक्षाणि, अष्टाशीतिसहस्राणि, अष्टोत्तराणि षट्शतानि (८३० ८६०८) च भेदा भवन्ति। तेषु भेदद्वयमेवात्र निर्दिष्टम्। परत्र च येऽधिका भेदास्ते यथा—

**सुन्दरीच्छन्दः (२३।३५९००४४)—**

'जहिं आइहि हत्थो करअल तत्थो पाअ लहूजुअ वंक तिआ
ठवि सल्ल पहिल्लौ चमरहिहिल्लौ सल्लजुअं पुणु वंकठिआ।
पअअंतहि हत्थागण पभणिज्जे तेइस वण्ण पमाण किआ
एँहु मत्तहि पाआ पइ पभणिज्जे वण्णहि **सुंदरि**आ भणिआ॥'

(प्रा० पि०सू० २।२७१)

## अश्वललितं न्जौ भ्जौ भ्जौ भ्लौ ग्रुद्राऽऽदित्याः ।।७।२७।।

**मृतसञ्जीवनी**—यस्य पादे नगणजगणौ (।।।.।ऽ।) भगणजगणौ (ऽ।।.।ऽ।) पुनर्भगणजगणौ (ऽ।।.।ऽ।) भगणो (ऽ।।) लकारगकारौ (।.ऽ) च भवतः, तद्वृत्तम् 'अश्वललितम्[१]' नाम । एकादशभिर्द्वादशभिश्च यतिः । तत्रोदाहरणम्—

नगणः जगणः भगणः जगणः भगणः जगण भगणः ल० गु०
।।। ।ऽ। ऽ।। ।ऽ । ऽ।। ।ऽ। ऽ।। । ऽ
पवन-विधूत-वीचि च-पलं(११)वि-लोकय-ति जीवि-तं तनु-भृ-तां(१२)

नगणः जगणः भगणः जगणः भगणः जगण भगणः ल० गु०
।।। ।ऽ। ऽ।। ।ऽ । ऽ।। ।ऽ। ऽ।। । ऽ
वपुर-पि हीय-मान म-निशं(११)ज-रावनि-तया व-शीकृत-मि-दम् (१२)।

नगणः जगणः भगणः जगणः भगणः जगण भगणः ल० गु०
।।। ।ऽ। ऽ।। ।ऽ । ऽ।। ।ऽ। ऽ।। । ऽ
सपदि निपीडऩ व्यति-करं(११)य-मादिव नराधि-पान्त्र-प-शुः(१२)

नगणः जगणः जगणः जगणः भगणः जगण भगणः ल० गु०
।।। ।ऽ। ऽ।। ।ऽ । ऽ।। ।ऽ। ऽ।। । ऽ
परव-निताम-वेक्ष्य कु-रुते(११)त-थापि ह-तबुद्धि-रश्वल-लि-तम् (१२) ।।

**शिवप्रसादिनी**—जिस वृत्त के प्रत्येक पाद में नगण (।।।) जगण (।ऽ।) भगण (ऽ।।) जगण (।ऽ।) पुनः भगण (ऽ।।) जगण (।ऽ।) भगण (ऽ।।) एवं लकार (।) तथा गकार (ऽ) उपस्थित हों, तो वह वृत्त ''अश्वललित'' नाम से कहा जाता है । यहाँ ग्यारह (११) एवं बारह (१२) अक्षरों पर यति होता है ।।२७।।

## मत्ताक्रीडा मौ त्नौ नौ न्लौ ग् वसुपञ्चदशकौ ।।७।२८।।

**मृतसञ्जीवनी**—यस्य पादे मगणौ, (ऽऽऽ.ऽऽऽ) तगणो, (ऽऽ।) नगणाश्चत्वारो (।।।.।।।.।।।.।।।) लकारगकारौ (।.ऽ) च तद्वृत्तं 'मत्ताक्रीडा[२]' नाम । अष्टभिः पञ्चदशभिश्च यतिः । तत्रोदाहरणम्—

---

**सुधालहरीच्छन्दः (२३।३५९४२४०)**—
'नगणेन तर्कजलगै रुद्रर्तुरसैर्यतिः **सुधालहरी** ।' मं०म०

**अद्रितनयाच्छन्दः (२३।३८६१४२४)**—
'नजभजभा जभौ लघुगुरू बुधैस्तु गदितेयम**द्रितनया** ।'

(१) उक्तत्रयोविंशत्यक्षरप्रस्तारस्य (२८१२८४८) तमो भेदः **'अश्वललितम्'** इति नाम्ना प्रसिद्धः ।

(२) उक्तत्रयोविंशत्यक्षरप्रस्तारस्य (४२९४०४९) तमो भेदः **'मत्ताक्रीडा'** नाम्ना ख्यातः ।

मगणः मगणः तगणः नगणः नगणः नगण नगणः ल० गु०
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ । । । । । । । । । । । । । । ऽ
हृद्यं म-द्यं पीत्वा नारी(८)स्ख-लितग-तिरति-शयर-सिकहृ-द-या(१५)
मगणः मगणः तगणः नगणः नगणः नगण नगणः ल०गु०
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ । । । । । । । । । । । । । । ऽ
मत्ताक्री-डा लोलै-रङ्गै(८)मु-दमखि-लविट-जनम-नसि कु-रु-ते (१५)।
मगणः मगणः तगणः नगणःनगणः नगण नगणः ल० गु०
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ । । । । । । । । । । । । । । ऽ
वीतव्री-डाश्लीला-लापैः(८)श्र-वणसु-खसुभ-ग सुल-लितव-च-ना (१५)
मगणः मगणः तगणः नगणः नगणः नगण नगणः ल०गु०
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ । । । । । । । । । । । । । । ऽ
नृत्यैर्गी-तैर्भ्रूवि-क्षेपैः(८)क-लमणि-त विवि-धविह-गकुल-रु-तैः (१५)॥

**शिवप्रसादिनी**—जिस छन्द वा वृत्त के प्रतिपाद में दो मगण (ऽऽऽ-ऽऽऽ) तगण (ऽऽ।) चार नगण (।।।-।।।-।।।-।।।) लकार (।) और गकार (ऽ) क्रमशः उपस्थित हो, वह वृत्त "मत्ताक्रीडा" कहलाता है। यहाँ पर आठ एवं पन्द्रह अक्षरों पर यति हुआ करता है ॥२८॥

(संकृतौ[१])

---

(१) अत्रापि प्रस्तारे चतुर्विंशत्यक्षरस्यैका कोटिः सप्तषष्टिलक्षाणि सप्तसप्ततिसहस्राणि षोडशोत्तरं शतद्वयं च (१६७७७२१६) भेदाः। तेषु ग्रन्थान्तरे केचिद्दृश्यन्ते। यथा—

**स्वैरिणीक्रीडनवृत्तम् (२४।४७९३४९१)**—
'**स्वैरिणीक्रीडनं** प्रोक्तमष्टभी रगणैर्युतम्।'- मं०म०।

**दुर्मिलाच्छन्दः (२४।७१९०२६६)**—
'**दुमिलाइ** पआसहु वण्ण विसेसहु दीस फणिंदह चारुगणा
भणु मत्त बतीसह जाणिअ सेसह अट्ठहि ठाम ठई सगणा।
गण अण्ण ण किज्जइ कित्ति मुणिज्जइ लग्गइ दोस अणेअ जही
कही तिण्णि विरामहि पाअह ता दह अट्ठ चउद्दह मत्त सही॥'
(प्रा० पि०सू० २।२७७)

'**द्रुमिला**' इत्याख्यान्तरं चन्द्रिकायामस्याः, '**घोटक**'मिति मणिकोशे।

**वेश्याप्रीतिवृत्तम् (२४।८४५१८५७)**—
'**वेश्याप्रीतिर्मभयमनभनसयुक्ता** हि फणिगजैश्छिन्ना।' -मं०म०

## तन्वी भ्तौ न्सौ भौ न्याविन्द्रियस्वरमासाः[१] ।।७।२९।।

**मृतसञ्जीवनी**—यस्य पादे भगणतगणौ, (ऽ।।.ऽऽ।) नगणसगणौ; (।।।.।।ऽ) भगणौ (ऽ।।.ऽ।।) नगणयगणौ (।।।.।ऽऽ) च, तद्वृत्तं 'तन्वी[२]' नाम। पञ्चसु, सप्तसु, द्वादशसु च यतिः। तत्रोदाहरणम्—

भगणः तगणः नगणःसगणः भगणः भगण नगणः यगणः
ऽ ।। ऽ ऽ । ।।।।।ऽ ऽ।। ऽ।। ।।। ।ऽऽ
चन्द्रमु-खी सु(५)न्द-रघन-जघना(७)कुन्दस-मानशि-खरद-शनाग्रा (१२)
भगणः तगणः नगणःसगणः भगणः भगण नगणः यगणः
ऽ ।। ऽ ऽ । ।।। ।।ऽ ऽ।। ऽ।।।।। ।ऽऽ
निष्कल-वीणा(५)श्रु-तिसुख-वचना(७)त्रस्तकु-रङ्गत-रलन-यनान्ता (१२)।
भगणः तगणः नगणः सगणः भगणः भगण नगणः यगणः
ऽ ।। ऽऽ । ।।। ।।ऽ ऽ।। ऽ।। ।।। ।ऽऽ
निर्मुख-पीनो(५)न्न-तकुच-कलशा(७)मत्तग-जेन्द्रल-लितग-मना च (१२)
भगणः तगणः नगणःसगणः भगणः भगण नगणः यगणः
ऽ।। ऽ ऽ । ।।।।।ऽ ऽ।। ऽ। । ।।। । ऽऽ
निर्भर-लीला(५)नि-धुवन-विधये(७)**मुञ्जन-रेन्द्र**! भ-वतु त-व तन्वी (१२)॥

**शिवप्रसादिनी**—जिस वृत्त के प्रत्येक पाद में क्रमशः भगण (ऽ।।) तगण (ऽऽ।) नगण (।।।) सगण (।।ऽ) दो भगण (ऽ।।-ऽ।।) और नगण (।।।) यगण (।ऽऽ) उपलब्ध हों, वह वृत्त ''तन्वी'' इस नाम से कहा जाता है। यहाँ पर क्रमिक रूप से पाँच-सात एवं बारह अक्षरों पर यति हुआ करता है ॥२९॥

---

**किरीटच्छन्दः (२४।१४३८०४७१)**—

ठावहु आइहि सक्कगणा तह सल्ल विसज्जहु वे वि तहापर
णेउर सद्दजुअं तह णेउरए परिबारह सक्कगणा कर।
काहलजुग्गल अंत करिज्जसु एपरि चौविस वण्ण पआसहु
बत्तिस मत्त पअप्पअ लेखउ अड्ड अआर **किरीट** विसेसहु॥'
(प्रा० पि०सू० २।२७९)

(१) 'द्विरादित्या' इति वैदिकपाठः। 'द्विरादित्या' इत्यपहायेन्द्रियस्वरमासा इति प्रतीच्याः पठन्ति, अग्निपुराणे च तथोपबृंहणं दृश्यते।
(व्यङ्कटाचलसूरिः)

(२) उक्तचतुर्विंशत्यक्षरप्रस्तारस्य (४१५५३६७) तमो भेदः **'तन्वी'** इति नाम्ना प्रसिद्धः।

(अभिकृतौ[१])

**क्रौञ्चपदा भ्मौ स्भौ नौ नौ ग् भूतेन्द्रियवस्वृषयः ।।७।३०।।**

**मृतसञ्जीवनी**—यस्य पादे भगणमगणौ, (ऽ।।.ऽऽऽ) सगणभगणौ, (।।ऽ.ऽ।।) नगणाश्चत्वारो (।।।.।।।.।।।.।।।) गकार(ऽ) श्च तद्वृत्तं 'कौञ्चपदा[२]' नाम । पञ्चभिः, पञ्चभिः, अष्टभिः, सप्तभिश्च यतिः । तत्रोदाहरणम्—

भगणः मगणः सगणः भगणः
ऽ ।। ऽऽ ऽ ।।ऽ ऽ ।।
या कपि-लाक्षी(५)पि-ङ्गलके-शी(५)कलि—
नगणः नगणः नगणः नगणः गु०
।।। ।।। ।।। ।।। ऽ
रुचिर-नुदिन(८)मनुन–यकठि—ना(७) ।
भगणः मगणः सगणः भगणः
ऽ ।। ऽऽ ऽ ।।ऽ ऽ ।।
दीर्घत-राभिः(५)स्थू-लशिरा-भिः(५)परि—
नगणः नगणः नगणः नगणः गु०
।।। ।।। ।।। ।।। ऽ
वृतव-पुरति(८)शयकु-टिलग—तिः (७) ।।
भगणः मगणः सगणः भगणः
ऽ ।। ऽऽ ऽ ।।ऽ ऽ ।।
आयत-जङ्घा(५)नि-म्नकपो-ला(५)लघु—
नगणः नगणः नगणः नगणः गु०
।।। ।।। ।।। ।।। ऽ
तरकु-चयुग(८)परिचि-तहद—या(७)

---

(१) अत्रापि प्रस्तारगत्या पञ्चविंशत्यक्षरस्य कोटित्रयम्, पञ्चत्रिंशल्लक्षाणि, चतुःपञ्चाशत्सहस्राणि द्वात्रिंशदुत्तराणि चतुःशतानि च (३३५५४४३२) भेदाः । तेषु ग्रन्थान्तरेऽधिकम् यथा—

**कलकण्ठच्छन्दः (२५।१५५००९६०)**—

'**कलकण्ठाख्यं** सजनजभनरनगाश्चाहिभोगिनिधिभिन्ना ।' मं०म०

(२) उक्तपञ्चविंशत्यक्षरप्रस्तारस्य (१६८७४४४७) तमो भेदः '**क्रौञ्चपदा**' इति नाम्ना प्रसिद्धः ।

भगणः मगणः सगणः भगणः

ऽ ।। ऽऽ ऽ ।।ऽ ऽ ।।

सा परि-हार्या(५)क्रौ-ञ्चपदा स्त्री(५)ध्रुव—

नगणः नगणः नगणः नगणः गु०

। । । ।।। ।।। । ।। ऽ

मिह नि-रवधि(८)सुखम-भिलष-ता (७) ॥

**शिवप्रसादिनी**—जिस छन्द के हरेक पाद में क्रमाऽनुसार भगण (ऽ।।) मगण (ऽऽऽ) सगण (।।ऽ) भगण (ऽ।।) चार नगण (।।।-।।।-।।।-।।।) और एक गकार (ऽ) उपलब्ध होता है, वह वृत्त "क्रौञ्चपदा" नाम से कहा जाता है। इसमें क्रमशः पाँच-पाँच, आठ एवं सात अक्षरों पर यति उपस्थित होता है ॥३०॥

(उत्कृतौ[१])

## भुजङ्गविजृम्भितं मौ त्नौ नौ र्सौ ल्गौ वसुरुद्रर्त्तषयः ।।७।३१।।

**मृतसञ्जीवनी**—यस्य पादे मगणौ (ऽऽऽ.ऽऽऽ) तगणनगणौ (ऽऽ।.।।।) नगणौ (।।।.।।।) रगणसगणौ (ऽ।ऽ.।।ऽ) लकारगकारौ (।.ऽ) च तद्वृत्तं 'भुजङ्गविजृम्भितम्[२]' नाम। अष्टभिरेकादशभिः सप्तभिश्च यतिः। तत्रोदाहरणम्—

---

(१) अत्रापि प्रस्तारगत्या रसलोचन (२६)वर्णस्य कोटिषट्कम्, एकसप्ततिलक्षाणि वसुसहस्राणि, चतुःषष्ट्युत्तराण्यष्टौ शतानि च (६७१०८८६४) भेदाः। तत्र ग्रन्थान्तरेषूपलब्धो विशेषो यथा—

**रञ्जनवृत्तम् (२६।१४६६३५५१)**—

भ्रज्नस्नन्भगगैरर्वार्वविषुभिदि **रञ्जनम्**।' -मं०म०

**चेटीगतिवृत्तम् (२६।१११७०८९०)**—

'**चेटीगतिश्च** गायत्री या लगौ छिदिनैर्मृगैः।' -मं०म०

**कमलावृत्तम् (२६।५०३२३३९४)**—

'यस्यां नकारयुगलं परतो भकार-
स्तस्मान्नजौ च नगणत्रयतो गलौ स्तः।
खण्डैर्नगैर्दशभिरत्र यतिर्विशाला
सा पिङ्गलेन कथिता कमलातिरम्या॥'

(वृत्तचन्द्रिका २।१३९)

(२) उक्तषड्विंशत्यक्षरप्रस्तारस्य (१३८३४७४९) तमो भेदः '**भुजङ्गविजृम्भितम्**' इति नाम्ना प्रसिद्धः।

मगणः मगणः तगणः नगणः
ऽ ऽऽ ऽऽऽ ऽऽ । ।।।
ये संन-द्धानेका-नीकै(८)र्न-रतुर—
नगणः नगणः रगणः सगणः ल० गु०
। ।। ।।। ऽ । ऽ ।।ऽ । ऽ
गकरि-परिवृ-तैः(११)समं-तव श-त्र-वो (७)
मगणः मगणः तगणः नगणः
ऽऽऽ ऽऽऽ ऽऽ । ।।।
युद्धश्र-द्धालुब्धा-त्मान(८)स्त्वं-दभिमु—
नगणः नगणः रगणः सगणः ल० गु०
।।। ।।। ऽ ।ऽ ।।ऽ । ऽ
खमप-गतभि-यः(११)पत-न्ति धृता-यु-धाः(७)।
मगणः मगणः तगणः नगणः
ऽ ऽ ऽ ऽ ऽऽ ऽऽ । ।।।
ते त्वां दृ-ष्ट्वा संग्रा-माग्रे(८)नृ[१]-पतिव—
नगणः नगणः रगणः सगणः ल० गु०
। ।। ।।। ऽ ।ऽ । ।ऽ । ऽ
र! कृप-णमन-स(११)श्चल-न्ति दिग-न्त-रं (७)
मगणः मगणः तगणः नगणः
ऽ ऽ ऽ ऽऽ ऽ ऽऽ । ।।।
किंवा सो-ढुं शक्यं भेकै(८)र्ब-हुभिर—
नगणः नगणः रगणः सगणः ल० गु०
। ।। ।।। ऽ ।ऽ ।।ऽ । ऽ
पि सवि-षविष-मं(११)भुज-ङ्गविजृ-म्भि-तम्? (७)॥

अत्र **कात्यायनेनाप्युक्तम्**—

मगणः मगणः तगणः नगणः
ऽ ऽऽ ऽऽऽ ऽऽ । ।।।
ध्यानैका-ग्रालम्बा-दृष्टिः(८)क-मलमु—

(१) 'तुडिगनृप ! कृपणमनसः पलन्ति दिगन्तरम्' क०मु० पुस्तके, लिखितपुस्तके च।

नगण: नगण: रगण: सगण: ल० गु०

। । । । । । ऽ । ऽ । । ऽ । ऽ

खि! लुलि-तमल-कं(११)करे स्थितमा–न–न (७)

मगण: मगण: तगण: नगण:

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ । । । ।

चिन्तास-क्ता शून्या-बुद्धि(८)र्द्वि–रदग—

नगण: नगण: रगण: सगण: ल० गु०

। । । । । । ऽ । ऽ । । ऽ । ऽ

तिपति-तरस-ना(११)तनु-स्तनुतां ग–ता(७)

मगण: मगण: तगण: नगण:

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ । । । ।

पाण्डुच्छा-यं क्षामं वक्रं (८)म-दजन—

नगण: नगण: रगण: सगण: ल० गु०

। । । । । । ऽ । ऽ । । ऽ । ऽ

नि!रह-सि सर-सां(११)करो-षि न सं–क–थां (७)

मगण: मगण: तगण: नगण:

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ । । । ।

को नामा-यं रम्यो व्याधि(८)स्त-व कथ—

नगण: नगण: रगण: सगण: ल० गु०

। । । । । । ऽ । ऽ । । ऽ । ऽ

य सुत-नु! किमि-दं(११)न ख-ल्वसि ना–तु–रा(७) ॥

**शिवप्रसादिनी**—जिस वृत्त के प्रत्येक पाद में क्रमशः दो मगण (ऽऽऽ-ऽऽऽ) तगण (ऽऽ।) तीन नगण (।।।-।।।-।।।) रगण (ऽ।ऽ), सगण (।।ऽ) तथा लकार (।) एवं मकार (ऽ) हो, वह वृत्त ''भुजङ्गविजृम्भित'' नामक होता है। यहाँ आठ, ग्यारह और सात अक्षरों पर यति उपस्थित होता है ॥३१॥

## अपवाहको म्नौ नौ-नौ न्सौ गौ नवर्तुरसेन्द्रियाणि ॥७।३२॥

**मृतसञ्जीवनी**—यस्य पादे मगणः, (ऽऽऽ) नगणाः षट्, (।।।.।।।.।।।.।।।.।।।.।।।) सगणो, (।।ऽ) गकारौ (ऽ.ऽ) तद्वृत्तं 'अपवाहको'[१] नाम। नवसु, षट्सु, षट्सु, पञ्चसु च यतिः। तत्रोदाहरणम्—

(१) तेष्वेव (८३८८६०१) तमो भेदः **'अपवाहकः'** इति ख्यातिमाससाद।

मगणः नगणः नगणः नगणः नगणः
ऽ ऽ ऽ ।।। ।।। ।।। ।।।
श्रीकण्ठं त्रिपुर–दहन(९)ममृत–किरण(६)—
नगणः नगणः सगणः गु० गु०
।।। ।।। ।।ऽ ऽ ऽ
शकल-ललित(६)शिरसं रु–द्रं(५)
मगणः नगणः नगणः नगणः नगणः
ऽ ऽ ऽ ।।। ।।। ।।। ।।।
भूतेशं हतमु–निमख(९)मखिल–भुवन (६)—
नगणः नगणः सगणः गु० गु०
।।। ।।। ।।ऽ ऽ ऽ
नमित-चरण(६)युगमी–शा–नम् (५)।
मगणः नगणः नगणः नगणः नगणः
ऽ ऽ ऽ ।।। ।।। ।।। ।।।
सर्वज्ञं वृषभ-गमन(९)महिप–तिकृत(६)—
नगणः नगणः सगणः गु० गु०
।।। ।।। ।।ऽ ऽ ऽ
वलय–रुचिर(६)करमा–रा–ध्यं(५)
मगणः नगणः नगणः नगणः नगणः
ऽ ऽ ऽ ।।। ।।। ।।। ।।।
तं वन्दे भवभ-यभिद(९)मभिम-तफल(६)—
नगणः नगणः सगणः गु० गु०
।।। ।।। ।।ऽ ऽ ऽ
वितर-णगुरु(६)मुमया यु–क्तम् (५)॥

इति कृतयः समाप्ताः ॥

इदानीं दण्डकजातयः कथ्यन्ते—

**शिवप्रसादिनी**—जिस वृत्त के प्रत्येक पाद में मगण (ऽऽऽ) छह नगण (।।।-।।।-।।।-।।।-।।।-।।।) एक सगण (।।ऽ) और अन्त में दो गुरु अक्षर उपस्थित हो, तो वह वृत्त "अपवाहक" नामा होता है। इसमें क्रम से नौ, छः-छः और पाँच अक्षरों पर यति हुआ करता है ॥३२॥

## दण्डको नौ रः ।।७।३३।।

**मृतसञ्जीवनी**—यत्र पादे द्वौ नगणौ (।।।.।।।) रगणाश्च सप्त (ऽ।ऽ.ऽ।ऽ.ऽ।ऽ.ऽ।ऽ.ऽ।ऽ.ऽ।ऽ.ऽ।ऽ) भवन्ति, दण्डको नाम सः । उत्कृतेः षड्विंशत्यक्षरायाः समनन्तरं दण्डकस्य पाठात्सप्त[1]विंशत्यक्षरत्वमेव युक्तम्; सर्वेषां छन्दसामेकैकाक्षरवृध्या प्रवृत्तेः । इत ऊर्ध्वं पुनरेकैकरेफवृध्या प्रस्तारः । दण्डको नौ र इति श्रवणात् । तत्रोदाहरणम्—

नगणः नगणः रगणः रगणः रगणः
।।। ।।। ऽ।ऽ ऽ।ऽ ऽ।ऽ
इह हि भवति दण्डका-रण्यदे-शे स्थिति

रगणः रगणः रगणः रगणः
ऽ।ऽ ऽ।ऽ ऽ।ऽ ऽ।ऽ
पुण्यभा—जां मुनी—नां मनो—हारिणी

नगणः नगणः रगणः रगणः रगणः
।।। ।।। ऽ।ऽ ऽ।ऽ ऽ।ऽ
त्रिदश–विजयि–वीर्य दृ–प्यद्दश-ग्रीवल-

रगणः रगणः रगणः रगणः
ऽ।ऽ ऽ।ऽ ऽ।ऽ ऽ।ऽ
क्ष्मीविरा—मेण रा—मेण सं—सेविते ।

नगणः नगणः रगणः रगणः रगणः
।।। ।।। ऽ।ऽ ऽ।ऽ ऽ।ऽ
जनक–यजन–भूमिसं—भूतसी–मन्तिनी-

रगणः रगणः रगणः रगणः
ऽ।ऽ ऽ।ऽ ऽ।ऽ ऽ।ऽ
सीमसी—तापद—स्पर्शपू—ताश्रमे

नगणः नगणः रगणः रगणः रगणः
।।। ।।। ऽ।ऽ ऽ।ऽ ऽ।ऽ
भुवन-नमित-पादप-द्माभिधा-नाम्बिका

रगणः रगणः रगणः रगणः
ऽ।ऽ ऽ।ऽ ऽ।ऽ ऽ।ऽ
तीर्थया—त्रा गता—नेकसि—द्धाकुले ।। अत्र पादान्ते यतिः ।

(१) सप्तविंशत्यक्षरस्य प्रस्तारे (१३४२१७७२८) भेदा भवन्ति, तत्र—(३८४४७९६८) तमो भेदः 'चण्डवृष्टिप्रयात' इति प्रसिद्धः ।

(इस समय दण्डक जाति वाले छन्द कहे जा रहे हैं—)

**शिवप्रसादिनी**—जिस वृत्त के प्रत्येक पाद में क्रमशः दो नगण (।।।-।।।) और सात रगण (ऽ।ऽ-ऽ।ऽ-ऽ।ऽ-ऽ।ऽ-ऽ।ऽ-ऽ।ऽ-ऽ।ऽ) उपलब्ध होते हों, वह जाति स्वरूपछन्द ''दण्डक'' नाम होता है। सभी छन्दों की ही एक-एक अक्षरों की वृद्धि क्रम से प्रवृत्ति होने के कारण छब्बीस (२६) अक्षरों वाले उत्कृति छन्द के अनन्तर दण्डकवृत्त का पाठ होने से इस छन्द में सत्ताईस (२७) अक्षरों का होना ही उचित है। यहाँ से ऊपर पुनः एक-एक अक्षरों की वृद्धि से ''प्रस्तार'' कहा जाएगा। यह बात ''दण्डको नौ रः'' सूत्र के श्रवण से ज्ञात होता है ।।३३।।

## प्रथमश्चण्डवृष्टिप्रयातः[1] ।।७।३४।।

**मृतसञ्जीवनी**—यः सप्तविंशत्यक्षरपादः प्रथमो दण्डकः स चण्डवृष्टिप्रयातो नाम। पूर्वमेवोदाहरणम्।

**शिवप्रसादिनी**—सत्ताईस अक्षरों से विशिष्ट जो प्रथम दण्डक, उसको ''चण्डवृष्टिप्रपात'' कहते हैं ।।३४।।

## अन्यत्र रातमाण्डव्याभ्याम् ।।७।३५।।

**मृतसञ्जीवनी**—रातमाण्डव्याभ्यां ऋषिभ्यामन्यत्रास्याभिधानमेतदेव, ताभ्यां पुनरन्यैव संज्ञा कृतास्य वृत्तस्य ।। रातमाण्डव्यग्रहणं पूजार्थम्।[2]

---

(१) प्रपात इति क्वचित्पाठः।

(२) अत्र रातमाण्डव्योक्तसंज्ञान्तरसत्वे 'स्कन्धोग्रीवी क्रौष्टुकेः' (३।२९) 'सिंहोन्नता काश्यपस्य' (७।९) इत्यादिवत् तन्निर्देशस्यैव न्याय्यत्वात्, ग्रन्थान्तरेष्वप्यस्य संज्ञान्तरादर्शनात्, प्रथमपदसूचितानामन्येषां संज्ञानुक्तेर्न्यूनत्वापादकत्वात्, एतदीयानुवादेऽ-**ग्निपुराणे** (३३४।३०)—'रेफवृद्ध्यार्णार्णवाः स्युर्व्यालजीमूतमुख्यकाः।' इति तत्संज्ञोक्तेरनुपपद्यमानत्वाच्च सूत्रमिदमन्यथा व्याख्येयम्—अन्यत्र द्वितीयादिषु दण्डकेषु संज्ञा रातमाण्डव्याभ्यामुक्ताः। ता एव स्वस्यापि सम्मता इति न पुनरुच्यन्त इति भावः। यद्वा—उत्तरसूत्रयोगेन व्याख्येयम् रातमाण्डव्याभ्यामन्यत्र शेषोऽवशिष्टो दण्डकप्रस्तारः प्रचितसंज्ञः। ताभ्यां पुनः प्रत्येकं पृथक् संज्ञा अर्णार्णवादयः कृताः प्रसिद्धा एवेति ।।

तथा च **रत्नाकरे** (३।१२)—'प्रतिचरणविवृद्धरेफाः स्युरर्णार्णव-व्याल-जीमूत-लीलाकरो-द्दाम-शङ्खादयः।' इति। आदिपदात् पञ्चदशादिभी रगणैर्घटितपादाः क्रमेण-'आराम-सङ्ग्राम-सुराम-वैकुण्ठ-सार-कासार-विसार-संहार-नीहार-मन्दार-केदार-आसार-सत्कार-संस्कार—माकन्द-गोविन्द-सानन्द-सन्दोह-आनन्द' इत्येते ग्राह्या इति **तर्कवाचस्पतिः**। सिंहसमुद्रभुजङ्गाद्या इति **रत्नाकरपञ्चिका**।

'एवमेकैकरगणवर्धनात्सकलाङ्घ्रिषु। एकन्यूनसहस्रार्णपर्यन्तं दण्डका मताः ।।'—इति **श्रीकृष्णः**।

**शिवप्रसादिनी**—रात और माण्डव्य ऋषियों ने अन्यवृत्त स्थान में इस "चण्डवृष्टिप्रपात" का उल्लेख किया है ॥३४॥

### [१]शेषः प्रचित इति ॥७।३६॥

**मृतसञ्जीवनी**—इतश्चण्डवृष्टिप्रयातादूर्ध्वं दण्डकप्रस्तारः प्रचित इति संज्ञां लभते। पूर्वमेकैकाक्षरक्रमेण छन्दसां वृद्धिरुक्ता। इदानीं तु रेफोपलक्षिताक्षरत्रयेण वृद्धिः। तत्रोदाहरणम्—

नगणः नगणः रगणः रगणः रगणः
। । । । । । ऽ । ऽ ऽ । ऽ ऽ । ऽ
प्रथम–कथित–दण्डक–श्चण्डवृ–ष्टिप्रपा-

---

(१) शेष इति। अनुक्तनाम्नां दण्डकानां प्रचित इत्येव संज्ञा इति **भास्करः**। शेषो रगणेतरयगणादि घटितः **इत्यन्ये**। तथा च **रत्नाकरे** (३।१३)—'प्रचितकसमभिधो धीरधीभिः स्मृतो दण्डको नद्वयादुत्तरैः सप्तभिर्यैः।' इति। 'यैरित्यन्येषामपि गणानामुपलक्षणम्, कविप्रयोगात् तघटितानामपि दण्डकानामिष्टत्वात्।' इति सेतुः। **पञ्चिकाकृत्तु**—'नद्वयात्परतस्तकारेणापि क्वचिद्दण्डा दृश्यन्ते' इति सूत्रमेव पपाठ।

'नगणद्वितयादेवमेकैकगणवर्धनात्।
कुमुदाब्जतरङ्गादिनाम्नां भेदाश्च पूर्ववत्॥'—इति **कृष्णः**।

इति ऊर्ध्वमष्टाविंशत्यक्षरादिपादान्यपि वृत्तानि कैश्चिदभ्युपगतानि। यथा **वृत्तचन्द्रिकायाम्**—

**मनोजशेखरच्छन्दः (२८)**—'जरौ जरौ जरौ जरौ जगौ क्रमेण चेद्यदा।
तदा भुजङ्गनायको मनोजशेखरं जगौ॥'

**अशोकपुष्पमञ्जरी (२८)**—'रजौ रजौ रजौ रजौ रलौ क्रमेण चेद्यदा।
अशोकपुष्पमञ्जरी समीरिता फणीश्वरैः॥'

**शालूरच्छन्दः (२९)**—
'तगणात्परतो यत्र नगणाष्टकमुज्ज्वलम्।
ततो लगौ भुजङ्गेन प्रोक्तं शालूरमद्भुतम्॥'

**घनाक्षरीच्छन्दः (३१)**—
'विचारचर्चा गलयोर्गणानां न यत्र भूपैस्थितिभिर्यतिर्गुरुः।
अन्ते धरापावकवर्णपादा समीरितासौ फणिना घनाक्षरी॥'

**रूपघनाक्षरीच्छन्दः (३२)**—'भूपैर्भूपैर्विरामः स्याद्गणभेदगलोज्झितैः।
ज्ञेयान्ते लघुना युक्ता रूपपूर्वा घनाक्षरी॥'

इत्यादीनि। एतेषामत्र दण्डकगाथादिष्वन्तर्भाव ऊह्य इति।

रगणः रगणः रगणः रगणः रगणः
ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ
ताभिधा-नो मुनेः **पिङ्गला-चार्यना**-म्नो मतः
नगणः नगणः रगणः रगणः रगणः
। । । । । । ऽ । ऽ ऽ । ऽ ऽ । ऽ
प्रचित-इति त-तः परं दण्डका-नामियं
रगणः रगणः रगणः रगणः रगणः
ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ
जातिरे-कैकरे–फाभिवृ–ध्द्या यथे-ष्टं भवेत् ।
नगणः नगणः रगणः रगणः रगणः
। । । । । । ऽ । ऽ ऽ । ऽ ऽ । ऽ
स्वरुचि—रचित—संज्ञया तद्विशे—षैरशे-
रगणः रगणः रगणः रगणः रगणः
ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ
षैः पुनः काव्यम-न्येऽपि कु-र्वन्तु वा-गीश्वराः
नगणः नगणः रगणः रगणः रगणः
। । । । । । ऽ । ऽ ऽ । ऽ ऽ । ऽ
भवति यदि स–मानसं–ख्याक्षरै–र्यत्र पा-
रगणः रगणः रगणः रगणः रगण
ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ
दव्यव-स्था ततो दण्डकः पूज्यते-ऽसौ जनैः ॥

अत्र पादान्ते यतिः ।

इति दण्डकाः समाप्ताः ।

इति श्रीभट्टहलायुधविरचितायां पिङ्गलछन्दोवृत्तौ सप्तमोऽध्यायः ।

**शिवप्रसादिनी**—इस "चण्डवृष्टिप्रपात" से ऊपर दण्डकप्रस्तार का "प्रचित" नाम होगा । पूर्व में समस्त छन्दों के एक-एक अक्षर वृद्धि की बात कही गयी है । अब रेफ युक्त तीन-तीन अक्षरों की वृद्धि कही जा रही है ॥३६॥

॥ इति सांख्य-योग-न्याय-वैशेषिक-पद-वाक्य-पारावारीणेन मैथिलपण्डित-
चित्तनारायणपाठकाऽऽह्वयेन कृतायां पिङ्गलछन्दःशास्त्रीय-
शिवप्रसादिनीव्याख्यायां सप्तमोऽध्यायः ॥

# अष्टमोऽध्यायः

## अत्रानुक्तं गाथा[१] ।।८।१।।

**मृतसञ्जीवनी**—अत्र शास्त्रे नामोद्देशेन यन्नोक्तं छन्दः, प्रयोगे च दृश्यते तद्गाथेति मन्तव्यम् ।

**शिवप्रसादिनी**—इस ग्रन्थ में तत्तल्लक्षणों से लक्षित जितने छन्द कहे गये हैं; उन छन्दों से भिन्न अनुक्त रूप में बचे हुए जो भी छन्द प्रयुक्त होते देखे जाते हैं, वे चाहे विषम अक्षर वाले पाद हों अथवा असम पाद हों, तथा पूर्व में कहे गये समानाऽक्षरयुक्त पादों में भी विशेष रूप से जिसका विधान अभी तक नहीं हुआ है, उस छन्द को ''गाथा'' कहते हैं ।।१।।

(तत्र-त्रिष्टुभि)

## [२]कुड्मलदन्ती भ्तौ न्गौ गिन्द्रियरसाः ।।८।२।।

---

(१) अत्र ग्रन्थे उक्तच्छन्दोभ्यो यदन्यद्विषमाक्षरपादं पादैरसमं वा छन्दस्तद्गाथाख्यम् । तथा प्रागुक्तेषु समानाक्षरपादेष्वपि विशिष्य यस्याभिधानं नोक्ताम्, तद्गाथा । तदेतदर्थद्वयं सूत्रावृत्त्या लभ्यमिति **केचित्** । तत्र समच्छन्दसामुक्थादिसंज्ञाभिरुक्तत्वेनानुक्तत्वाभावात् न गाथात्वम्, अन्यथा उक्थादिसंज्ञानामनवकाश **इत्यपरे** ।

अत एव **वृत्तचन्द्रिकायाम्**—'गाथोक्ता चरणैः षड्भिस्तथैव चरणैस्त्रिभिः ।' इत्युक्तम् । **रत्नाकरेऽपि**—'विषमाक्षरपादं वा पादैरसमं दशधर्मवत् । यच्छन्दो नोक्तमत्रगाथेति तत्सूरिभिः प्रोक्तम् ।।' इति । अत्र **सेतुः**—विषमेति-क्रमभेदात् सङ्ख्याभेदाच्च विषमाणि अक्षराणि लघुगुरवो येषु ते विषमाक्षराः । ते पादा यस्मिंस्तथोक्तम् । वा अथवा, चतुःसङ्ख्याकपादैः श्रीप्रभृतिभिर्विसदृशम्—पञ्चादिसङ्ख्यपादमित्यर्थः । तदेवाह—यच्छन्दः प्रोङ्नोक्तं तस्य गाथेति नामेत्यर्थः । यत्तु—पदचतुरूर्ध्वादीनां गाथात्वं निवारयितुमाहे–ति, तच्चिन्त्यम्, पादैरसममित्यनेनैव तेषां गाथात्वस्य निरस्तत्वात् । ....विषमाक्षरपादे त्वियमेव कारिकोदाहरणम्; क्रमेणाष्ट-दश-सप्त-नवाक्षरपादघटिततत्वात् । पादैरसमित्यस्योदाहरणं 'दशधर्म'वदिति । तच्च **महाभारते** (उद्यो० ३३।१०१)—'दश धर्मं न जानन्ति धृतराष्ट्र! निबोध तान् । मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः । त्वरमाणश्च लुब्धश्च भीतः कामी च ते दश ।।' इति ।

(२) इतः प्रभृति 'शशिवदना–' (८।१९) इति सूत्रान्तं सप्तदशसूत्राणि वैदिकैर्नाधीयन्ते, अग्निपुराणेऽपि नानूद्यन्ते, तस्मात्प्रक्षिप्तान्येवेति सम्भाव्यते ।

**मृतसञ्जीवनी**—यस्य पादे भगणतगणौ (ऽ।।.ऽऽ।) नगणो (।।।) गकारौ (ऽ.ऽ) च भवतस्तद्वृत्तं 'कुड्मलदन्ती' नाम (११।३९७)। पञ्चभिः षड्भिश्च यतिः। तत्रोदाहरणम्—

भगणः तगणः नगणः गु० गु०
ऽ।। ऽऽ ।।।। ऽ ऽ
कुड्मल-दन्ती(५)वि-कटनि–त–म्बा (६)
भगणः तगणः नगणः गु० गु०
ऽ।। ऽऽ ।।।। ऽ ऽ
किन्नर–कण्ठी(५)ल–घुतर–म–ध्या(६)
भगणः तगणः नगणः गु० गु०
ऽ।। ऽऽ ।।।। ऽ ऽ
बिम्बफ–लोष्ठी(५)मृ–गशिशु–ने–त्रा(६)
भगणः तगणः नगणः गु० गु०
ऽ।। ऽऽ ।।।। ऽ ऽ
मित्र! भ-वन्तं(५)सु–खयतु–का–न्ता(६)॥

**शिवप्रसादिनी**—जिस वृत्त के हरेक पाद में भगण (ऽ।।) तगण (ऽऽ।) नगण (।।।) और दो गुरू अक्षर (ऽऽ) क्रम से उपस्थित हो, वह वृत्त "कुड्मलदन्ती" कहलाता है। यहाँ पर इन्द्रिय = पाँच और रस = छह अक्षरों पर यति होता है ॥२॥

(जगत्याम्)

## वरतनुर्न्जौ ज्रौ षड्रसाः ॥८।३॥

**मृतसञ्जीवनी**—यस्य पादे नगणजगणौ (।।।.।ऽ।) जगणरगणौ (।ऽ।.ऽ।ऽ) च तद्वृत्तं 'वरतनु'र्नाम (१२।१३९२)। षड्भिः षड्भिश्च यतिः। तत्रोदाहरणम्—

नगणः जगणः जगणः रगणः
।।। ।ऽ। ।ऽ। ऽ।ऽ
अयि! वि-जहीहि(६) दृढोप-गूहनं (६)
नगणः जगणः जगणः रगणः
।।। ।ऽ। ।ऽ। ऽ।ऽ
त्यज न-वसङ्ग(६)-मभीरु!वल्लभम् (६)।
नगणः जगणः जगणः रगणः
।।। ।ऽ। ।ऽ। ऽ।ऽ
अरुण-करोद्ग(६)-म एष वर्तते (६)

नगणः जगणः जगणः रगणः
। । । । ऽ । । ऽ । ऽ । ऽ
वरत-नु! संप्र(६)-वदन्ति कुक्कुटाः (६) ॥

**शिवप्रसादिनी**—जिस वृत्त के प्रतिपाद में क्रमिक रूप से नगण (।।।) जगण (।ऽ।) और जगण (।ऽ।) रगण (ऽ।ऽ) हों, वह वृत्त ''वरतनु'' कहा जाता है। षड्रसाः = छः-छः अक्षरों पर यति की उपस्थिति यहाँ होती है ॥३॥

## जलधरमाला म्भौ स्मौ समुद्रवसवः ॥८।४॥

**मृतसञ्जीवनी**—यस्य पादे मगणभगणौ (ऽऽऽ.ऽ।।) सगणमगणौ (।।ऽ.ऽऽऽ) च भवतस्तद्वृत्तं 'जलधरमाला' नाम (१२।२४१)। चतुर्भिरष्टभिश्च यतिः। तत्रोदाहरणम्—

मगणः भगणः सगणः मगणः
ऽ ऽ ऽ ऽ । । । । ऽ ऽ ऽ ऽ
धत्ते शो-भां (४)कुव-लयदा-मश्यामा(८)

मगणः भगणः सगणः मगणः
ऽ ऽ ऽ ऽ । । । । ऽ ऽ ऽ ऽ
शैलोत्स-ङ्गे(४)जल-धरमा-ला लीना(८)

मगणः भगणः सगणः मगणः
ऽ ऽ ऽ ऽ । । । । ऽ ऽ ऽ ऽ
विद्युल्ले-खा(४)कन-ककृता-लङ्कारा(८)

मगणः भगणः सगणः मगणः
ऽ ऽ ऽ ऽ । । । । ऽ ऽ ऽ ऽ
क्रीडासु-प्ता(४)युव-तिरिवा-ङ्के पत्युः (८) ॥

**शिवप्रसादिनी**—जिस वृत्त के प्रतिपाद में क्रमशः मगण (ऽऽऽ) भगण (ऽ।।) और सगण (।।ऽ) तथा मगण (ऽऽऽ) उपलब्ध होते हों, वह वृत्त ''जलधरमाला'' कहा जाता है। यहाँ क्रमिक रूप से चार अक्षरों और आठ अक्षरों पर यति लगता है ॥४॥

## गौरी नौ रौ ॥८।५॥

**मृतसञ्जीवनी**—यस्य पादे नगणौ (।।।.।।।) रगणौ (ऽ।ऽ.ऽ।ऽ) च भवतस्तद्वृत्तं 'गौरी' नामेति गाथा (१२।१२१६)। पादान्ते यतिः। तत्रोदाहरणम्—

नगणः नगणः रगणः रगणः
। । । । । । ऽ । ऽ ऽ । ऽ
प्रणम–त चर–णारवि–न्दद्वयं

नगणः नगणः रगणः रगणः
। । । । । । ऽ । ऽ ऽ । ऽ
त्रिभुव-ननमि-तस्य गौ-रीपतेः।

नगणः नगणः रगणः रगणः  नगणः नगणः रगणः रगणः

। ।। । ।। ऽ । ऽ ऽ । ऽ  ।।। ।।। ऽ । ऽ ऽ । ऽ

सकृद-पि मन-सैव यः सेवितः  प्रवित-रति य-थेष्टम-ष्टौ गुणान् ॥

इयमेव गौरी दण्डकात्पूर्वमेकैकरेफवृध्द्या नामान्तराणि लभते।

**शिवप्रसादिनी**—जिस वृत्त के प्रतिपाद में क्रमिक रूप से दो नगण (।।।-।।।) तथा दो रगण (ऽ।ऽ-ऽ।ऽ) होते हों, वह गाथा "गौरी" वृत्त होता है। पाद के अन्त में यति हुआ करता है ॥५॥

## ललना भ्तौ न्सावि‌न्द्रियर्षयः ॥८।६॥

**मृतसञ्जीवनी**—यस्य पादे भगणतगणौ (ऽ।।.ऽऽ।) नगणसगणौ (।।।.।।ऽ) च भवतस्तद्वृत्तं 'ललना' नाम गाथा (१२।१९२३)। पञ्चभिः सप्तभिश्च यतिः। तत्रोदाहरणम्—

भगणः तगणः नगणः सगणः

ऽ ।। ऽऽ । ।।। ।।ऽ

या कुच-गुर्वी(५)मृ-गशिशु-नयना(७)

भगणः तगणः नगणः सगणः

ऽ ।। ऽ ऽ । ।।। ।।ऽ

पीननि-तम्बा(५)म-दकरि-गमना(७)।

भगणः तगणः नगणः सगणः

ऽ ।। ऽ ऽ । ।।। ।।ऽ

किन्नर-कण्ठी(५)सु-रुचिर-दशना(७)

भगणः तगणः नगणः सगणः

ऽ ।। ऽ ऽ । ।।। ।।ऽ

सा तव सौख्यं(५)वि-तरतु ललना(७)॥

**शिवप्रसादिनी**—जिस वृत्त के प्रतिपाद में क्रम से भगण (ऽ।।) तगण (ऽऽ।) और नगण (।।।) सगण (।।ऽ) आते हों, वह वृत्त "ललना" नामक गाथा कही जाती है। इन्द्रियर्षयः = पाँच और सात अक्षरों पर यति लगता है ॥६॥

(अतिजगत्याम्)

## कनकप्रभा स्जौ स्जौ ग् ॥८।७॥

**मृतसञ्जीवनी**—यस्य पादे सगणजगणौ (।।ऽ.।ऽ।) पुनः सगणजगणौ (।।ऽ.।ऽ।) गकारश्च (ऽ) तद्वृत्तं 'कनकप्रभा' नाम गाथा (१३।२७९६)। पादान्ते यतिः। तत्रोदाहरणम्—

सगणः जगणः सगणः जगणः गु०
। । ऽ । ऽ । । । ऽ । ऽ । ऽ
कनक–प्रभा पृ–थुनित–म्बशालि–नी
सगणः जगणः सगणः जगणः गु०
। । ऽ । ऽ । । । ऽ । ऽ । ऽ
विपुल–स्तनी ह–रिणशा–वकेक्ष–णा ।
सगणः जगणः सगणः जगणः गु०
। । ऽ । ऽ । । । ऽ । ऽ । ऽ
इयम–ङ्गना न–यनयोः पथि स्थि–ता
सगणः जगणः सगणः जगणः गु०
। । ऽ । ऽ । । । ऽ । ऽ । ऽ
कुरुते न कस्य मदना-तुरं म–नः ? ॥

**शिवप्रसादिनी**—जिस वृत्त के प्रत्येक पाद में क्रम से सगण (।।ऽ) जगण (।ऽ।) पुनः सगण (।।ऽ) जगण (।ऽ।) और एक गुरू वर्ण उपस्थित हो, उस वृत्त को ''कनकप्रभा'' नाम वाली गाथा कहते हैं। यहाँ पर पाद के अन्त में यति लगती है ॥७॥

## कुटिलगतिर्नौ तौ ग् स्वरर्तवः ।।८।८।।

**मृतसञ्जीवनी**—यस्य पादे नगणौ (।।।.।।।) तगणौ (ऽऽ।.ऽऽ।) गकारश्च (ऽ) भवति तद्वृत्तं 'कुटिलगति'र्नाम गाथा (१३।२३६८)। सप्तभिः षड्भिश्च यतिः। तत्रोदाहरणम्—

नगणः नगणः तगणः तगणः गु०
। । । । । । ऽ ऽ । ऽ ऽ । ऽ
अधर-किसल-ये(७)कान्त-दन्तक्ष-ते (६)
नगणः नगणः तगणः तगणः गु०
। । । । । । ऽ ऽ । ऽ ऽ । ऽ
हरिण-शिशुदृ-शां(७)नृत्य-ति भ्रूयु-गम् (६)।
नगणः नगणः तगणः तगणः गु०
। । । । । । ऽ ऽ । ऽ ऽ । ऽ
ध्रुवमि-दमुचि-तं(७)यद्वि-पत्तौ स-ता (६)
नगणः नगणः तगणः तगणः गु०
। । । । । । ऽ ऽ । ऽ ऽ । ऽ
मतिकु-टिलग-तेः(७)स्यान्म-हानुत्स–वः (६) ॥

**शिवप्रसादिनी**—जिस वृत्त के प्रत्येक पाद में दो नगण (।।।-।।।) दो तगण (ऽऽ।-ऽऽ।) और एक गकार (ऽ) हो, वह वृत्त ''कुटिलगति'' नामा गाथा के रूप में जाना जाता है। स्वर + ऋतवः = स्वरर्तवः = सात एवं छह अक्षरों पर यति की उपस्थिति होती है ॥८॥

(शक्वर्याम्)

## वरसुन्दरी भ्जौ स्नौ गौ ॥८।९॥

**मृतसञ्जीवनी**—यस्य पादे भगणजगणसगणनगणा (ऽ।।.।ऽ।.।।ऽ.।।।) गकारौ (ऽ.ऽ) च भवतस्तद्वृत्तं 'वरसुन्दरी' नाम गाथा (१४।३८२३)। पादान्ते यतिः। तत्रोदाहरणम्—

भगणः जगणः सगणः नगणः गु० गु०
ऽ । । । ऽ । । । ऽ । । । ऽ ऽ
स्वादुशि-शिरोज्ज्व-लसुग-न्धिजल-पू-र्णं
भगणः जगणः सगणः नगणः गु० गु०
ऽ । । । ऽ । । । ऽ । । । ऽ ऽ
वीचिच-यचञ्च-लविचि-त्रशत-प-त्रम्।
भगणः जगणः सगणः नगणः गु० गु०
ऽ । । । ऽ । । । ऽ । । । ऽ ऽ
हंसक-लकूजि-त मनो-हरत-टा-न्तं
भगणः जगणः सगणः नगणः गु० गु०
ऽ । । । ऽ । । । ऽ । । । ऽ ऽ
पश्य व-रसुन्द-रि! सरो-वरमु-दा-रम् ॥

**शिवप्रसादिनी**—जिस वृत्त के प्रतिपाद में क्रम से भगण (ऽ।।) जगण (।ऽ।) सगण (।।ऽ) नगण (।।।) और दो दीर्घ अक्षर (ऽऽ) आते हों, वह वृत्त ''वरसुन्दरी'' गाथा के नाम से कही जाती है, जहाँ पादान्त में यति होती है ॥९॥

## कुटिला म्भौ न्यौ गौ वेदरससमुद्राः ॥८।१०॥

**मृतसञ्जीवनी**—यस्य पादे मगणभगणनगणयगणा (ऽऽऽ.ऽ।।.।।।.।ऽऽ) गकारौ (ऽ.ऽ) च भवतस्तद्वृत्तं 'कुटिला' नाम गाथा (१४।१००९) चतुर्भिः षड्भिश्चतुर्भिश्च यतिः। तत्रोदाहरणम्—

मगणः भगणः नगणः यगणः गु० गु०
ऽ ऽ ऽ ऽ । । । । । । ऽ ऽ ऽ ऽ
अध्वस्था-नां(४)जन-यति सु-ख(६)मुच्चैः-कू-ज(४)-

मगणः भगणः नगणः यगणः गु० गु०
ऽ ऽ ऽ ऽ । । । । । । ऽ ऽ ऽ ऽ
न्दात्यूहो-ऽयं(४)पथि निचुलि-नि(६)तोयो-पा-न्ते (४)।

मगणः भगणः नगणः यगणः गु० गु०
ऽ ऽ ऽ ऽ । । । । । । ऽ ऽ ऽ ऽ
कर्णाट-स्त्री(४)रति-कुहरि-त(६)तुल्य-च्छे-दै (४)-

मगणः भगणः नगणः यगणः गु०गु०
ऽ ऽ ऽ ऽ । । । । । । ऽ ऽ ऽ ऽ
र्नादैः क-ण्ठ(४)स्खल-नकुटि-ल(६)मन्दा-व-र्तैः (४) ॥

**शिवप्रसादिनी**—जिस वृत्त के प्रतिपाद में क्रमशः मगण (ऽऽऽ) भगण (ऽ।।) नगण (।।।) यगण (।ऽऽ) और दो गुरू वर्ण (ऽऽ) आते हों, उस वृत्त को "कुटिला" गाथा कहते हैं, जहाँ पर क्रम से चार, छह, एवं चार अक्षरों पर यति उपस्थित होता है ॥१०॥

(अष्टौ)

## शैलशिखा भ्रौ न्नौ भ्गौ भूतरसेन्द्रियाणि ॥८।११॥

**मृतसञ्जीवनी**—यस्य पादे भगणरगणौ (ऽ।।.ऽ।ऽ) नगणभगणौ (।।।.ऽ।।) भगणो (ऽ।।) गकार(ऽ)श्च भवति तद्वृत्तं 'शैलशिखा' नाम गाथा (१६।२८११९) ॥ पञ्चभिः षड्भिः पञ्चभिश्च यतिः । क्वचित् पादान्ते यतिं पठन्ति । तत्रोदाहरणम्—

भगणः रगणः नगणः भगणः भगणः गु०
ऽ । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ
शैलशि-खानि(५)कु-ञ्जशयि-तस्य(६)ह-रेः श्रव-णे(५)

भगणः रगणः नगणः भगणः भगणः गु०
ऽ । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ
जीर्णतृ-णं क(५)रे-ण निद-धाति(६)क-पिश्चप-लः(५)।

भगणः रगणः नगणः भगणः भगणः गु०
ऽ । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ
क्षुद्रव-धाप(५)वा—दपरि—हार(६)वि—नीतम—ते(५)-

भगणः रगणः नगणः भगणः भगणः गु०
ऽ । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ
स्तस्य न ताव(५)तै-व लघु-ता द्वि (६)प-यूथभि-दः(५) ॥

**शिवप्रसादिनी**—जिस वृत्त के प्रत्येक पाद में क्रमिक रूप से मगण (ऽ।।) रगण (ऽ।ऽ) नगण (।।।) भगण (ऽ।।) और अन्त्य गुरू अक्षर हो, वह वृत्त "शैलशिखा" गाथा के नाम से कहा जाता है। यहाँ पर पाँच, छः एवं पाँच अक्षरों पर यति होता है ॥११॥

## वरयुवती भ्रौ य्नौ न्गौ ॥८।१२॥

**मृतसञ्जीवनी**—यस्य पादे भगणरगणौ (ऽ।।.ऽ।ऽ) यगणनगणौ (।ऽऽ.।।।) नगणो (।।।) गकारश्च (श्च) भवति, तद्वृत्तं 'वरयुवती' नाम गाथा (१६।३२३४३)। पादान्ते यतिः। तत्रोदाहरणम्—

भगणः रगणः यगणः नगणः नगणः गु०
ऽ।। ऽ।ऽ ।ऽऽ ।।। ।।। ऽ
कुञ्जर–कुम्भपी–ठ-पीनो–न्नतकु–चयुग–ला

भगणः रगणः यगणः नगणः नगणः गु०
ऽ।। ऽ।ऽ ।ऽऽ ।।। ।।। ऽ
पार्वण–शर्वरी–शगर्वा–पहमु–खकम–ला

भगणः रगणः यगणः नगणः नगणः गु०
ऽ।। ऽ।ऽ ।ऽऽ ।।। ।।। ऽ
पीननि–तम्बबि–म्बसंवा–हनशि–थिलग–ति-

भगणः रगणः यगणः नगणः नगणः गु०
ऽ।। ऽ।ऽ ।ऽऽ ।।। ।।। ऽ
मुञ्ज न–राधिरा–ज! भूया–त्तव व–रयुव–तिः ॥

**शिवप्रसादिनी**—जिस वृत्त के प्रतिपाद में क्रमशः भगण (ऽ।।) रगण (ऽ।ऽ) यगण (।ऽऽ) नगण (।।।) और अन्त में एक गकार (ऽ) हो वह वृत्त "वरयुवति" गाथा के नाम से कहा जाता है। पादान्त में यति का स्थान होता है ॥१२॥

(अत्यष्टौ)

## अतिशायिनी सौ ज्भौ ज्गौ ग् दिक्स्वराः ॥८।१३॥

**मृतसञ्जीवनी**—यस्य पादे सगणौ (।।ऽ.।।ऽ) जगणभगणौ (।ऽ।.ऽ।।) जगणो (।ऽ।) गकारौ (ऽ.ऽ) च भवतस्तदद्वृतं 'अतिशायिनी' नाम गाथा (१७।२३९००)। दशभिः सप्तभिश्च यतिः। तत्रोदाहरणम्—

सगणः सगणः जगणः भगणः जगणः गु०गु०
।।ऽ ।।ऽ ।ऽ। ऽ।। ।ऽ। ऽ ऽ
इति-धौ–तपुर–न्ध्रिमत्स–रा(१०)न्सर-सि मज्ज–ने–न(७)

सगणः सगणः जगणः भगणः जगणः गु० गु०

। । ऽ । । ऽ । ऽ । ऽ । । । ऽ । ऽ ऽ

श्रियमा-प्तवतो-ऽतिशायि-नी(१०)मप-मलाङ्ग-भा-सः(७)।

सगणः सगणः जगणः भगणः जगणः गु०गु०

। । ऽ । । ऽ । ऽ । ऽ । । । ऽ । ऽ ऽ

अवलो-क्य तदै-व याद-वा(१०)नप-रवारि-रा-शेः(७)

सगणः सगणः जगणः भगणः जगणः गु० गु०

। । ऽ । । ऽ । ऽ । ऽ । । । ऽ । ऽ ऽ

शिशिरे-तररो-चिषाप्य-पां(१०)तति-षु मङ्क्तु-मी-षे (७)॥

**शिवप्रसादिनी**—जिस वृत्त के प्रतिपाद में क्रमशः दो सगण (।।ऽ-।।ऽ) जगण-भगण (।ऽ।-ऽ।।) पुनः जगण (।ऽ।) और अन्त में दो गुरू वर्ण हो, उस वृत्त को "अतिशयिनी" गाथा कहते हैं। जहाँ पर दश अक्षरों एवं सात अक्षरों के अनन्तर यति का स्थान होता है ॥१३॥

## अवितथं न्जौ भ्जौ ज्लौ ग् ।।८।१४।।

**मृतसञ्जीवनी**—यस्य पादे नगणजगणौ (।।।.।ऽ।) भगणजगणौ (ऽ।।.।ऽ।) जगण-लकारौ (।ऽ।.।) गकारश्च (ऽ) भवति तद्वृत्तम् 'अवितथम्' नाम गाथा (१७।६११४०) भवति। यतिः पादान्ते। तत्रोदाहरणम्—

नगणः जगणः भगणः जगणः जगणः ल०गु०

। । । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ

श्रुतिप—रिपूत—वक्रम—तिसुन्द—रवाग्वि—भ-वं

नगणः जगणः भगणः जगणः जगणः ल०गु०

। । । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ

तमखि—लजैमि—नीयम—तसाग—रपार—ग-तम्।

नगणः जगणः भगणः जगणः जगणः ल०गु०

। । । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ

अवित—थवृत्त—विप्रज—नपूजि—तपाद—यु-गं

नगणः जगणः भगणः जगणः जगणः ल० गु०

। । । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ

पितर—महं न—मामि ब—हुरूप—मुदार—म-तिम्॥

**शिवप्रसादिनी**—जिस वृत्त के हरेक पाद में क्रमिक रूप से नगण-जगण (।।।-।ऽ।) भगण-जगण (ऽ।।-।ऽ।) पुनः जगण (।ऽ।) तथा एक लघु अक्षर हो, उस वृत्त को

"अवितथ" नामक गाथा कहते हैं ॥१४॥

## वस्विन्द्रियसमुद्राश्चेत्कोकिलकम् ॥८।१५॥

**मृतसञ्जीवनी**—यस्य पादे पूर्वोक्ता गणा भवन्ति, अष्टभिः पञ्चभिश्चतुर्भिश्च यतिर्भवति तद्वृत्तं 'कोकिलकम्' इति गाथा (१७।६११४०)। तत्रोदाहरणम्—

नगणः जगणः भगणः जगणः जगणः ल० गु०
। । । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ
नवस—हकार—पुष्प(८)म-धुनिष्क-ल(५)कण्ठ-त-या(४)
नगणः जगणः भगणः जगणः जगणः ल० गु०
। । । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ
मधुर—तरख—रेण(८)प-रिकूज-ति(५)कोकि-ल-कः(४)।
नगणः जगणः भगणः जगणः जगणः ल० गु०
। । । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ
प्रथम—ककार—विद्ध(८)व-चनैर्ध-न(५)लुब्ध-म-ते(४)-
नगणः जगणः भगणः जगणः जगणः ल० गु०
। । । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ
स्तव ग-मनस्य भङ्ग(८)मि-व संप्र-ति(५)कर्तु-म-नाः(४) ॥

**शिवप्रसादिनी**—जिस वृत्त के प्रत्येक पाद में पूर्वोक्त चौदह (१४) सूत्र के गण हों, एवं आठ अक्षरों, तेरह अक्षरों, तथा सत्रह अक्षरों पर यति उपस्थित होता हो, उसको "कोकिलक" गाथा कहते हैं ॥१५॥

(धृतौ)

## विबुधप्रिया र्सौ जौ भ्रौ वसुदिशः ॥८।१६॥

यस्य पादे रगणसगणौ (ऽ।ऽ.।।ऽ) जगणौ (।ऽ।.।ऽ।) भगणरगणौ (ऽ।।.ऽ।ऽ) च भवतस्तद्वृत्तं 'विबुधप्रिया' नाम गाथा (१८।९३०१९) भवति। अष्टभिर्दशभिश्च यतिः। तत्रोदाहरणम्—

रगणः सगणः जगणः जगणः भगणः रगणः
ऽ । ऽ । । ऽ । ऽ । । ऽ । ऽ । । ऽ । ऽ
कुन्दकु—ड्मलको-मल(८)द्यु-ति दन्त—पङ्क्तिवि-राजिता (१०)
रगणः सगणः जगणः जगणः भगणः रगणः
ऽ । ऽ । । ऽ । ऽ । । ऽ । ऽ । । ऽ । ऽ
हंसग—द्गदवा—दिनी(८)व-निता भ—वेद्विबु—धप्रिया (१०)।

रगण: सगण: जगण: जगण: भगण: रगण:

ऽ।ऽ ।।ऽ ।ऽ । ।ऽ। ऽ।। ऽ।ऽ

पीनतु—ङ्गपयो—धर(८)द्व—यभार—मन्थर—गामिनी(१०)।

रगण: सगण: जगण: जगण: भगण: रगण:

ऽ।ऽ ।।ऽ ।ऽ । ।ऽ। ऽ।। ऽ।ऽ

नेत्रका—न्तिविनि—र्जित(८)श्र-वणाव—तंसित—कैरवा(१०)॥

**शिवप्रसादिनी**—जिस वृत्त के प्रतिपाद में रगण (ऽ।ऽ) सगण (।।ऽ) दो जगण (।ऽ।-।ऽ।) भगण (ऽ।।) एवं रगण (ऽ।ऽ) हों, वह वृत्त "विबुधप्रिया" गाथा के नाम से कहा जाता है। इसमें आठ एवं दश अक्षरों पर यति की उपस्थिति होती है ॥१६॥

## नाराचकं नौ रौ रौ ॥८।१७॥

**मृतसञ्जीवनी**—यस्य पादे नगणौ (।।।.।।।) रगणाश्चत्वारो (ऽ।ऽ.ऽ।ऽ.ऽ।ऽ.ऽ।ऽ) भवन्ति तद्वृत्तं 'नाराचकं' नाम गाथा (१८।७४९४४)। दशभिरष्टभिश्च यतिः। तत्रोदाहरणम्—

नगण: नगण: रगण: रगण: रगण: रगण:

।।। ।।। ऽ।ऽ ऽ ।ऽ ऽ।ऽ ऽ।ऽ

रघुप—तिरपि जातवे-दो(१०)विशु-द्धां प्रगृ-ह्य प्रियां (८)

नगण: नगण: रगण: रगण: रगण: रगण:

।।। ।।। ऽ।ऽ ऽ ।ऽ ऽ।ऽ ऽ।ऽ

प्रियसु—हृदि वि-भीषणे स(१०)क्रम-य्य श्रियं-वैरिणः(८)।

नगण: नगण: रगण: रगण: रगण: रगण:

।।। ।।। ऽ।ऽ ऽ ।ऽ ऽ।ऽ ऽ।ऽ

रविसु—तसहि-तेन ते-ना(१०)नुया-तः ससौ-मित्रिणा(८)

नगण: नगण: रगण: रगण: रगण: रगण:

।।। ।।। ऽ।ऽ ऽ ।ऽ ऽ।ऽ ऽ।ऽ

भुजवि—जितवि-मानर-त्ना(१०)धिरू-ढः प्रत-स्थे पुरीम्(८)॥

(र०वं० १२।१०४)

**शिवप्रसादिनी**—जिस वृत्त के प्रत्येक पाद में क्रमशः दो नगण (।।।-।।।) और चार रगण (ऽ।ऽ-ऽ।ऽ-ऽ।ऽ-ऽ।ऽ) होते हैं, उस वृत्त को "नाराचक" गाथा कहते हैं, जहाँ पर क्रमशः दश अक्षरों एवं आठ अक्षरों पर यति का विधान होता है ॥१७॥

(अतिधृतौ)

## विस्मिता य्मौ न्सौ रौ ग् रसर्तुस्वराः ॥८।१८॥

**मृतसञ्जीवनी**—यस्य पादे यगणमगणौ (।ऽऽ.ऽऽऽ) नगणसगणौ (।।।.।।ऽ) रगणौ (ऽ।ऽ.ऽ।ऽ) गकारश्च (ऽ) भवति तद्वृत्तं 'विस्मिता' नाम गाथा (१९।७५७१४)॥ षड्भिः, षड्भिः, सप्तभिश्च यतिः। तत्रोदाहरणम्—

यगणः मगणः नगणः सगणः रगणः रगणः गु०
। ऽ ऽ ऽ ऽ ऽ ।।। ।।ऽ ऽ।ऽ ऽ।ऽ ऽ
श्रिया जु-ष्टं दिव्यैः(६)सपट–हरवै(६)रन्वितं पुष्पव–र्षैः(७)-

यगणः मगणः नगणः सगणः रगणः रगणः गु०
।ऽऽ ऽऽऽ ।।। ।।ऽ ऽ।ऽ ऽ।ऽ ऽ
र्वपुष्ट–श्चैद्यस्य(६)क्षणमृ-षिगणैः(६)स्तूयमा-नं निरी–य (७)।

यगणः मगणः नगणः सगणः रगणः रगणः गु०
।ऽऽ ऽऽऽ ।।। ।।ऽ ऽ।ऽ ऽ।ऽ ऽ
प्रकाशे–नाकाशे(६)दिनक-रकरा(६)न्विक्षिप-द्विस्मिता-क्षैः(७)-

यगणः मगणः नगणः सगणः रगणः रगणः गु०
।ऽऽ ऽऽऽ ।।। ।।ऽ ऽ। ऽ ऽ।ऽ ऽ
नरेन्द्रै–रौपेन्द्रं(६)वपुर-थ विश(६)द्धाम वी–क्षांबभू–वे (७)॥

(शि०व० २०।७१)

**शिवप्रसादिनी**—जिस वृत्त के प्रत्येक पाद में क्रमशः यगण-मगण (।ऽऽ-ऽऽऽ) नगण-सगण (।।।-।।ऽ) दो रगण (ऽ।ऽ-ऽ।ऽ) और एक गकार (ऽ) हुआ करता है, वह वृत्त "विस्मिता" गाथा के नाम से कहा जाता है, जिसमें प्रतिपाद के छह-छह अक्षरों पर, तथा सात अक्षरों पर यति की उपस्थिति होती है ॥१८॥

(कृतौ)

## शशिवदना न्जौ भ्जौ ज् ज्रौ रुद्रदिशः ॥८।१९॥

**मृतसञ्जीवनी**—यस्य पादे नगणजगणौ (।।।.।ऽ।) भगणो (ऽ।।) जगणास्त्रयो (।ऽ।.।ऽ।.।ऽ।) रगणश्च (ऽ।ऽ) भवति, तद्वृत्तं 'शशिवदना' नाम गाथा (२१।५४११६००) एकादशभिर्दशभिश्च यतिः। 'पञ्चकावली'ति केचित्। तत्रोदाहरणम्—

नगणः जगणः भगणः जगणः जगणः जगणः रगणः
।।। ।ऽ। ऽ।। ।ऽ। ।ऽ। ।ऽ। ऽ।ऽ
तुरग–शताकु–लस्य प–रितः(११)प–रमेक–तुरङ्ग–जन्मनः(१०)

नगणः जगणः भगणः जगणः जगणः जगणः रगणः
।।। ।ऽ। ऽ।। ।ऽ। ।ऽ। ।ऽ। ऽ।ऽ
प्रमथि–तभूभृ–तः प्रति-पथं(११)म-थितस्य भृशं म–हीभृता(१०)।

नगणः जगणः भगणः जगणः जगणः जगणः रगणः

। । । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ । ऽ । ऽ

परिच–लतो ब-लानुज-बल(११)स्य पुरः स-ततं धु–तश्रिय(१०)-

नगणः जगणः भगणः जगणः जगणः जगणः रगणः

। । । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ । ऽ । ऽ

श्चिरवि–गतश्रि–यो जल-निधे(११)श्च तदाभ–वदन्त–रं महत् (१०) ॥

(शि०व० ३।८२)

एवमादीनि वृत्तानि कोटिशः प्रस्तारेषु महाकविप्रयोगेषु च दृश्यन्ते। विशेषसंज्ञाभावात्तानि शास्त्रकारेण नामनिर्देशं कृत्वा नोक्तानि तानि गाथाशब्देन कथ्यन्ते।

इदानीं प्रस्तारादीन् प्रत्ययानुपक्रमते[१]। तत्र गायत्र्यादिप्रस्तारसिध्द्यर्थमेकाक्षरप्रस्तारपूर्वकं द्व्यक्षरप्रस्तारं सूत्रद्वयेनाह—

**शिवप्रसादिनी**—जिस वृत्त के प्रत्येक पाद में क्रमिक रूप से नगण (।।।) जगण (।ऽ।) भगण (ऽ।।) तीन जगण (।ऽ।-।ऽ।-।ऽ।) और एक रगण (ऽ।ऽ) होते हैं, और पाद में ग्यारह अक्षरों और दश अक्षरों पर यति लगती हो, तो उस वृत्त विशेष को ''शशिवदना'' गाथा कहते हैं ॥

(इस प्रकार के करोड़ो वृत्त प्रस्तारों में, तथा महाकवियों के प्रयोगों में देखे जाते हैं। उन वृत्तविशेषों के शास्त्रप्रकार निर्दिष्ट विशेष सञ्ज्ञाओं के अभाव में, अर्थात् उन-उन विविध वृत्त विशेषों के शास्त्रकार द्वारा नाम विधान नहीं किये जा सके हैं, अतः उन अकथित वृत्तों को यहाँ पर सामान्य रूप से गाथा के नाम से व्यवहार किया जाता है ॥१९॥

अब आगे के ग्रन्थ से प्रस्तार आदि वृत्त भेदों को कहने के लिए सूत्र ग्रन्थ का आरम्भ होने जा रहा है। उन प्रस्ताराऽऽदि भेदों के अन्तर्गत सर्वप्रथम गायत्री, अनुष्टुप् आदि छन्दों के प्रस्तार सिद्धि के लिए एकाक्षर प्रस्तार पूर्वक द्वाक्षर (द्वितीय अक्षरों की वृद्धि स्वरूप प्रस्तार) को अग्रिम दो सूत्रों के माध्यम से व्यक्त किया जा रहा है—

(भेद रचना को प्रस्तार कहा जाता है। (१) प्रस्तार (२) नष्ट (३) उद्दिष्ट (४) एक द्वाऽऽदिलगक्रिया (५) संख्यान (६) अध्वयोग, ये छः प्रकार के प्रस्ताराऽऽदिकों के प्रत्यय (भेद) ''वृत्तरत्नाकर'' आदि ग्रन्थों में केदार भट्ट आदि ग्रन्थकारों के द्वारा व्यक्त किये गये हैं।

---

(१) छन्दसां भेदादिप्रत्यायकत्वाप्रत्ययाः। ते च दर्शिताः **केदारेण**—'प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलगक्रिया। सङ्ख्यानमध्वयोगश्च षडेते प्रत्ययाः स्मृताः ॥' इति।

प्रस्तार का परिचय देने के लिए वृत्तरत्नाकर ग्रन्थ में इस प्रकार कहा गया है—

पादे सर्व्व गुरावाद्याल्लघुं न्यस्य गुरोरध: ।
यथोपरि तथा शेषं भूय: भूय: कुर्यादमुं विधिम् ।।

"सर्वगुरौ पादे आद्यात् गुरोरध: लघुं न्यस्य उपरि यथा, तथा शेषं कुर्यात् । भूयोभूय: अमुंविधिं कुर्यात्" । अर्थात् प्रस्तार वृत्तजाति के पाद में स्थित वर्ण संख्या से सम्बन्धित सर्वगुरू वाले पाद लिखे जाने पर वहाँ प्रथम गुरू नीचे लघु स्थापित करना चाहिए । प्रथमत्व भी यहाँ प्रथमगुरू के नीचे लघु स्थापित करना चाहिए । प्रथमत्व भी यहाँ पर गुरू की अपेक्षा ही ली जानी चाहिए, वर्ण की अपेक्षा से नहीं । पुन: दाहिनी ओर की रेखा का पंक्ति ऊपर की रेखा के समान भरना चाहिए, अर्थात् शेष स्थानों में ऊपर के अनुसार गुरू-लघु आदि भर दें । अर्थात् जहाँ ऊपर में गुरू है वहाँ पर नीचे में भी गुरू, और जहाँ ऊपर में लघु है वहाँ पर उसके नीचे में भी लघु लिखना चाहिए । पुन: इस पूर्वोक्त लेखन स्वरूप विधि को सम्पादित करना चाहिए तृतीयाऽऽदि पङ्क्ति में आदि गुरू के अनन्तर लघु होगा, और उसके बाद ऊपर के अनुसार गुरू होगा । पुन: प्रस्तार स्वरूप के पूर्ण बोध के लिए उपर्युक्त कारिका के अनन्तर एक और कारिका को इस प्रकार कही गयी है—

ऊने दद्यात् गुरूमेव यावत् सर्वलघुर्भवेत् ।
प्रस्तारोऽयं समाख्यात श्छन्दोविचितिवेदिभि: ।।

(वृर० अ० ६ श्लोक० ३)

उपर्युक्त विधि को सम्पादित करते हुए रिक्त स्थान में, अर्थात् बाँयी ओर के शेषस्थान में ही लिखें, यह प्रक्रिया तब तक चलती रहेगी, जब तक कि सभी लघु की प्राप्ति न हो जाय । छन्द शास्त्रियों ने इसी विधि को "प्रस्तार" कहा है ।।

उपर्युक्त रूप से प्रस्तार के विषय में जो विचार किया गया है उसका सार इस प्रकार समझना चाहिए—सर्वगुरूअक्षर वाले पाद के भेद की आकांक्षा में द्वितीय पंक्ति के प्रथमस्थान में ही उपस्थित होने से गुरू मात्रा के निराशपूर्वक लघुमात्रा के प्रयोग द्वारा सर्वगुरूमात्रा वाले पाद अपने पूर्व स्वरूप से भिन्न हो जाता है । इसलिए द्वितीय पंक्ति के आदि में उसकी कल्पना की जाती है—(।ऽऽ) उसके बाद तृतीय पंक्ति के द्वितीय स्थान में गुरू मात्रा को निवृत्त करके वहाँ पर लघुमात्रा का प्रयोग होना चाहिए यह सर्वगुरूपाद का द्वितीय भेद कहा जाता है, जिसका स्वरूप पुन: (ऽ।ऽ) । इसी तृतीय पंक्ति के शेष भूत-चतुर्थ पंक्ति में विद्यमान तृतीय भेद है । इस कारण उसकी कल्पना इस प्रकरण में की गयी है—(।।ऽ) । इसके अनन्तर पाँचवीं पंक्ति में तृतीय गुरू के स्थान में पूर्व के समान ही लघुमात्रिक का प्रयोग होने से चतुर्थ भेद की कल्पना सिद्ध होती

है जिसका स्वरूप इस प्रकार हुआ करता है (ऽऽ।) और उसी का दो गुरू आदि वाले तीन अन्य भेद लघु आदिवाला गुरू (।-ऽ-।), गुरू आदि वाला दो लघु (ऽ-।-।), दो लघु आदि वाला (।-।-।) इति इस प्रकार से सर्व गुरू वाले प्रथम (ऽ-ऽ-ऽ) के सहित मध्यम के आठ भेदों के क्रमिकत्व में बीज कहा गया है।)

## द्विकौ ग्लौ ।।८।२०।।

**मृतसञ्जीवनी**—उपरिष्टाद् गकारं लिखित्वाधस्ताल्लकारं विन्यसेदित्येकाक्षरप्रस्तारः। तस्य द्विकत्वाद् द्वौ ग्लौ द्विकौ स्थापयेत्। द्वे आवृत्ती प्रमाणमनयोरिति द्विकौ। 'संख्याया अतिशदन्तायाःकन्' (पाणि०५।१।२२) इति कन्प्रत्ययः। ततश्च गकारं ततोऽधस्ताल्लकारं लिखित्वा विस्पष्टार्थमधस्तिर्यग्रेखां दद्यात्। अधस्ताच्च पूर्ववद् गकारलकारौ स्थापयेत्॥

**शिवप्रसादिनी**—सूत्रकार ''द्विकौ ग्लौ'' इत्यादि सूत्रों के द्वारा प्रस्तार का निरूपण करने के क्रम में प्रथम एकाक्षर प्रस्तार प्रणाली को प्रथम सूत्र से दिखाने जा रहे हैं—यथा–एकाऽक्षर प्रस्तार के ऊपर के भाग में गकार लिखकर उसके बाद नीचे वाले भाग में लकार को लिखना चाहिए। द्वाऽक्षर प्रस्तार में पहले गकार और उसके नीचे लकार लिख कर एक रेखा को स्थापित किया जाना चाहिए। पुनः इस रेखा के नीचे भाग में पहले गकार लिख करके उसके नीचे लकार लिखना चाहिए।

इसका सार यह है कि एकाऽक्षर प्रस्तार में ऊपर के भाग में गकार को लिखकर पुनः उसके नीचे लकार को स्थापित किया जाना चाहिए। द्विकौ = दो आवृत्ति प्रमाण है जिन दो (ग् ल् = ह्रस्वदीर्घवर्णों का, अथवा) गकार लकार का, वह ''द्विकौ'' शब्द से कहा जाता है। अर्थात् दो गकार और दो लकार को स्थापित किया जाना चाहिए। ''द्वि'' शब्द से ''संख्याया अतिशदन्तायाः कन्'' (पा०सू० ५।१।२२) इस पाणिनि सूत्र से ''कन्'' प्रत्यय होने पर ''द्विक'' प्रकृति बनती है, और प्रथमा द्विवचन में ''द्विकौ'' शब्द निष्पन्न होता है। इस प्रकार द्विकौ = दो बार उच्चरित, ग्लौ = दो गकार (ऽऽ) और दो लकार (।।) को स्थापित किया जाना चाहिए।

''द्विकौ ग्लौ'' इत्यादि पिङ्गलप्रोक्त चार सूत्रों के द्वारा सूत्रकार प्रस्तारसञ्ज्ञकवृत्त के भेदों को प्रकाशित किये हैं। इन सूत्रों के अर्थों को उदाहरण के माध्यम से स्पष्ट किया जा रहा है—

(एकाक्षरप्रस्तारः—)

१ । ग

२ । ल ।

इस प्रकार एकाक्षरप्रस्तार दो भाग के माध्यम से ऊपर-ऊपर में स्थापित करके

उसके मध्य में रेखा लिखनी (देनी) चाहिए। इसके बाद प्रथम भाग के द्वितीय अक्षर स्थान में ''ग'' कार अक्षर को, तथा द्वितीय भाग के द्वितीय अक्षर स्थान में ''ल'' कार को स्थापित करना चाहिए। इस विषय का आगे के सूत्रों से सम्बन्ध है इसलिए आगे के सूत्राऽर्थों के साथ इस सूत्राऽर्थ का सम्बन्ध आकांक्षित है ।।२०।।

अत्र किं कर्तव्यमित्याह—

## मिश्रौ च ।।८।२१।।

**मृतसञ्जीवनी**—अनेन द्वितीयाक्षरप्रस्तारं दर्शयति। चकारः पूर्वप्रस्तारसमुच्चयार्थः। द्विकौ ग्लौ स्थापयित्वा अनन्तरं द्वितीयस्थानेषु मिश्रौ ग्लौ विन्यसेत्। गकारो गकारेण संश्लिष्टो मिश्र उच्यते, लकारश्च लकारेण। मिश्राविति गकारलकाराभ्यां प्रत्येकमभिसम्बध्यते। 'द्वन्द्वात्परो यः श्रूयत' इति न्यायात्। ततश्च प्रथमायामावृत्तौ गकारौ मिश्रौ स्थापयेत्। द्वितीयायां लकाराविति। ततो मध्ये लेखामपनयेत्। एवं चतुःप्रकारो द्यक्षरप्रस्तारो भवति। तद्यथा—गौ ल्गौ ग्लौ लाविति ।।

**शिवप्रसादिनी**—पूर्व सूत्र के प्रतिपादित नियमाऽनुसार ''ग'' एवं ''ल'' दो भाग में रखने से, उसके प्रथम भाग के द्वितीय अक्षर के स्थान में जहाँ ''ग्'' तथा द्वितीय भाग के द्वितीय अक्षर स्थान में ''ल'' अक्षर रखा गया है। वहाँ पर प्रथम भाग के द्वितीय अक्षर के स्थान में उपस्थित ''ग'' वर्ण के साथ पुनः प्रथम भागस्थ ''ग'' को मिला देने पर ''ग-ग'' एवं द्वितीय भाग के द्वितीय अक्षर ''ल'' के साथ ''ग'' को मिलाने पर ''ल-ग'' तथा द्वितीय भागस्थ 'ल' को ''ल'' के साथ मिलाने की स्थिति में ''ल-ल'' इस प्रकार द्वितीय भाग के द्वितीय स्थान में क्रमशः ''ल-ग'' और ''ल-ल'' दो स्वरूप सिद्ध होगा, अतएव द्वाऽक्षर प्रस्तार चार प्रकार का हुआ करता है। यथा—ग-ग, ल-ग, ग-ल, एवं ''ल-ल''। इसका स्पष्टीकरण इस प्रकार समझना चाहिए—

{ प्रथम भाग (ग/ल) + ग
{ द्वितीय भाग (ग/ल) + ल }

{ १) ग-ग
२) ल-ग
३) ग-ल
४) ल-ल }

इति ।८।२१।।

इदानीं द्यक्षरप्रस्तारपूर्वकमेकैकाक्षरवृध्या त्र्यक्षरादिप्रस्तारं दर्शयितुमाह—

## पृथग्ला मिश्राः ।।८।२२।।

**मृतसञ्जीवनी**—द्यक्षरप्रस्तारस्य पूर्वन्यायेन द्विकं लेखाविभक्तं स्थापयित्वा तृतीयाक्षरस्थानेषु प्रथमावृत्तौ गकारा मिश्रा दातव्याः। द्वितीयावृत्तौ लकारा मिश्रास्ततो

मध्यात् लेखामपनयेत् । एवं त्रिक: प्रस्तार: सिध्यति । पृथगिति विजातीयासंसर्गमाह । तेन प्रथमायामावृत्तौ न लकारप्रवेश: । द्वितीयायां न गकारस्य । एवं त्रिकप्रस्तारं द्वि: स्थापयित्वा पृथग् ग्लौमिश्रा दातव्या इति चतुरक्षर: प्रस्तार: । एवं तत्पूर्वक: पञ्चाक्षर: प्रस्तार: । तथैव तत्पूर्वक: षडक्षरो गायत्रीसमवृत्तप्रस्तार: । एवमुष्णिगादीनामप्येकैकाक्षर-वृद्ध्या अयमेव न्यास: । तत्रेदं सूत्रं त्र्यक्षरात् प्रभृति पुन: पुनरावर्तनीयं यावदभिमत: प्रस्तार:[२] ॥

**शिवप्रसादिनी**—पूर्व के समान द्वयक्षर प्रस्तार को दो भागों में स्थापित करके प्रथम भाग के तृतीय अक्षर के स्थान में "ग" कार को रखकर उस गकार के साथ गकार को मिलाना चाहिए। एवं द्वितीय भाग के तृतीय स्थान में लकार को स्थापित करके, उस लकार के साथ द्वितीय भाग को मिलावें। इस प्रकार अष्टविध प्रस्तार सिद्ध होता है। प्रस्तार के विषय में यहाँ पर यह नियम है कि प्रथम भाग के शेष में स्थित गकार को द्वितीय भाग के मध्य में प्रवेश नहीं कराना चाहिए। एवं द्वितीय भाग के शेष में विद्यमान लकार को भी प्रथम भाग के मध्य में नहीं दिया जाना चाहिए।

इस प्रकार तीन अक्षरों के प्रस्तार को दो भागों में विभक्त करके, प्रथम भाग के चतुर्थ अक्षर के स्थान में गकार, एवं द्वितीय भाग के चतुर्थ अक्षर के स्थान में लकार को स्थापित करके, तथा उसको मिश्रित करने पर सोलह प्रकार का चतुरक्षर प्रस्तार होगा। इसी प्रकार चतुरक्षर प्रस्तार को दो भाग में विभाजन किये जाने पर बत्तीस (३२) प्रकार का पञ्चाऽक्षर प्रस्तार होगा। पञ्चाऽक्षर प्रस्तार का दो भागों में विभाग कर देने पर चौसठ (६४) प्रकार का षडक्षर प्रस्तार होगा। इस प्रकार एकाऽक्षर से लेकर षडक्षरपर्यन्त जो प्रस्तार संख्या दिखलायी गयी है, उसे समवृत्तसंख्या से सम्बन्धित "समवृत्त प्रस्तार" समझना चाहिए। इसी प्रकार सप्ताऽक्षराऽऽदिकों के विषय में भी प्रस्तार से सम्बन्धित नियम को समझना चाहिए ॥२२॥

## वसवस्त्रिका: ।।८।२३।।

**मृतसञ्जीवनी**—एवं पूर्वोक्ते त्र्यक्षरप्रस्तारे अष्टौ त्रिका जायन्ते । ते च मकारादय: शास्त्रादौ कथिता एव । प्रदर्शनार्थ चैतत्; तेन षोडश चतुष्का द्वात्रिंशत्पञ्चका भवन्ति । एवं चतु:षष्टिर्गायत्रीसमवृत्तानि सर्वगुरुलघ्वाद्यन्तानि भवन्ति । द्विगुणोत्तरमुष्णिगादीनाम्;

---

(१) प्रकारान्तरमुक्तं **रत्नाकरे**—

'पादे सर्वगुरावाद्याल्लघु न्यस्य गुरोरध: ।
यथोपरि तथा शेषं भूय: कुर्यादमुं विधिम् ॥
ऊने दद्याद्गुरूनेव यावत्सर्वलघुर्भवेत् ।
प्रस्तारोऽयं समाख्यातश्छन्दोविचितिवेदिभि: ॥'

एकैकाक्षराधिक्यात्। विस्पष्टार्थमिदं सूत्रम्; प्रस्तारादेव सङ्ख्यापरिच्छितेः[१] ॥

**शिवप्रसादिनी**—इस प्रकार तीन अक्षरों के प्रस्तार में, तीन-तीन के समूहों का आठ समूह हुआ करता है, और वे त्रिक (तीन-तीन) के समूह से घटित अष्टत्रिक पुनः

(१) प्रस्तारस्य क्रमे बीजं नोचुः प्राञ्चोऽत्र यद्यपि।
स्पष्टतायास्तथाप्यस्मि वदामि सुधियां मुदे ॥

सर्वगुरुपादस्य भेदाकाङ्क्षायां द्वितीयपङ्क्तौ प्रथमस्थान एवोपस्थिततत्वात् गुरुनिरासपूर्वं लघुप्रयोगेण सर्वगुरुपादो भिद्यत इति तस्यादौ कल्पनम्,–(।. ऽ. ऽ)। ततस्तृतीयपङ्क्तौ द्वितीय स्थाने गुरुनिरासपूर्वं लघुप्रयोग इति द्वितीयो भेदः,–(ऽ.।.ऽ)। अस्यैव शेषभूतश्चतुर्थपङ्क्तिस्थस्तृतीयो भेद इति तस्य कल्पनम्,–(।.।.ऽ) ततः पञ्चमपङ्क्तौ तृतीयस्थाने तथैव लघुप्रयोगाच्चतुर्थस्य,–(ऽ.ऽ.।)। अस्यैव च द्विगुर्वदिस्त्रयोऽन्ये भेदाः—लघुगुर्वादिः–(।.ऽ.।), गुरुलघ्वादिः–(ऽ.।.।) लघुद्वयादिश्च (।.।.।) इति। इत्थं सर्वगुरूणा प्रथमेन (ऽ.ऽ.ऽ) सहितेषु मध्याया अष्टभेदेषु क्रमे बीजमुक्तम्। एवं प्रतिष्ठादिप्रस्तारक्रमेऽप्युन्नेयम् ॥

एकाक्षरादिषड्विंशत्यन्तजातिप्रस्तारपिण्डसङ्ख्योक्ता **वृत्तमौक्तिके**—

'षड्विंशतिः, सप्तशतानि, चैव तथा सहस्राण्यपि सप्तपङ्क्तिः।
लक्षाणि दृग्वेदसुसम्मितानि, कोट्यस्तथा रामनिशाकरैः स्युः ॥'

(१३,४२,१७,७,२६) इति **वृत्तरत्नाकरसेतौ**।

एवमर्धसमवृतेऽर्धप्रस्तारः, विषमवृत्ते च श्लोकप्रस्तार इति ज्ञेयम्। मात्रावृत्तप्रस्तारोऽपि ग्रन्थान्तरोक्तो दर्शितः **सेतुकृता**—

'तत्र प्रथमपङ्क्तौ स्याद्गुरुपादस्तु पूर्ववत्।
द्वितीयपङ्क्तौ प्रथमादधो लेख्यो लघुर्गुरोः ॥
यथोपरि तथा शेषमूनस्थाने लघु न्यसेत्।
तृतीयादिषु पङ्क्तिष्वप्येवमेव गुरोरधः ॥
लघु न्यस्यावशिष्टं तु पूर्ववत् परिकीर्तितम्।
न्यूने मात्रात्रयं देयं तस्मिन्नादौ गुरूर्द्वयोः ॥
कलयोः स्यात्ततः पूर्वं लघुर्देयो भवेत्ततः।
चतुर्थपङ्क्तावप्येवं पञ्चम्यां तु गुरोरघः ॥
लघुद्वयं लिखेत् पूर्वं शिष्टं तूपरिवद्भवेत्।
एवं सर्वत्र विज्ञेयः कलाप्रस्तार उत्तमः ॥
तेन द्विगुरुपादस्य पञ्च भेदा भवन्त्यमी।
सर्वान्तमध्यादिगुरुचतुर्लघुगणाः स्मृताः ॥' इति।

**वृत्तप्रत्ययकौमुद्या**मत्र कश्चिद्विशेष उक्तः—

'एकमात्रे गुरुनैव त्रिपञ्चाऽऽदौ लशेषतः।
आदावेव लघुः स्थाप्यस्ततः प्रस्तारजाः क्रियाः ॥' इति।

मकाराऽऽदि आठ, जिन्हें प्रकृतशास्त्र के आरम्भ में ही संज्ञा विधान के माध्यम से व्यक्त किया जा चुका है। इस प्रकार चतुरक्षर-प्रस्तार में सर्व गुरू आदि वाले तथा सर्व लघु अन्त सोलह चतुष्कों की (चार-चार के सोलह समूहों की), एवं पञ्चाऽक्षरप्रस्तार में पाँच-पाँच के बत्तीस समूहों की, एवं षडक्षर के प्रस्तार में छ:-छ: के चौंसठ समूहों की समवृत्त संख्या होगी। एक-एक अक्षर की वृद्धि के साथ प्रस्तार संख्या दो गुणे के क्रम से वर्द्धित होती है। इस प्रकार सप्ताऽक्षरछन्द के प्रस्ताराऽनुसार (२२८) दो सौ अठाईस समवृत्त संञ्ज्ञाएँ होंगी। पूर्वोक्त प्रस्तार के नियम के अनुसार ही प्रस्तार संख्या का ज्ञान हुआ करता है। अत: प्रकृत सूत्र स्पष्ट ज्ञान के लिए प्रकट हुआ समझना चाहिए ॥२३॥

नष्टवृत्तपरिज्ञानार्थमाह—

## लर्द्धे ॥८।२४॥

**मृतसञ्जीवनी**—यदैवं विजिज्ञासेत-गायत्र्यां समवृत्तं षष्ठं कीदृशमिति, तदा तमेव षट्सङ्ख्याविशेषमर्धयेत। तस्मिन्नर्धीकृते लघुरेको लक्ष्यते, स भूमौ विन्यास्य: ॥

गायत्री छन्द के समवृत्ताऽन्तर्गत षष्ठ (छठा) भेद किस प्रकार का है? इस प्रकार की जिज्ञासा होने पर उसके समाधानाऽर्थ प्रकृत सूत्र का अवतरण हुआ है। जिसका आशय यह है कि सर्वप्रथम इस षष्ठ भेद संख्या ६ को २ से भाग दिया जाना चाहिए (६ ÷ २ = ३) भागफल दो और दो से अर्द्धकृत (एक) होने के कारण एक के स्थान में लकार को स्थापन करना चाहिए ॥२३॥

पुन: द्वितीय भाग के "३ तीन" में संख्याकृत इस विषम संख्या में संख्याकृत दो भाग का हो पाना सम्भव नहीं, अत: यहाँ पर क्या किया जाना उचित है? इसके समाधान के लिए आगे का सूत्र उपस्थित होता है।

इदानीमवशिष्टा त्रिसंख्याविषमत्वादर्धयितुं न शक्यते। तत्र किं प्रतिपत्तव्यमित्याह—

## सैके ग् ॥८।२५॥

**मृतसञ्जीवनी**—अर्ध इत्यनुवर्तते। विषमसङ्ख्यायामेकमधिकं निक्षिप्य ततोऽर्धयेत। तत्रैको गकारो लभ्यते। तं पूर्वलब्धाल्लकारात् परं स्थापयेत्। ततो द्विसंख्यावशिष्यते। पुनस्तामर्धयेत, ततश्चैकलकारं दद्यात्। ततश्चैकसंख्यावशिष्यते। तत्र तावत् सैके गिति लक्षण मावर्तनीयं यावद्वृत्ताक्षराणि षट् पूर्यन्ते। एवं सङ्ख्यान्तरेऽपि योज्यम्[1] ॥

---

(१) मात्रानष्टमुक्तं **रत्नाकरसेतौ**—

संस्थाप्येह पृथङ्मात्रास्तत्र चाङ्कान् समालिखेत्।
एकद्व्यङ्कतृतीयाङ्कानाद्यमात्रात्रये क्रमात् ॥
तत: पूर्वद्वयोन्मिश्रानन्त्ये पृष्टाङ्कलोपनम्।

**शिवप्रसादिनी**—यहाँ पर पूर्वसूत्र से "अर्द्धे" शब्द की अनुवृत्ति आती है। इस (एकाऽऽत्मक) विषम संख्या में एक संख्या का प्रक्षेप (बाहर) से लाभ करके, अनन्तर उसको दो भागों में विभक्त करना चाहिए। पुनः पूर्व सूत्र के द्वारा बोध विषय रूप में उपलब्ध लकार के आगे लकार को स्थापित करें। अनन्त शेष रूप में उपस्थित दो संख्या को दो भाग करके, एक लकार स्थापन करें, वा लिखें। पुनः शेष बचे एक (१) संख्या को दो गुणा करके और उस स्वरूप का ही दो विभाग के माध्यम से "ग" का स्थापन करें। इस प्रकार जब तक षडक्षर पूरा नहीं हो जाता है, तब तक अवशिष्ट विषम संख्या के साथ एक (१) का योग देकर, तथा उसको दो भागों में विभक्त करके गकार को स्थापित करते रहना चाहिए। जिसके परिणामस्वरूप षडक्षरछन्द का षष्ठ भेद—"ल ग ल ग ग ग" इस प्रकार होगा। इसी प्रकार का नियम अन्य स्थलों में भी जानना चाहिए। इस सूत्र का रहस्य इस प्रकार जानना चाहिए—इस सूत्र में पूर्व सूत्र से "अर्द्धे" की अनुवृत्ति आएगी, जिसके अनुसार त्रयाऽऽत्मक विषम संख्या में एक अधिक संख्या का प्रक्षेप करके पुनः उसका विभाजन किया जाना चाहिए (पूर्वसूत्र में कहा गया था कि षष्ठ संख्या का विभाग करें, उसके आधे कर देने पर क्रमशः दो संख्या से एक गुरू लक्षित होता है, और अवशिष्ट एक संख्या से एक लघु लक्षित हो रहा है, जिसका गुरू सञ्ज्ञक "ग" के नीचे लेखन किया जाना चाहिए।) जिससे वहाँ पर एक "ग" कार का लाभ होता है उस गकार को पूर्व लभ्य (चर्चित) लकार के आगे लिखना चाहिए। अनन्तर दो संख्या जो अभी बची रहती है उसका भी दो भाग किया जाना चाहिए। उस विभक्त एक संख्या लक्षित लकार को पुनः पूर्व स्थापित गकार के अनन्तर लिखना चाहिए। अब शेष रूप में एक संख्या बची है जिसमें "सैके ग्" (प्रक्षेप से लभ्य एक के सहित "ग" हो) इस लक्षणाऽऽत्मक सूत्र की आवृत्ति की जानी चाहिए, उसकी आवृत्ति तब तक होगी, जब तक वे छः अक्षरों में पूर्ण नहीं हो जाते हैं। इसी प्रकार संख्याऽन्तर में भी इस सूत्राऽर्थ की योजना करनी चाहिए ॥२५॥

उद्दिष्टवृत्तस्य सङ्ख्यापरिज्ञानार्थमाह—

**प्रतिलोमगणं द्विर्लाद्यम् ॥८।२६॥**

**मृतसञ्जीवनी**—यस्य वृत्तस्य सङ्ख्यां जिज्ञासेत तद्भूमौ प्रस्तारयेत। ततस्यस्यान्ते यो लकारः सजातीयापेक्षया, तमादौ कृत्वा प्रातिलोम्येने द्विरावर्तयत। तत्र निराकाराया आवृत्तेरसम्भवात् प्रथमातिक्रमे कारणाभावादेकसङ्ख्या लभ्यते। ततश्चैकसङ्ख्याङ्क-

---

पूर्वपूर्वतरस्यापि लोपः सम्भवतो भवेत्॥
यस्य यस्य भवेल्लोपस्तदधो गुरुता भवेत्।
परया मात्रयोत्यन्तगमात्रानष्टं वदेत्सुधीः ॥' इति।

मन्त्यलकारस्याधस्तात् स्थापयित्वा द्विगुणयेत् । ततस्तस्मादपनीय तत्पूर्वस्य वर्णस्याधस्तान्निधाय पुनर्द्विगुणयेत् । पुनस्तदपि पूर्वस्य । एवं यावन्ति वृत्ताक्षराणि प्रातिलोम्येन समाप्यन्ते । तत्र याः सङ्ख्या निष्पद्यन्ते, तावतिथं तद्वृत्तमिति ॥

**शिवप्रसादिनी**—जिस वृत्त की संख्या जाननी हो उस वृत्त के गण को स्थापित करना चाहिए । यथा— ***शङ्का*** षडक्षरगायत्री छन्द का "तनुमध्या" नाम का वृत्त कितनी संख्या के अन्तर्गत आएगा? ***समाधान***—उपर्युक्त प्रश्न के समाधानाऽर्थ सर्वप्रथम "तनुमध्या त्यौं" इस सूत्र और इस सूत्र के अर्थ का अनुसन्धान करना चाहिए । तदनुसार तनुमध्या वृत्त में तगण और यगण इन दोनों गणों की उपलब्धि होती है । इन दोनों गणों से युक्त तनुमध्या वृत्त को सरलता से समझने के लिए प्रदर्शित किया जा रहा है—

| | त | य |
|---|---|---|
| ग-ग-ल ल-ग-ग-ग | ऽ— ऽ —। | ।— ऽ —ऽ |
| ७+४+२+१ | ग—ग—ल | ल—ग—ग |

अब तृतीय स्थान में वर्त्तमान लकार को छोड़कर चतुर्थस्थान में रहने वाला जो अन्तिम लकार उस अन्त्य लकार के नीचे एक (१) संख्या लिखें, पुनः इस एक संख्या को दोगुनी करके प्रतिलोम के क्रमाऽनुसार उपर्युक्त चतुर्थ लकार के पूर्व तृतीय लकार के नीचे लिखना चाहिए । पुनः दो संख्या को दो गुनी चार (४) करके उसके पूर्व गकार के नीचे स्थापित करें । अनन्तर पुनः चार संख्या को दो गुनी (८) आठ संख्या करके, और उन संख्या में से "ततोऽप्येकं जह्यात्" इस अग्रिम सूत्राऽनुसार एक (१) संख्या को घटाकर शेष बचे सात (७) संख्या को प्रथम गकार के नीचे दिया जाना चाहिए । उपर्युक्त संख्या का पुनः १+२+४+७ इस संख्या के साथ योग (जोड़) कर देने पर कुल चौदह (१४) संख्या होगी, उस चौदह की संख्या से भी एक संख्या का अपहार कर लिए जाने पर तेरह (१३) शेष रहेगा । इस प्रकार से "तनुमध्यावृत्त" "ग-ग-ल-ल-ग-ग" यह तेरह संख्या का भेद वाला होगा । इसी प्रकार से अन्यवृत्त स्थलों में भी समझना होगा ॥२६॥

तत्र विशेषमाह—

## ततोऽप्येकं जह्यात् ॥८।२७॥

**मृतसञ्जीवनी**—पूर्वोक्ते कर्मणि क्रियमाणे यदि सा सङ्ख्या गकारस्थानमापद्यते, तदा तां द्विगुणयित्वा ततः सङ्ख्यासमुदायादेकं त्यजेत् । ततः पूर्वोक्तं कर्म कुर्यात् । ततः परिपूर्णत्वात्तद्वृत्तसङ्ख्या सिध्यति[1] ॥

---

(१) मात्रोद्दिष्टमुक्तं **जानकीशरणेन**—

'विलिख्य रूपे क्रमकाङ्कमत्र गुरूर्ध्वमङ्कं चरमे विलुम्पेत् ।
शिष्टाङ्कमेवं प्रवदेद्विधिज्ञो मात्रीयमुद्दिष्टमिदं जगाद ॥' इति ।

**शिवप्रसादिनी**—इस सूत्र के अर्थ को लेकर पूर्व सूत्र में ही बहुत कुछ विचार हो चुका है। तथाऽपि जिज्ञासुओं की जिज्ञासा निवृत्ति के लिए प्रकृत सूत्र पर समग्रता के साथ विचार आरम्भ हो रहा है—पूर्वसूत्रस्थविचाराऽनुसार अन्तिम लकार के अधस्थल से लेकर आरम्भिक आदि गकार के अधस्थल तक में प्रतिलोम (विपरीत) क्रम से आदिभूत एक (१) संख्या को अन्त्य स्थान में रखकर—उससे पूर्व के स्थान में दो गुनी (२) संख्या, पुन: उससे पूर्व चार संख्या, पुन: उससे पूर्व उत्तर संख्या के दो गुणा आठ संख्या, इसी क्रम से दो गुना करके उसके पूर्व के स्थान में अंकों का स्थापन तब तक उन-उन वृत्तों में करते रहना चाहिए, जब तक आदिभूत सर्वशेष गकार न मिल जाय। इस प्रकार अन्तिम संख्या को भी दो गुनी करके और उस दो गुनी संख्या में से एक संख्या का परित्याग कर शेष को वृत्त संख्या समझनी चाहिए ॥२७॥

प्रस्ताराद्विना वृत्तसङ्ख्यापरिज्ञानार्थमाह—

(प्रस्तार के बिना वृत्त संख्या के परिज्ञान के लिए आगे का सूत्र कहा जा रहा है)—

## द्विरर्द्धे ॥८।२८॥

**मृतसञ्जीवनी**—अपनीत इत्यध्याहार:। यदा जिज्ञासेत-षडक्षरे छन्दसि कति वृत्तानि भवन्ति? तदा तां छन्दोऽक्षरसङ्ख्यां भूमौ स्थापयित्वा ततोऽर्धमपनयेत। तस्मिन्नपनीते द्वौ लभ्येते। ततस्तां द्विसङ्ख्यां भूमौ पृथक् प्रस्तारयेत। तत: शेषास्त्रयोऽक्षरसङ्ख्यायां भवन्ति ॥

**शिवप्रसादिनी**—प्रकृत सूत्र में पूर्व सूत्र से अपनयनाऽर्थक (= निवारणाऽर्थक) "जह्यात्" पद की अनुवृत्ति की जानी चाहिए। यहाँ पर जिज्ञासा होती है कि—षडक्षर छन्द में समवृत्त संख्या कितनी होती है? इस प्रकार की जिज्ञासा निवृत्ति के क्रम में सर्वप्रथम उस अक्षर संख्या (६ संख्या) को भूमि पर रखकर के उसका दो भाग में विभाजन कर प्रथम आधे को हटाकर उसके स्थान में "द्विरर्धे" (= अर्थात् अर्धे = आधे भाग को हटा करके उसके स्थान में, द्वि: = दो संख्याओं का लाभ किया जाना चाहिए)। इस (२) संख्या को पृथक् करके रखना होगा ॥२८॥

तेषामर्धयितुमशक्यत्वात् किं कर्तव्यमित्याह—

(यहाँ पर शेष बचा दूसरा जो अर्द्ध भाग है उनकी (३) तीन संख्याएँ हैं। विषम होने के कारण यह भाग के द्वारा विभाग के योग नहीं हैं। अत: इस संख्या के विषय में क्या किया जाना उचित है? इसके समाधानाऽर्थ अग्रिम सूत्र अवतरित हो रहा है)—

## रूपे शून्यम् ॥८।२९॥

**मृतसञ्जीवनी**—विषमसङ्ख्यातो रूपमपनीय तस्मिन्नपनीते शून्यं लभ्यते। तत्र पूर्वलब्धाया द्विसङ्ख्याया अधस्तात् स्थापयेत्, ततो द्विसङ्ख्यावशिष्यते। ततोऽर्धेऽपनीते

